॥ श्री श्री विश्वेश्वरो जयति ॥

# ॥ यति धर्म्म निर्णयः ॥

## पूर्व्व भागः

अविमुक्त वाराणसीक्षेत्रे कामरूपमठस्थ पूज्यपाद श्रीमत् परमहंस परिव्राजकाचार्य्य श्रीमहादेवानन्द तीर्थ स्वामिनः शिष्येण श्रीपरमानन्द तीर्थ स्वामिना संगृहीत यतिधर्म्मनिरूपणमुपक्रम्य वेदस्मृतिपुराणेतिहासोक्त चतुर्वर्णाश्रम धर्म्मः प्रदर्शितः ॥

वासिष्ठ श्रीशिवनाथशर्म्मणा परिशोधितः

श्रीयुक्त सेठजि किशोरिलाल
श्रीयुक्त सेठजि मकुन्दलाल महोदययोः ।

संपूर्ण साहाय्येन मुद्रितोऽयंग्रन्थः ।

॥ काशी ॥

नागेश्वरयन्त्रालये मुद्रितश्च

संवत् १९६७

॥ श्रीश्रीविश्वेश्वरो विजयते ॥

# यतिधर्म्मनिर्णयः ।

## पूर्व्वभागः ।

अविमुक्त वाराणसीक्षेत्रे कामरूपमठस्थ पूज्यपाद
श्री १०८ मत् परमहंस परिव्राजकाचार्य्य
श्रीमहादेवानन्दतीर्थस्वामिनाम् शिष्येण
श्रीपरमानन्दतीर्थस्वामिना संगृहीतो
वेदस्मृतिपुराणेतिहासोक्तचतुर्थ-
र्थाश्रमधर्म्मप्रदर्शनपरः ॥

---

काशीराजसभापण्डितकाशीधर्म्मसभाध्यक्ष
वाशिष्ठ
श्रीप्रियनाथतत्त्वरत्नेन परिशोधितः ।

श्रीयुक्त सेठजी किशोरीलाल श्रीयुक्त सेठजी मुकुन्दलाल
महोदययोः सम्पूर्णसाहाय्येन
काश्याम्
नागेश्वरयन्त्रालये मुद्रितश्च ।
सम्वत् १९६४

# यतिधर्म्मनिर्णयोत्तरभागस्य सूचीपत्रम् ।

# सूचीपत्रम् ।



पूर्व्वभागः समाप्तः ।

* ॐ तत् सत् *

# ॥ यति धर्म्मनिर्णयः संन्यासदर्पण ॥

॥ ॐ श्रीगणेशाय नमः ॥

ॐ नारायणाय नमः। ॐ श्रीगुरवे नमः।

॥ ॐ श्रीसरस्वत्यै नमः ॥

नमः श्रीगुरवे नित्यं सच्चिदानन्द रूपिणे ॥
तस्य पादाम्बुजे स्मृत्वा यतिधर्म्मो वितन्यते ॥ १ ॥
भिक्षुणां पटलं यत्र विश्रान्ति मगमत् सदा ॥
तत्रैपदं ब्रह्मतत्त्वं ब्रह्ममात्रं करोतु माम् ॥ २ ॥
सन्न्यासोपनिषद्वेद्यं सन्न्यासिपटलाश्रयम् ॥
सत्ता सामान्यविभवं स्वमात्रमितिभावये ॥ ३ ॥
महादेवं गुरुं नत्वा तीर्थानन्दस्वरूपिणम् ॥
परमानन्दशिष्येण सन्न्यास ग्रन्थ उच्यते ॥ ४ ॥

॥ ज्ञानं संन्यास लक्षणमिति योगशास्त्रे ॥

एकमेवाद्वितीयं यद्गुरोर्वाक्येन निश्चितम् ॥
एतदेकान्त मित्युक्तं न मठो न वनान्तरम् ॥ १ ॥
असंशयवतां मुक्ति संशयाविष्टचेतसाम् ॥
न मुक्तिर्जन्मजन्मान्ते तस्माद्विश्वासमाप्नुयात् ॥ २ ॥

कर्म्मत्यागान्न संन्यासो न प्रेषोच्चारणेन तु ॥
सन्ध्यो जीवात्मनो रैक्यं सन्न्यासः परिकीर्त्तितः ॥ ३ ॥
वमनाहारवद्यस्य भाति सर्व्वैषणादिषु ॥
तस्याधिकारः सन्न्यासे त्यक्त देहाभिमानिनः ॥ ४ ॥
( भागवते ) ऋतञ्च सूनृतावाणी कविभिः परिकीर्त्तिता ॥
कर्म्मस्वसङ्गमः शौचं त्यागः संन्यास उच्यते ॥ ५ ॥

## ॥ नृसिंहोत्तरतापन्युपनिषदि ॥

वानप्रस्थशतमेकमेकेन यतिः तत् समम् ॥
यतीनान्तु शतं पूर्णमेक मेकेन रुद्रजापकेन तत् समम् ।६।

॥ निरालम्बोपनिषदि ॥ स्वप्रकाशमानन्दंघनं शून्य मभवदेवंवित् स्वप्रकाशं परमेव ब्रह्मभवति ते देवाः पुत्रैषणायाश्चयाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा वधिरा मुग्धाः क्लीवा मूका उन्मत्ता इवि परिवर्त्तमानाः शान्ता दान्ता उपरता स्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परंब्रह्मात्म प्रकाशं शून्यं जानन्तः तत्रैव ॥ ७ ॥

## ॥ सर्व्वोपनिषदि ॥

निरालम्वं समाश्रित्य सालम्वं विजहाति यः ॥
स संन्यासी च योगी च कैवल्यं पदमश्नुते ॥ ८ ॥

॥ कः संन्यासीत्याशंकयाह ॥ संन्यासी सर्व्वधर्म्मान् परित्यज्य निर्म्ममो निरहंकारो भूत्वा ब्रह्मेष्टं शरणमुपगम्य

तत्त्वमसि सर्व्वं खल्विदं ब्रह्म नेहनानास्ति किञ्चनेत्यादि महावाक्यार्थानुभवज्ञानात् ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स पूज्यः स योगी स परहंसः सोऽवधूतः स ब्राह्मण इति ॥ ९ ॥

## ॥ निरालम्बोपनिषदि ॥

यतीनां भूषणं ज्ञानं सन्तोषो हि द्विजन्मनाम् ॥
सम्यक् परीक्ष्यदातव्यं मासं षण्मासवत्सरम् ॥ १० ॥

## ॥ महाभारते शान्तिपर्व्वणि युधिष्ठिरवाक्यमाह ॥

तपसा महदाप्नोति बुद्ध्या वै विन्दते महत् ॥
त्यागेन सुखमाप्नोति सदा कौन्तेय तत्त्ववित् ॥ ११ ॥
भ्रातुरस्य हितंवाक्यं श्रृणु धर्म्मज्ञसत्तम ॥
दण्ड एव हि राजेन्द्र क्षत्रधर्म्मो न मुण्डनम् ॥ १२ ॥
सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च ॥
पर्य्यायतः सर्व्वमवाप्नुवन्ति तस्माद्धीरो नैवहृष्येन्न शोचेत् ॥
सन्तोषात् स्वर्गमाप्नोति सन्तोषात् परमं सुखम् ॥
याभिः प्रत्याहरेत् कामान् कुर्म्मोऽङ्गानीव सर्व्वशः ॥ १४ ॥
यदाचायं न बिभेति यदा चास्मान्न बिभ्यति ॥
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ १५ ॥
यदा न भावं कुरुते सर्व्वभूतेषु पापकम् ॥
कर्म्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १६ ॥
विनीत मानमोहश्च वहुसङ्गविवर्जिनः ॥
तदात्मज्योतिषः साधो र्निर्व्वाण मुपपद्यते ॥ १७ ॥

अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर ॥
समदर्शिनो भूतेषु भैक्षाश्रमपदं भवेत् ॥ १८ ॥
सर्व्वाण्येतानि कौन्तेय विद्यन्ते मनुजर्षभ ॥
साध्वाचारप्रवृत्तानां चतुराश्रम्य कारिणाम् ॥ १९ ॥
वेत्ति ज्ञानं विसर्गञ्च निग्रहानुग्रहं तथा ॥
यथोक्त वृत्तेर्धीरस्य क्षेमाश्रमपदं भवेत् ॥ २० ॥
अर्हान् पूजयतो नित्यं संविभागेन पाण्डव ।
सर्व्वतस्तस्य कौन्तेय भैक्षाश्रमपदं भवेत् ॥ २१ ॥
वेदाध्ययन नित्यत्वं क्षमाथाचार्य्य पूजनम् ॥
अथोपाध्याय शुश्रूषा ब्रह्माश्रमपदं भवेत् ॥ २२ ॥
आह्निकं जपमानस्य देवान् पूजयतः सदा ॥
धर्म्मेण पुरुषव्याघ्र धर्म्माश्रमपदं भवेत् ॥ २३ ॥
कर्म्मणा वर्द्धते धर्म्मो यथा धर्म्मस्तथैवसः ॥ इति ॥ २४ ॥

ईश्वरार्पितं नैष्कर्म्म्यव्यतिरेकेन न सिध्यति ( न लभते ) अतएव तद्दर्शयाति भागवते एकादशस्कन्दे ।

## ॥ आविहोत्रउवाच ॥

कर्म्माकर्म्म विकर्म्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ २५ ॥
परोक्षवादो वेदोऽयं वालानामनुशासनम् ॥
कर्म्मणाख्याय कर्म्माणि विधत्ते ह्यगदं यथा ॥ २६ ॥
नाचरेद्यस्तु वेदोक्तं स्वयमज्ञो जितेन्द्रियः ।
विकर्म्मणा ह्यधर्म्मेण मृत्योर्मृत्यु मुपैति सः ॥ २७ ॥

वेदोक्तमेव कुर्व्वाणो निःसङ्गो ऽर्पितमीश्वर ॥
नैष्कर्म्मां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ २८ ॥
य आशुहृदयग्रन्थि निर्जिहीर्षुः परात्मनः ॥
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ २९ ॥
लब्धानुग्रह आचार्य्यात्तेन संदर्शितागमः ॥
महापुरुषमभ्यर्च्चेन्मूर्त्याभिमतयात्मनः ॥ ३० ॥
शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥
पिण्डं विशोध्य सन्न्यासः कृतरक्षोऽर्चयेद्धरिं ॥ ३१ ॥
(उद्धवउवाच) योगेश योगविन्यास योगात्मन् योगसंभव ॥
निश्रेयसाय मे प्रोक्त स्त्यागः सन्न्यासलक्षणम् ॥ ३२ ॥
त्यागोयं दुष्करो भूवन् कामानां विषयात्मभिः ॥
सुतरां त्वयि सर्व्वात्मन्न भक्तैरिति मे मतिः ॥ ३३ ॥

॥ श्रीभगवानुवाच ॥

वद्धोमुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥
गुणस्य मायामूलत्वान्न मे मोक्षो न वन्धनम् ॥ ३४ ॥
एकस्यैव ममांशस्य जीवस्यैव महामते ॥
बन्धोऽस्याविद्ययानादि विद्यया च तथेतरः ॥ इति ॥ ३५ ॥

## (अथ वायुपुराणे अधिकारि विभेदेनाह)

अधिकारि विभेदेन कर्म्मज्ञानोपदेशतः ॥
एतत्सर्व्वं जगन्न्यूनं शब्दब्रह्मात्ममूर्त्तिभिः ॥ १ ॥
दानाच्छ्रेय स्तथा यज्ञो यज्ञाच्छ्रेय स्तथातपः ॥
सन्न्यास स्तपसः श्रेयान् तस्माज्ज्ञानं गुरुःस्मृतम् ॥ २ ॥

सन्न्यासः कर्म्मणोन्यासः कृतानामकृतैः सह ॥
कुशलाकुशलानाञ्च ग्रहणं त्याग उच्यते ॥ ४ ॥
अव्यक्ताद्‌येऽविशेषाच्च विकारोऽस्मिन्न चेतने ॥
चेतनाऽचेतनान्यत्वविज्ञानं ज्ञानमुच्यते ॥ इति ॥ ४ ॥

## ॥ वायुपुराणे ऋषिलक्षणमाह ॥

एवमाश्रमधर्म्माणां साधनात् साधवः स्मृताः ॥
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥ ५ ॥
न च देवा न पितरो मुनयो न च मानवाः ॥
अयं धर्म्मोह्ययं नेति ब्रुवन्तोऽभिन्न दर्शनाः ॥ ६ ॥
धर्म्माधर्म्माविहप्रोक्तौ शब्दावेतौ क्रियात्मकौ ॥
कुशलाकुशलं कर्म्म धर्म्माधर्म्माविति स्मृतौ ॥ ७ ॥

( इति ऋषिलक्षणमुक्तं )

## ॥ जीवन्मुक्त पुरुषलक्षणमाह ॥

स्वशरीर व्यतिरिक्तं सर्व्वं त्यक्त्वा षट्‌पद वृत्यास्थित्वा स्वरूपानु सन्धानं कुर्व्वन् सर्व्वमनन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति स विराट् सपरिव्राट् सर्व्वक्रियाकारकनिर्व्वर्त्तकः । गुरुःशिष्यः शास्त्रादि विनिर्मुक्तःसर्व्वसंसार विसृज्य माया मोहितः परिव्राट् वाच्यः। कथं निर्धनिकः सुखी धनवान् ज्ञानाज्ञानोभयातीतः सुखदुःखातीतः स्वयंज्योतिः प्रकाशःसर्व्वं वेद्यः सर्व्वज्ञः सर्व्वसिद्धिदः सोऽहमिति तद्विष्णोः परमं पदं यत्रगत्वा न निवर्त्तन्ते योगिनः ॥ इति ॥

---

॥ रामरहस्ये उपनिषदि ॥

भक्तिमुक्ति पदं चैतत्तस्मादप्यतिरिच्यते ॥
मनुष्येतेषु सर्व्वेषामधिकारोऽस्ति देहिनाम् ॥ १ ॥
॥ मनुः ॥ श्रुतिस्मृति सदाचारा आज्ञारूपाहि मे मताः ॥
आज्ञाच्छेदी ममद्रोही स याति नरकं सदा ॥ २ ॥
जन्मना जायते शूद्रः कर्म्मणा जायते द्विजः ॥
जीवन् कर्म्मपरित्यागं यः करोति नराधमः ॥ ३ ॥
समूढो नरकं याति यावदाभूतसंप्लवम् ॥ इति ॥

॥ अस्यार्थः ॥ यत आत्मनः श्रेयःसाधनं तपोयोगादिकमाचरति ततश्च मोक्षं प्राप्नोति । किन्तु वेदविहितधर्म्ममुत्सृज्य यः कामंचरते यथेष्टं इच्छते वर्त्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति । इति आश्रमधर्म्मानुकुलं कर्म्म सर्व्वेषामलङ्घ्यं तस्यैव तपःशब्दवाच्यत्वात् सन्न्यासिनामपि विहितं कर्म्मकर्त्तव्यमेव कर्म्महीने तु पातित्यमिति दर्शनात् ॥ अहरहः सन्ध्यामुपासीत उदिते सूर्य्ये प्रातर्जुहोति, उद्यन्तमस्तमयपर्य्यन्तमादित्यमभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते ऽसावादित्यो ब्रह्मेति ब्रह्मैवसद्ब्रह्माप्येति य एवं वेद इति च सर्व्वे वेदा ब्राह्मणोचितं नित्यकर्म्मप्रशंसन्ति श्रौतस्मार्त्तादिकं यतः कर्म्मार्थ मेव श्रुतिप्रवृत्तिः ॥ अतः सर्व्वैराश्रमिभिर्वेदोक्तं कर्म्म अवश्यकर्त्तव्यमेव ।

देवार्च्चनस्नान भिक्षाचर्य्यादिकं कर्म्म यतीनाञ्च विद्यत एव ॥ ब्रह्मचारिण स्तु स्नानसन्ध्यास्वाध्यायेश्वरपूजागुरुकूलवासा

दिकं कर्म्म उचितं । अतःस्वकर्म्मभ्रष्टाणां ब्राह्मण्यहानि प्रसाक्तिः स्यात् ॥ इति ॥

विप्राणां कर्म्मणाधर्म्मं साध्यं स्यादिति मे मतम् ॥
धर्म्मेण सर्व्वपापौघो नष्टं याति शुचिव्रतात् ॥ ४ ॥
पापसंघे तथा नष्टे मनः शुद्धिःप्रजायते ॥
शुद्धे मनसि सर्व्वात्मसाक्षात् कारो भवत्यलम् ॥ ५ ॥
स एवमुक्तः सर्व्वेषां ब्राह्मणानां पुरः स्थितः ॥
वेदनिन्दापरा ये तु तदाचार विवर्जिताः ॥ ६ ॥
ते सर्व्वे नरकं यान्ति यद्यपि ब्रह्मवीजजाः

( इति मनुवचनादुक्तं ) ( मैत्रेय उपनिषदि )

इन्द्रियार्थे विमूढस्यानृताः कर्म्मवशानुगाः ॥ ७ ॥
चित्तमेव हि संसार स्तत् प्रयत्नेन शोधयेत् ॥
चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभम् ॥ ८ ॥
मनो हि द्विविधं प्रोक्तं शुद्धं चा शुद्धमेवच ॥
अशुद्धं कामसंकल्पं शुद्धंकाम विवर्ज्जितम् ॥ ९ ॥
मनएवमनुष्याणां कारणं वन्धमोक्षयोः ॥
वन्धाय विषया सक्तं मुक्त्यैनिर्व्विषयं स्मृतम् ॥ १० ॥
सत्यशौचरतोयस्तु देवतातिथि पूजने ॥
स याति ब्रह्मणोलोकं यावदिन्द्रा श्चतुर्दश इति ॥ ११ ॥
( पुराणेऽपि ) द्वेरूपेवासुदेवस्य चरञ्चाचरमेवच ॥
चरं सन्यासिनां रूपमचरं प्रतिमादिकमिति ॥ १२ ॥
(गीतायां) क्षरःसर्व्वाणि भूतानि कुटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मे त्युदाहृतः ॥ १३ ॥

सर्व्वभूतेषु चात्मानं सर्व्वभूतानिचात्मनि ॥
संपश्यन् ब्रह्मपरमं याति नान्येन हेतुना ॥ १४ ॥
अद्वैतं ज्ञानमत्युग्रं तेन मुक्तो भवेन्नरः ॥
इहामुत्रैक रूपत्वात् प्राणिनः कर्म्म संक्षये ॥ १५ ॥
देहत्यागो विमुक्तिःस्यादिति वेदविदो विदुः ॥
अद्वैतनिन्दां कुर्व्वन्ति ये मूढादुःखभोगिनः॥ १६ ॥
ते सर्व्वे नरकं यान्ति मातृनिन्दापरा यथा ॥
अद्वैतनिरतो यत्र सदेशः पुण्यवर्द्धनः ॥ १७ ॥
तद्दर्शनपरा ये तु ते मुक्ताः स्युर्नसंशयः ॥
आत्मनाश्च सहस्राणि वहूनि भरतर्षभ ॥ १८ ॥
योगी कुर्य्यात् बलं प्राप्य तैश्च सर्व्वामहीं चरेत् ॥
प्राप्नुयाद्विषयान् कांश्चिदुग्रहं सतपश्चरेत् ॥ १९ ॥
संहरेच्च पुनस्तानि सूर्य्यस्तेजोगणानिव ॥

( शुद्धचित्तस्य संन्यासिनः श्रेष्ठत्वमाह )

संन्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ ॥ ३० ॥
तयो स्तु कर्म्मसंन्यासात् कर्म्मयोगो विशिष्यते ॥
ब्रह्मण्याधाय कर्म्माणि सङ्गंत्यक्त्वा करोतियः ॥ ३१ ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
कायेन मनसा बुद्ध्या केवलै रिन्द्रियैरपि ॥ ३२ ॥
योगिनः कर्म्म कुर्व्वन्ति सङ्गंत्यक्त्वात्मशुद्धये ॥
सन्न्यास स्तु १ हावाहो दुःखमाप्तुमयोगतः ॥
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ३३ ॥

अस्यार्थः॥ पञ्चमाध्याये गीतायां अभिप्रायमाह । यस्मात्

सन्न्यासः कर्म्मयोगस्य मोक्षैक फलकत्वं प्रदर्शित न्यायेनासिद्धं तस्माद पक्वान्तः करणेन मोक्षार्थिना कर्म्मैव कर्त्तव्यं न तु सन्न्यासः। अपक्वान्तरात्मनः सन्न्यासो दुर्घट इत्युपदिशनाह। सन्न्यास इति ॥ अयोगत स्त्व योगे कर्म्मयोगानुष्ठानजन्यचित्तशुद्ध्यभावे संन्यासो ज्ञाननिष्ठालक्षण आप्तुमधिगन्तुं दुःखं दुर्घटं चित्तशुद्ध्येकसाध्यत्वात् ज्ञाननिष्ठालक्षण सन्न्यासस्य कारणा भावे कार्य्याभाव इति न्यायेन कर्म्मसंभावितचित्तशुद्ध्य भावे संन्यासो न सिध्यतीत्यर्थः। एवं संन्यासस्य कर्म्मयोगानुष्ठानसंभावितचित्तप्रसादैकलभ्यत्वं निश्चित्य इदानीं कर्म्मयोगेन सुपक्वान्तः करणस्य तु मुमुक्षोः संन्यासः कर्त्तव्य इत्याशयेनाह ॥ योगेति ॥ गीताषष्ठाऽध्याये । अनाश्रितः कर्म्मफलं कार्य्यकर्म्म करोतियः ॥

स संन्यासी च योगी च न निरग्नि र्न चाक्रियः ॥ ३४ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धिपाण्डव ॥

न ह्य संन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ ३५ ॥

॥ अस्यार्थः ॥ अविशुद्धचित्तत्वात् संन्यासोऽपि नास्ति । इत्याशंका । ब्रह्मणीति ॥ ब्रह्मण्याध्याय परमेश्वरे समर्प्य तत् फले च सङ्गंत्यक्त्वा यः कर्म्माणि करोति । असौ पापेन बन्धहेतु तया पापिष्ठेन पुण्यपापात्मकेन कर्म्मणा न लिप्यते । यथा पद्मपत्रमम्भसीव ॥ बन्धकत्वाऽभावमुक्त्वा मोक्षहेतुत्वं सदाचरणं दर्शयति। कायेन स्नानादि मनसाध्यानादि बुद्ध्या तत्त्व निश्चयादि केवलैः कर्म्माभिनिवेशरहितैरिन्द्रियैः श्रवण कीर्त्तनादि लक्षणं कर्म्मफलसङ्गंत्यक्त्वा चित्तशुद्धये कर्म्मयोगिनः

कुर्वन्ति ॥ परमेश्वरैकनिष्ठः सन् कर्म्मणां फलंत्यक्त्वा कर्म्माणि कुर्वन्न आत्यन्तिकी शान्तिं मोक्षं प्राप्नोति । एवं तावत् चित्तशुद्धिशून्यस्य संन्यासात् कर्म्मयोगो विशिष्यते इत्ये तत् ॥ शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह ॥ सर्व्वकर्म्मणीति वशी जितचित्तः सर्व्वकर्म्माणि विक्षेपकानि मनसाविवेक युक्तेन संन्यस्य सुखंयथा भवति एवं ज्ञाननिष्ठः सन्नास्ति ।

॥ इति भावः ॥

सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखंवशी ॥
नवद्वारे पुरेदेही नैवकुर्व्वन्न कारयन् ॥ इति ॥ ३६ ॥

## सुतसंहितायां ।

चित्तपाकानु गुण्येन प्रव्रज्यां कुरुते पुनः ॥
तत्र मुमुक्षुः संन्यासी प्रेरितः परमेश्वरात् ॥ १ ॥

## गीता षोड़शाऽध्याये ।

अभयं सत्त्वसंशुद्धि र्ज्ञानयोग व्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तपआर्जवं ॥ १ ॥

॥ अस्यार्थः ॥ पूर्व्वाध्यायान्ते एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेत्युक्तं तत्र क एतत्तत्त्वं बुध्यते को वानवु- ध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवे कार्थं निरूपिते हि कार्य्यार्थे चाधिकारि जिज्ञासा भवति तदुक्तं भट्टैः ॥ भारो यो येन वोढव्यः स प्रागान्दोलितो यदा । तदा कस्तस्य वोढेति शक्यं कर्त्तुं निरूपण मिति ॥ तत्राधिकारी विशेषण भूतां दैवीं संपदमाह । अभयमिति । अभयं भयाभावः । इत्याद्युक्तं ॥ ११ ॥

## ॥ नारदोपनिषदि परिव्राजके ॥

संसारदोषदृष्ट्यैव विरक्ति र्जायते सदा ॥
विरक्तस्य तु संसारात् सन्न्यासः स्यात् न संशयम् ॥ १ ॥
विरक्तः प्रव्रजेद्धीमान् सरक्त स्तु गृहे वसेत् ॥
सरागोनरकं याति प्रव्रजन् हि द्विजाधमः ॥ २ ॥
यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरंकरः ॥ ३ ॥
यदा मनसि संजातं वैतृष्ण्यं सर्व्ववस्तुषु ॥
तदा सन्न्यास मिच्छन्ति पतितः स्याद्विपर्य्यये ॥४॥ इति ॥

## अथेदानीं अन्तः करण शुद्धिं विना सर्व्व कर्म्म संन्यास त्यागे न सम्भवति तदाह ।

(टीका) सर्व्व कर्म्म संन्यासो वा इति निर्विवादं चतुर्थे निर्णीतं ॥ अज्ञेन त्वन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्तये कर्म्माण्यनुष्ठेयानि । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन इति श्रुतेः ॥ सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ इति भगवद्वचनाच्च एवं सर्व्वकर्म्माणि ज्ञानार्थानि तथा सर्व्व कर्म्मसंन्यासोऽपि ज्ञानार्थः श्रुयते एतमेव प्रव्राजिनो लोक मिच्छन्तः प्रव्रजन्ति. शान्तो दान्त उपरतस्तितिक्षुः समाहितो भुत्वात्मन्येवात्मानं पश्येत् प्रथमकृत सन्न्यासेनैव ज्ञानाधिकार लाभे तदुत्तर काले कर्म्मानुष्ठान वैयर्थ्यञ्च तस्मादादौ भगवदर्पण बुद्ध्या निष्काम कर्म्मानुष्ठानादन्तः करण शुद्धौ तीव्रेण वैराग्येण विविदिषायां दृढायां सर्व्वकर्म्मसंन्यासः श्रवणमननादि-

रूपवेदान्तवाक्य विचाराय कर्त्तव्य इति भगवतो मतं तथा चोक्तं ॥ न कर्म्मणा मनारम्भा न्नैष्कर्म्म्यं पुरूषोऽश्नुते ॥ इति च आरुरुक्षो र्मुने योंगं कर्म्मकारण मुच्यते । योगारुढस्य तस्यैव शमः कारण मुच्यते ॥ इति च योगोऽत्र तीव्रवैराग्य पूर्व्विका विविदिषा तदुक्तं वार्त्तिककारैः प्रत्यग् विविदिषा सिद्ध्यै वेदानुवचनादूय ब्रह्मावाप्त्यैतु तत्याग ईप्सन्तीति श्रुते र्व्वलादिति स्मृतिश्च । कषाय पक्तिः कर्म्माणि ज्ञानन्तु परमागतिः । कषाये कर्म्मभिः पक्षे ततो ज्ञानं प्रवर्त्तते ॥ इति मोक्षधर्म्मे च ॥

कषायं पाचयित्वा च श्रेणी स्थानेषु च त्रिषु ॥
प्रव्रजेच्च परंस्थानं परिव्राज्यमनुत्तमं ॥
भावितैः कारणैश्चायं वहूसंसारयोनिषु ॥ १ ॥
आसादयाति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ २ ॥
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥ इति श्लोकः ॥

॥ टीका ॥ त्रिष्वाश्रमेषु कोन्वर्थो भवेत् परमभीप्सत इति मोक्षं वैराग्यं एतेन क्रमाश्रम सन्न्यासौ द्वावपि दर्शितौ तथा च श्रुतिः । ब्रह्मचर्य्यं समाप्य गृहीभवेद् गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेदिति तस्मादस्याविरक्तादशायां कर्म्मानुष्ठानमेव तस्यैव विरक्तादशायां सन्यासः श्रवणाद्यवसरदानेन ज्ञानार्थं इति ॥

कर्म्मणां यावज्जीवादि श्रुति विहितानां नित्यानां नैमित्तिकानां च सन्न्यासं त्यागं जिज्ञासुनामज्ञं प्रति कथयसि

वेदमुखेन पुनस्तद्विरुद्धं योगञ्च कर्म्मानुष्ठानरूपं शंससि एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेत्यादिना वाक्यद्वयेन ॥

निराशीर्यत चित्तात्मा त्यक्तसर्व्वपरिग्रहः शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति किल्विषम् ॥ छित्त्वेनं संशयं योगमात्तिष्ठोत्तिष्ठ भारत ॥ इति गीतावाक्यद्वयेन वा तत्रैकमज्ञं प्रतिकर्म्म तत्त्यागयोर्विधानाद्युगपदुभयानुष्ठानासम्भवात् एतयोःकर्म्म तत्त्यागयोर्म्मध्ये यदेकं श्रेयः प्रशस्यतरं मन्यसेकर्म्मवा तत्त्यागं तावन्मे ब्रुहि सुनिश्चितं तव मतमनुष्ठानाय ॥ इति मधुसूदनी टीका ॥ उक्तं ॥

## ॥ गीतायां १८ अष्टादशाध्याये ॥

सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुं ।
त्यागस्य च हृषीकेश पृथक् केशिनिसूदन ॥

मधुसूदनीटीकाः ॥ अभिप्राय माह ।

इदानीं तु सन्न्यास त्रैविध्यकथनेन सन्न्यासिनामपि त्रैविध्यं वक्तव्यं तत्रतत्त्वबोधनानन्तरं यः फलभूतः सर्व्वकर्म्मसन्न्यासः ॥ स चतुर्द्दशाऽध्याये गुणातीतत्त्वेन व्याख्यातत्त्वान्न सात्त्विकराजसतामस भेदमर्हति ॥ योऽपि तत्त्वबोधात् प्राक् तदर्थं सर्व्वकर्म्मसन्न्यास स्तत्त्व बुभुत्सया वेदान्तवाक्य विचाराय भवति सोऽपित्रैगुण्यविषया वेदानिस्त्रैगुण्योभवार्ज्जुने त्यादिना निर्गुणत्वेन व्याख्यातः ।

यस्त्वनुत्पन्न तत्त्वबोधानामनुत्पन्न तत्त्वबुभुत्सुनां च कर्म्मसन्न्यासः स सन्न्यासीच योगीचेत्यादिना गौणो व्याख्यात स्तस्य त्रैविध्य सम्भवात्तद्विशेषं बुभुत्सुः अविदुषामनुपजातविविदिषानाञ्च कर्म्माधिकृतानामेवकिञ्चित् कर्म्म ग्रहेण किञ्चित् कर्म्मपरित्यागो यः स त्यागांशगुण योगात् सन्न्यासशब्देनोच्यते ॥ एतादृशस्यान्तःकरण शुद्ध्यर्थमविद्वत् कर्म्माधिकारि कर्त्तृकस्य संन्यासस्य केनचिद्रूपेण कर्म्मत्यागस्य तत्त्वं स्वरूपं पृथक् सात्त्विक राजस तामस भेदेन वेदितुमिच्छामि त्यागस्य च तत्त्वं वेदितुमिच्छामि किं संन्यासत्यागशब्दौ घटपटशब्दाविव भिन्न जातीयार्थौ किं वा ब्राह्मण परिव्राजकशब्दाविवैका जातीयार्थौ इति प्रश्नः ॥ श्रीभगवानु वाच ॥ काम्यानां कर्म्मणां न्यासं संन्यासं कवयो विदुः ॥ सर्व्वकर्म्मफल त्यागं प्राहुस्त्यागं विचक्षणाः ॥

॥ टीका ॥ तत्र प्रश्ने निराकरणायोत्तरमाह ॥ काम्यानामिति । काम्यांनां फलकामनया चोदितानामन्तः करण शुद्धावनुपयुक्तानां कर्म्मणामिष्टि पशुसोमादीनां न्यासं त्यागं संन्यासं विदु र्जानन्ति कवयःसूक्ष्मदर्शिनः ॥ केचित् तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति॥ वाक्येन वेदानुवचनशब्दोपलक्षितस्य ब्रह्मचारि धर्म्मस्य यज्ञदानशब्दाभ्यामुपलक्षितस्य । गृहस्थधर्म्मस्य तपो ऽनाशकशब्दाभ्यामुपलक्षितस्य ॥ वानप्रस्थधर्म्मस्य नित्यस्य नित्येन हितेन पापक्षयेन द्वारेणात्मज्ञानार्थत्वंबो-

ध्यते ॥ न च विनियोग वैयर्थ्यं ॥ ज्ञानमुत्पाद्यते पुंसां क्षयात् पापस्य कर्म्मणः ॥ इत्यनेनैव लब्धत्वादिति वाच्यं विनियोगा भावे हि सत्यपि नित्य कर्म्मानुष्ठाने ज्ञानं स्याद् वा न वास्यात् सति तु विनियोगे ज्ञानमवश्यं भवेदेवेति नियमार्थत्वात् तस्मान्नित्य कर्म्मणामेव वेदेन विविदिषायां वा विनियोगात् सत्त्वशुद्धि विविदिषोत्पत्ति पूर्व्वक वेदनार्थिना नित्यान्येव कर्म्माणि भगवदर्पणबुद्ध्याऽनुष्ठेयानि काम्यानि तु सर्व्वाणि सफलानि परित्याज्यानीत्येक मतं । अपरमतं सर्व्वकर्म्म फलत्यागं प्राहुस्त्यागं विचक्षणाः सर्व्वेषां काम्यानां नित्यानां च प्रतिप्रदोक्त फलत्यागं सत्त्व शुद्ध्यर्थितया विविदिषा संयोगे नानुष्ठानं विचक्षणा विचारकुशलास्त्यागं प्राहुः इति ॥ ईश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्ज्जितः शुद्धसत्त्वस्य च ज्ञाननिष्ठा ॥ योग्यता प्राप्तिद्वारेण ज्ञानोत्पत्ति हेतुत्वे च निःश्रेयसहेतुत्वमपि प्रतिपद्यते ॥ संन्यास लक्षणं इति गीतान्ते भगवता उक्तंअर्ज्जुनाय ।

सर्व्व धर्म्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वां सर्व्व पापेभ्यो मोक्षयिष्यामि मा शुच ॥ १ ॥

शंकरानन्दसरस्वती टीकाभिप्रायमाह । एवं आरुरुक्षो मोक्षार्थमीश्वरैकशरणत्वेन कर्त्तव्यः कर्म्मयोग एवेति निर्धार्य्यत्वारूढस्य आविर्भूतात्मविज्ञानस्याप्रतिबद्धत्व सिद्धये सर्व्वकर्म्मसंन्यासपूर्व्वकं ज्ञाननिष्ठैव कर्त्तव्येति निर्धारयितुमाह ॥ सर्व्वधर्म्मानिति । नन्वस्य वचनस्य कर्म्म प्रकरणान्तः पातित्वात् कर्म्मिपरत्वमेव न त्वकर्म्मिपरत्व

मितिचेन्न सर्व्वधर्म्मानिति सर्व्वकर्म्मसंन्यासश्रवणात् न ह्यारुरुक्षो र्मुमुक्षो र्गृहिणः सर्व्वकर्म्मसंन्यास उपयुज्यते ( ये त्वेतदभ्यसूयन्तो नानु तिष्ठन्ति मे मतं ॥ सर्व्वज्ञान विमूढां स्तान् विद्धि नष्टान चेतस इति ) सर्व्वकर्म्मवहिष्कृत इति ॥ तद्विहीनः पतत्येव ह्यालम्बरहिताऽन्धवदिति स्मरणात् सर्व्वकर्म्मपरित्यागे दुर्ब्राह्मणत्वपातितत्वादि दोषापत्तेः । ननु मामेकं शरणं व्रजेतीश्वरभजनात्मकस्य कर्म्मणो विहितस्यात्यक्तत्वादुक्तदोषानसम्भवन्तीति चेन्न (स्वकर्म्मणा तमभ्यर्च्येति) स्मरणान्नामकीर्त्यादि लक्षणस्य कर्म्मणः श्रुतिस्मृत्यविहितत्वात् स्वधर्म्मत्वानुपपत्ते र्विहितत्यागाविहितकरणदोषौ च प्रसज्येयातां ( श्रेयान् स्वधर्म्मो विगुण ) इति विगुणस्यापि स्वधर्म्मस्य श्रेष्ठत्व स्मरणात् ( नियतं कुरुकर्मत्वं कर्म्मज्यायोह्य कर्म्मण ) इति कर्म्मण्येवाधिकारस्त इति न कर्म्मणामनारम्भादिति न हिसंन्यसनादेव सिद्धिसमधिगच्छतीति । तस्माद सक्तः सततं कार्य्यं कर्म्म समाचरेति ॥ मत् कर्म्म कृन्मत् परम इति ॥ यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेवतदिति ॥ उपनयनं वेदाध्ययनं फलवन्ति च कर्म्माणीति दारं कृत्वाग्नीनाधायकर्म्माण्यारभन्त इतिपाणिग्रहणादि गृह्यं परिचरेदिति ॥ उदिते सूर्य्ये प्रातर्जुहोति ॥ यावज्जीवाग्निमहोत्रं जुहोतीत्यादि श्रुति स्मृति कोटिभि र्ब्राह्मणादेर्वैदिकस्यैव कर्म्मणः स्वधर्म्मत्वेन कर्त्तव्यत्वविधानात् ॥ ननु सर्व्वधर्म्मान् परित्यज्येत्यत्र लक्षणया सर्व्वकर्म्मफलत्याग एवोच्यते न तु कर्म्मपरि-

त्याग स्ततः कर्म्मप्रकरणाङ्गत्वमेवास्य वचनस्येतिचेन्न सम्बन्धानुपपत्तिभ्यां लक्षणेति न्यायेनाऽत्रार्थानुपपत्त्यभावाल्लक्षणाऽप्रसक्ते र्मुख्यस्य गत्यन्तराभावे खलु लक्षणा गत्यन्तराभावाभावाल्लक्षणा नात्रप्रसज्यते । कथं गत्यन्तर मिति चेदुच्यते ॥ लोकेस्मिन् द्विविधानिष्ठा पुराप्रोक्ता मयानघ । ज्ञान योगेन साङ्ख्यानां कर्म्मयोगेन योगिना मिति ॥ योगिनामारुरुक्षानां कर्म्मिणा कर्म्मयोगेन निष्ठा सांख्यानामारूढानां संन्यासिनां ब्रह्मविदां ज्ञानयोगेन निष्ठेति निष्ठाद्वय मुपक्रम्य ( नियतं कुरु कर्म्मत्वमिति ) कर्म्मयोगमारभ्य ॥ प्रतिजानें प्रियो सिमे इत्यन्तेन ग्रन्थेना रुरुक्षो र्नियमेन कर्तव्यतया कर्म्मयोगं साङ्गंसफलं च निर्धार्य्याथ साङ्ख्यानां ब्रह्मविदां सर्व्वकर्म्मसंन्यासिनामारूढानां ॥ यस्त्वात्मरतिरेवस्यादित्यारभ्य सर्व्वकर्म्माणि मनसेति ॥ योगारूढस्य तस्यैवेति ॥ योगी युञ्जीत सतत मात्मानं रहसिस्थितः इति ॥ ध्यानयोगपरोनित्य मिति ॥ ब्रह्मभूयाय कल्पतइति ॥ ततोमां तत्त्वतो ज्ञात्वा विशते तदनन्तर मित्यन्तेन ग्रन्थेन सर्व्वकर्म्मसंन्यास पूर्व्वकं नियमेनकर्त्तव्यतयाज्ञाननिष्ठांसफलां निर्धार्य्यान्ते तामेवनिष्ठा मुक्तलक्षणां साङ्गां सफलामुपसंहराति ( सर्व्वधर्म्मेति ) यतस्ततो नास्य वचनस्य कर्म्मप्रकरणान्तःपातित्वं कर्म्मिपरत्वञ्चा सिद्ध्यति ॥ नन्वा रूढस्यापि यतेःसर्व्वकर्म्म संन्यासो न युक्तः किन्तु यत् किञ्चित् स्मार्त्तेन कर्म्मणा भवितव्यमेवेति न शङ्कनीयं ॥ तृतीयाध्यायेश्रीभाष्य कृद्भिरेवैषाशङ्कापरिहृता तत्रद्र-

ष्या ग्रन्थविस्तरभयान्नात्र मीमांस्यते ॥ जन्मान्तराऽनेकश-
तेषु श्रद्धाभक्तिभ्यां समनुष्ठितैरीश्वरप्रसादैकप्रयोजनैः श्रौत
स्मार्त्त कर्म्मभिर्निःशेष निर्धूताशेषपापौघतया विशुद्धान्तः
करणस्त्वं सम्यग्विज्ञातात्मरूपो भूत्वोत्पन्नज्ञानस्याप्रति
बद्धत्व सिद्धये ज्ञाननिष्ठां कर्त्तुकामः सन्नादौ प्रयोजनरहि-
[illegible]र सद्विषयान्निष्ठाप्रतिवन्धकत्वेन दुष्टांश्च सर्व्वधर्म्मान्
[illegible]त्र ते धर्म्माश्च तान् श्रौतानि स्मार्त्तानि च सर्व्वाण्यपि
[illegible]त्र कर्म्माणि स साधनानि परित्यज्य ॥ ननुकर्म्मणां शास्त्रो
क्तानामसद्विषयत्वमप्रयोजनवत्त्वं चानुपपन्नं ब्राह्मणा वि-
विदिषन्ति यज्ञेन दानेनेति यज्ञदानादीनां फलवत्ता श्रव-
णात् ॥ स्वकर्म्मणा तमभ्यर्च्येति ॥ कर्म्मणामीश्वरा
राधनात्मकत्वाद स्त्येवसद्विषयत्वंफलत्वं चेति चेत् सत्य
मस्त्येव कर्म्मणामीश्वराराधनात्मकत्वं चित्तशुद्ध्येकप्रयोज-
नत्वं च तथा पि तदज्ञविषयं कर्त्तृत्वादिकारकभेदबुद्धि
निवन्धनत्वान्नात्मैकत्व दर्शिणो विदुषः कर्म्मोपयुज्यते
ज्ञानकर्म्मणोः परस्परविरोधिनोः सहभावाऽयोगाच्चित्तशुद्धिं
तत्फलं ज्ञानं च प्राप्तवत स्तैः प्रयोजनमपश्यतो ब्रह्मविद
स्तत् परित्यागे युक्त एव भवति ॥ सत्याऽनृते सुखदुःखे
वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेदिति ॥
स्वाध्यायश्च सर्व्वकर्म्माणि संन्यस्येति विदुषः सर्व्वकर्म्म
परित्याग श्रवणात् ॥ ननु कर्म्मणेश्वरःप्रीयते तत् प्रीत्यै
कर्म्म कर्त्तव्यमेवेति चेन्न। ब्रह्मनिष्ठया परमेश्वरस्य ततोऽधि
कतर प्रीत्युत्पत्तेः जीवेशावाभासेन करोतीति श्रवणान्ममा

भासिकं मायिकमसत्य स्वरूपं परित्यज्य मायातत्कार्य्य संब-न्धरहितं नित्यंनिरन्तरं निराभासं निष्कलं निक्रियं शान्तम-नन्तमनाद्यन्तं सच्चिदानन्दैकरसं प्रमाणान्तराबाध्यं परिपूर्ण मद्वैतं परंब्रह्म मामेकं एवायमुपास्त इति ॥ यथार्थदर्शिनि सत्यवादिनि सत्यनिष्ठ ब्रह्मविदि परमेश्वरस्याधिकतर प्रीति-संभवान्मम वैभवमयं निर्व्वहतीति यथाराज्ञःशूरतमे तद्वत् प्रि योहिज्ञानिनोऽत्यर्थमहंसचममप्रिय इत्युक्तत्वात्ब्रह्मविदि पर माप्रीतिः परमेश्वरस्य युक्ता पितुःपुत्रादौगुणाधिक्ये प्रीत्याधि क्यं दृश्यते तद्वत्ततः सिद्धं परमेश्वरस्यनिर्गुणं नित्यममायिव स्वरूपं प्राप्तमिच्छया श्रवणमनननिदिध्यासनादावेव श्रद्धय नियमेनप्रव्रतेषु सत्यनिष्ठेषु सत्सुमुमुक्षुषु परमाप्रीतिरिति । ननुसर्व्वधर्म्मान्न परित्यज्येति धर्म्मस्यैव परित्यागोविधीयते नत्वऽधर्म्मस्यात स्तत्रप्रवृत्तिः प्रसज्यतएवेति चेन्न न कलञ्ज भक्षयेदिति पूर्व्वमेव परित्यक्तस्य कलञ्ज भक्षणादेर धर्म्मस्यो त्तरकालेप्रसक्त्य सम्भवाद्ब्रह्मचर्य्य एवपरित्यक्तस्य पर्य्युषिता भोजनस्य गार्हस्थे यथा प्रवृत्तिर्नप्रसज्यते तद्वत्तथापि त्यज धर्म्म मधर्म्मञ्चेति ॥ न तेषां धर्म्माधर्म्माविति वचनात् सर्व्वधर्म्म पदेनाधर्म्मोऽपि गृह्यते ततोधर्म्ममधर्म्मञ्च परित्यज यद्यपि अर्जुनस्य संन्यासोऽनुपयुक्तस्तथापि मुमुक्षुब्राह्मणं विषयी कृत्योच्यते । सर्व्वधर्म्मान् परित्यज्येतिज्ञान कर्म्मणो स्तम स्तेजसोरिव परस्पर प्रतियोगित्वेनैकाश्रयत्वानुपपत्तिं निर्धा र्य्य भगवता ततः सर्व्वधर्म्मान् परित्यज्यविधिना संन्यस्य मा मेक मयमात्मा ब्रह्मतत्त्व मसीत्यादि श्रुतिभिर्ब्रह्मात्मनोरे

कत्व प्रतिपादनात् अस्थुलमनण्वह्रस्वमिति सर्व्वं ह्येतद्ब्रह्मे त्यादि श्रुतिभिरारोपितस्य जगतोऽपवादपूर्व्वकं सर्व्वस्य ब्रह्ममात्रत्व निरूपणात् एकमेवाद्वितीयं ब्रह्म एक एव हि भूतात्मा एकएव रुद्रो न द्वितीयाय तस्थूरित्यादि श्रुतिभिर्ब्रह्मण एकत्वावधाणादेकं सजातीय विजातीयस्वगत भेदरहितं नित्यशुद्धबुद्ध मुक्तस्वभावमपूर्व्वमनपरमनन्तरम वाह्य र एडं चिदेकरसमद्वितीयं मां परंब्रह्म शरणं व्रज। सर्व्वमिदं च ब्रह्मैवेति प्रत्यगृद्दष्ठानु सन्धेहि ॥ साधकस्यैवाभ्यास शायां बुद्ध्याविशुद्धयायुक्तो धृत्यात्मानं नियम्यच शब्दादीन् विषयांस्त्यक्त्वेत्यादि देशकाल दृष्टिस्थापनादि नियमः॥इति॥

॥ सूतसंहितायां पञ्चत्रिंशाऽध्याये ॥

कामः क्रोधश्च लोभश्च मोहोदम्भ स्तथैवच ॥
आलस्यमपि मात्सर्य्यं ज्ञानानुत्पत्ति कारणम् ॥ १ ॥
क्षान्तिदान्त्यादयः सर्व्वेगुणा एव मनीश्वराः ॥
अङ्गानि ब्रह्मविद्यायाः श्रवणं कारणंवुधाः ॥ २ ॥
तथा फलोपकारि स्यान्मननं चिन्तनं तथा ॥
ज्ञानमज्ञान विच्छित्तौ न सहाय मपेक्षते ॥ ३ ॥
कर्म्मणा शुद्धचित्तस्य संसृतेर्दोष दर्शनम् ॥
पुन र्विरक्तिः संसारान्मोक्षेच्छा जायते तथा इति ॥ ५ ॥

( देवीभागवतेप्रथमस्कन्धेअष्टादशाऽध्याये )
शुकंप्रति जनकउवाच ।

शृणु विप्रेण कर्त्तव्यं मोक्षमार्गाश्रितेन यत् ॥
उपनीतो वसेदादौ वेदाभ्यासाय वै गुरौ ॥ ५ ॥

अधीत्य वेदवेदान्तान् दत्त्वा च गुरुदक्षिणाम् ॥
समावृत्तस्तु गार्हस्थे सदारो निवसेन्मुनिः ॥ ६ ॥
न्यायवृत्तिस्तु सन्तोषी निराशी गतकल्मषः ॥
अग्निहोत्रादि कर्म्माणि कुर्व्वाणः सत्यवाक्शुचि ॥ ७ ॥
पुत्रपौत्रं समासाद्य वानप्रस्थाश्रमे वसेत् ॥
तपसा षड्रिपून् जित्वा भार्य्यां पुत्रे निवेश्य च ॥ ८ ॥
सर्व्वानग्नीन् यथान्याय मात्मन्यारोप्य धर्मवित् ॥
वसेत्तूर्य्याश्रमे श्रान्तःशुद्धे वैराग्यसम्भवे ॥
विविक्तस्याधिकारोऽस्ति संन्यासे नान्यथा क्वचित् ॥ ९ ॥

## ॥ अथेदानीं सन्न्यासलक्षणमाह ॥

विहितानांकर्म्मणां विधिना परित्यागः न्यासः सन्यास इति

ये तु परमार्थ दर्शिनः साङ्ख्यास्तेषां ज्ञाननिष्ठायामेव स र्व्वकर्म्मसंन्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हाः ॥ इति ॥ यदहरेव विरजेत् तदहरेव प्रव्रजेत्इति श्रुतेः॥ वैराग्यं परमेतस्य मोक्षस्य परमोऽवधिरिति॥स्मृतिः अथ ज्ञानसाधनं ज्ञानोत्पत्तिकारणं यज्ज्ञानं तदाह॥गीताय

अमानित्व मदम्भित्व महिंसाक्षान्तिरार्जवम् ॥
आचार्य्योपासनं शौचं स्थैर्य्यमात्म विनिग्रहः ॥ १ ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ॥
जन्ममृत्युजराव्याधि दुःखदोषानुदर्शनम् ॥ २ ॥
अशक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ३ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥

विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ४ ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ५ ॥

अस्यार्थः ॥ एवं महाभूतान्यहंकार इत्यादिना क्षेत्रस्य स्वरूपंनिरूप्याथ क्षेत्रज्ञे निरूपितव्ये सति तज्ज्ञानंतत् साधना ...वे न सिध्यति जिज्ञासो स्तन्नियतसाधन संपत्तिमत स्तज्ज्ञा... सुलभ मित्यादावे वात्मज्ञानोत्पत्ति साधनान्याह पञ्चभिः ॥ अमानित्व इति ॥ अमानित्वं स्वगुणश्लाघा राहित्यं ॥ आचार्योपासनं ज्ञानोपदेष्टुराचार्य्यस्य श्रद्धाभक्तिभ्यां शुश्रूषा...दि क्रियययाराधनमुपासनं ॥ अन्यत्स्पष्टं ॥ १ ॥

स्थैर्य्यसिद्धेः साधनमाह ॥ इन्द्रियार्थेष्विति ॥ इन्द्रियार्थेषु शब्दादिषुभोग्यपदार्थेषु तेषुश्रुतेषु दृष्टेषु च सर्व्वत्रवैराग्यं निःशेषरागत्याग एव मनो निग्रहे तन्नैश्चल्ये च कारणं यते रिदमेव-सम्यक् संपादनीयं तथैवानहं कारश्च जातिवर्णाश्रमाचार वि-...कुल शीलादिभिः श्रेष्ठत्वाभिमानोऽहंकारः । ज्यात्यादिष्व...ङ्कारहेतुषु सत्स्वपि वन्धकत्व बुद्ध्यातद्रहितत्वमनहङ्कारः ॥ सर्वत्र वैराग्य संजननेतत् कार्य्यनिष्पत्तौ च परमकारणं ॥ एवं जन्ममृत्यु जराव्याधि दुःखदोषानु दर्शनमेव ॥ जन्मादिषु पुनः पुनर्दुःखदोषानु दर्शनेनविवेकिनः पुण्यशीलस्य सर्व्वत्रतीव्रं वैराग्यं मोक्षेच्छा च तत् सिद्धौप्रवृत्तिश्च सिध्यत्य तएव तद्दर्शनं-मुमुक्षोःसम्यक् कर्त्तव्यमित्यर्थः ॥८॥ जन्मादिषु दुःखदोषदर्शनस्य फलमाह। असक्तिरिति ॥ असक्तिःसक्तिर्भोगेषु अन्तःकरणस्य सङ्गोरागस्तदभावोऽसक्तिः। अप्राप्त इवप्राप्तेवस्तुनि सर्वत्र

३८

विषयमात्रेऽप्रीतिराहित्यमसक्तिशब्दार्थः ॥ अनभिष्वङ्ग
नाभिष्वङ्गोऽनभिष्वङ्गः॥ मुमुक्षूणां सुसंपाद्यः कुत्रेत्याकाङ्क्ष
यामाह ॥ पुत्रदारगृहादिषु । आदिशब्देन धनक्षेत्रादि गृह्
तेषुचित्तस्य लग्नता न कर्त्तव्येत्यर्थः ॥

ननु अनभिष्वङ्गः पुत्रदारगृहादिषु इत्यनेन गृहस्था
मेव श्रवणाद्यधिकारो न तु यतीनामितरेषाञ्च तेषामधिका
त्वे पुत्रादिषु भिष्वङ्गो न कर्त्तव्येतिव्यतिरेकेन निषेधायोगात्
सत्स्वेवपुत्रादिष्वभिष्वङ्गःप्रसज्यते प्रसक्तस्यैव निषेधोयुक्तो
त्व प्रसक्तस्य न हि नानलं पिवेदिति निषेध उपयुज्यते ॥ त
प्रसक्तप्रतिषेधवलात् गृहस्थानामेव श्रवणाधिकारो न आश्र
मान्तरनिष्ठानामिति चेद्भवानत्रप्रष्टव्यः ॥ गृहिणां वेदान्त
श्रवणं मोक्षाय वा उत अक्षरलाभाय वा विलासार्थं
इति॥नाद्यः साधनानुपपत्तौ साध्यासिद्धेः श्रवणस्यव्यङ्गत्वे त
साध्यज्ञान सिद्ध्यसम्भवात् मोक्षाभावः॥ संन्यस्य श्रवणं कु
र्य्यादिति संन्यासस्य श्रवणाङ्गत्वं स्मर्य्यते॥ अथातो ब्रह्मजिज्ञा
सेत्यत्राप्यथ शब्दस्य संन्यासादि साधनसिद्ध्यनन्तरमेव जि
ज्ञासाकर्त्तव्येत्यानन्तर्य्यार्थकत्वंकथ्यते॥ ततः संन्यासाद्यंतरा
साधन शून्यानांगृहिणा मेव श्रवणान् अधिकारो न तु मोक्षेच्छ
या संन्यस्तसर्व्व कर्म्म तत् साधनानां यतीनां ब्रह्मात्मैकत्व
विज्ञानं वेदान्तश्रवणादिना जायते परमहंसस्य यतेर्मुख्याधि
कारिणः । नाश्रमान्तरनिष्ठस्येत्यङ्गशून्यानां कृतेपि श्रवणे
ज्ञानानुत्पत्ति स्मरणात्ततोयतीनामेव परमहंसानां श्रवणा
धिकारो ज्ञान तत्फल प्राप्त्यधिकारश्च ॥ वेदान्तविज्ञान सु

निश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्व्वे इति श्रुतेः ॥ न द्वितीयः ॥ निरन्तरविक्षेपवतां संसारिणां यथा वदक्षरलाभासिद्धेः ॥ नापि तृतीयश्च ॥ काव्यनाटकादिवदत्र चमत्काराभावात् ॥ यत एवं ततो यतीनामेव श्रवणादि योग्यत्वमितिसिद्धम् ॥ ननु मोक्षेच्छया संन्यस्त सर्व्वकर्म्मणां यतीनामेव श्रवणाधिकारित्वे पुत्रदारादिष्व भिषङ्गो न कर्त्तव्य इति निषेधवचनस्यानर्थक्य मितिचेन्न ॥ तेषामपि पूर्व्ववासनया त्यक्तेष्वपि पुत्रदारादिष्व भिष्वङ्ग प्रसंगात्तन्निषेधपरत्वोपपत्तेः । मनसोवशे सर्व्वमिदंवभूव भीष्मो हि देवः सहसःसहीयानिति ॥ वन्धायविषयासक्तमिति ॥ प्रमाथिवलवद्दृढमिति ॥ ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायतइति ॥ विद्धयेनमिहवैरिणमिति । ज्ञानिनोनित्यवैरिणेति च कामसङ्कल्पादि विकारवतोऽनादिदुर्वासनावासितान्तःकरणस्य दुर्धर्षत्वं दुर्निग्रहत्वं वन्धकत्वं विषय स्मृतिमात्रेणानर्थकारित्वं ज्ञानिषु वद्धवैरित्वञ्च श्रुयतेस्मर्य्यते च ॥ ततः संन्यासिनामपि त्यक्तेषुतेषुतेषु दुर्व्वासनया कचिदभिष्वङ्ग स्तद्वार्त्ता श्रवणादिभिः प्रसज्यते यथा विद्यमानेषु तुच्छेष्वपि कौपीनकन्थादिष्विदं समीचीनमिदमसमीचीनमितिसक्ति स्तथा ततस्तद्द्वयंप्रमादेनापि न कर्त्तव्यमिति व्यतिरेकमुखेनोपदिश्यते ॥ इति भावः ॥ ९ ॥ किञ्च ॥ मयीति ॥ अनन्ययोगेन न विद्यते परमेश्वरात् अन्यः ॥ इत्यनन्यः ॥ योगो भक्तियोगः ॥ मयि मां निर्व्विशेषं परंब्रह्म

विषयीकृत्य ब्रह्मैवाहमहमेवब्रह्मेति ॥ किञ्च विविक्त दि
सेवित्वं विविक्तान् जनसंमर्द्दरहितान् नदीपुलिनगि तदे
कुहराराामारण्याद्येकान्तप्रदेशान् निदिध्याससिद्ध्यर्थं सें ज्ञा
तुं शीलमस्यास्तीति विविक्तदेशसेवी शून्यागारे देवता णा
तृणकुटवाल्मीकवृक्षमूलकुलालशालाऽग्निहोत्र नदी पुलि हिं
गिरिकुहरकोटरकन्दरनिर्झर स्थण्डिलेष्व निकेतवासी मध
श्रुतेः ॥ तस्यभावो विविक्तदेशसेवित्वं जनसंसदि ज नि
नां वाहिर्मुखानां संसदि संघाते वसितुमरतिररुचिश्च ॥१० णी
किञ्चअध्यात्मेति ॥ आत्मा वा इदमेक एवाग्र आसीत् आ
त्मैवेदमग्र आसीत् पुरुषविध आत्मा वा अरे द्रष्टव्य इत्य यो
दिना आत्मानमधिकृत्य प्रवृत्तमध्यात्मं ज्ञायते आत्मत
मनेनेति ज्ञानमध्यात्मं च तज्ज्ञानञ्चा ध्यात्मज्ञानं वेदान्तशा क्षु
तत्रनित्यत्वं निरतत्वं तदेकप्रावण्य मेवज्ञानोत्पत्ते र्मुख्यंसाध गि
तत एवज्ञान मित्युक्तं ॥ तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानस्या गर
फलरूपो मोक्षस्तस्य दर्शनं तत्सिद्धि प्रक्रियालोचनञ्च मो ज्ञा
खलु ब्रह्मात्मनाऽवस्थानं स श्रवणेन श्रावणेन वा मननेन स
निदिध्यासया वा समाधिना वा सर्व्वकामप्रमोकेन वा भि
न्यथा वा सिध्यतीति युक्त्यास्वानुभूत्या च ज्ञानपौष्कल्य चि
सिद्धिसाधन संपत्तिमालोच्य स्वाधिकारानुरूपं तत् सा मु
क्रमेण समनुतिष्ठेदिति वोधयति तत्त्वज्ञानार्थ दर्शनमि वि
भगवान् ततोमोक्षैक कामस्य यतेरमानित्वादि ज्ञानसा सं
प्रयत्नेन संपादनीयं यत् सिद्ध्याज्ञानं सिद्ध्यति ज्ञानसि स
मोक्षो यतः निरुक्तमन्तरङ्गसाधनं ज्ञानस्योपसंहरति । एते

दिति ॥ अमानित्वमारभ्यतत्त्वज्ञानार्थदर्शनान्तं यदुक्तं तदेतद्विंशति संख्याकं ज्ञानसाधनं ज्ञानोत्पत्तिकारणत्वात् ज्ञानमिति महर्षिभिःप्रोक्तं । अत एतस्माद मानित्वादि लक्ष-णात् ज्ञानसाधनादन्यथा यदन्यद्विपरीतं मानित्व दम्भित्व हिंसाऽक्षान्त्यनार्जवादिकं रजस्तमोगुणजातं सर्व्वमज्ञान मज्ञान बृद्धिसाधनं संसारकारणं ज्ञानप्रतिवन्धकञ्च ततो मा नित्वादिकं सम्यक् ज्ञातव्यं ज्ञात्वामुमुक्षुभिः सम्यक्परिहर-णीयमित्यर्थः ॥ ११ ॥ इतिभावः ॥ गीतायां षष्ठाध्याये ॥

आरुरुक्षो र्मुनेर्योगं कर्म्मकारणमुच्यते ॥
योगारुढस्य तस्यैव शमः कारण मुच्यते ॥ ३ ॥

अस्यार्थः ॥ शङ्करानन्दीसरस्वती टीकाः ॥ एवंमुमु-क्षूणां कर्म्मणोऽवश्यकर्त्तव्यत्वसिद्धये कर्म्मयोगिं कर्म्मयो-गिनश्च संन्यास संन्यासिभ्यां समत्वेन स्तुत्वाऽधुना कर्म्मयो-गस्य ज्ञानसाधनत्वं वदन् तत् कर्त्तव्यतया अवधिञ्च सूचय-न्नारूढस्य विदेहमुक्तेः कारणमाह।आरुरुक्षोरिति॥योगंसम्यक् दर्शननिष्ठामारुरुक्षो मुक्त्यैज्ञानयोगं प्राप्तमिच्छां कुर्व्वतोमुने र्भविष्यन्मुने गृहस्थः ॥ स्त्रियमुद्वहेत् इति न्यायेनास्य भ-विष्यत् संन्यासित्वमादाय मुनित्वव्यपदेशः । गौणवृत्त्या वा मुनेर्गृहिणो ज्ञानयोग प्राप्तेः करणं कर्म्मैव चित्तशुद्धेः कर्म्मणा विनाऽन्येन सम्भावयितुम शक्यत्वात् कर्म्मैवपुरुषं चित्तशुद्धिं संपाद्य ज्ञानयोगमारोहय तः कर्म्मैव ज्ञानयोगप्राप्तेः कारण मित्युच्यते ॥ ( मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामा

इत्यादि श्रुतिभिः प्रतिपाद्यत इत्यर्थः ॥ यस्यचित्तशुद्धौ कर्म्म
योगो विहित स्तस्यैव नित्यनैमित्तिककर्म्मानुष्ठान संभावित मुमु
चित्तशुद्धौ सत्यामुदित विवेकवैराग्य शमदमादिसाधनसं कम
स्याप्राप्तश्रवणादिजन्यज्ञानेन योगारूढस्य योगंज्ञानयं वम
मारूढस्य संप्राप्तवतो यतेर्विदेह कैवल्यार्थिनः शमोवाह्यो च्छ
रमणमेव विदेहमुक्ते रन्तरङ्गसाधनमित्युच्यते ॥ तमेवं कम
जानथ आत्मानमन्यावाचो विमुञ्चथ ) ( ओमित्येवंध्यायथा
आत्मानं ) ( तमेवधीरो विज्ञाय शान्तो दान्तउपरत स्तिखं
तिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति ) ( आविः
रतिरात्मक्रीड़ इत्यादि श्रुतिभिः ) ( नैतादृशं ब्राह्मणस्यास्ति
वित्तं ॥ यथैकता समता सत्यता च शीलंस्थितिर्दण्ड निधा
मार्जवं तत स्ततश्चोपरमः क्रियाभ्यः नैवधर्म्मी न चा धर्म
न चैव हि शुभाशुभी यः स्यादेकासनेलीनस्तूष्णीं किंचि
चिन्तयन्नित्यादि स्मृतिभिश्च विज्ञातात्म तत्त्वस्य यतेः समावि
प्रवृत्तस्य शम उपशमः सर्व्वोपरमणं कारणमित्युच्यते
ब्रह्मण्यारोपित नामरूपाद्य ग्रहणमेव शमशब्दार्थः ॥ सन्या
संन्यांसलक्षणः स एवविदेहमुक्तेः परमकारणमिति श्रुमि
स्मृतिभि रुच्यतइत्यर्थः ॥ यस्मादेवं तस्मान्मुमुक्षोरवश्यं चित्त
शुद्ध्यै श्रद्धयेश्वरार्पणवुद्ध्या च वैदिकमेव कर्म्मकर्त्तव्यं ॥ श्री
स्यैव कर्म्मानुष्ठानसम्भावित चित्तशुद्ध्या तदेकपरत नि
सम्यक् कृतश्रवणादि संप्राप्तज्ञानस्य समाधिनिष्ठायां तिष्ठ
सर्व्वकर्म्म संन्यास एव कर्त्तव्य इत्यभिप्रायः ॥ आरुरु
कर्म्मकारणं तस्यैव योगारूढस्य शमःकारण मित्युक्त्या

गमनं समुद्रपर्य्यन्तमेव ततः परन्तु गतेः परिसमाप्तिर्यथा तथा मुमुक्षोर्ज्ञान सिद्धिपर्य्यन्तमेव कर्म्मकर्त्तव्यं ज्ञानसिद्धौसर्व्व कर्म्मसंन्यास एव कर्त्तव्य इति सूचितं भवति । तेन यावज्जीवमग्निहोत्रं जुहोति ) ( कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳसमा इत्यादि श्रुतिवाक्यानां यावज्जीवमग्निहोत्रादि कर्म्मणः कर्त्तव्यत्वप्रतिपादकानामविद्वान् एवगति र्नतु विद्वान् ॥ अन्यथा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ सशिखं वपनं कृत्वा वहिःसूत्रं त्यजेद्बुधः ॥ ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति ) ॥ यदा तु विदितंतत्त्वं परंब्रह्म सनातनम् । तदैक दण्डंसंगृह्य सोपवीतां शिखांत्यजेत् । इत्यादि श्रुतिस्मृति विरोधप्रसंगात् ॥ ननु जड जात्यन्ध मूकादीनामेव वैदिक कर्म्मा नधिकारिणां संन्यासो न तु विदुषः विद्वान्यजत इति विदुषो यागादि कर्म्मविधानादिति चेन्न निरुक्तश्रुतिस्मृतिविरोधप्रसंगात् । वहिःसूत्रं त्यजेद्बुध इति । किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ॥ यदातुविदितं तत्त्वमित्यादि श्रुतिस्मृति वाक्यार्थे सम्यगविचार्य्यमाणे संन्यासस्य ब्रह्मविदेव योग्यो विषयो न तुजडादि स्तेषां वेद शास्त्रार्थाति शून्यानां । परीक्ष्यलोकान् कर्म्मचितान् ब्राह्मणोनिर्व्वेदमायादित्येतच्छ्रुत्यर्थपदवाक्यप्रमाणबलेन लोकानां कर्म्मचितत्वाऽनित्यत्वा ऽल्पफलत्वाऽसत्वपरीक्षा योग्यताऽसम्भवात् वेदाध्ययन तदर्थविचारे तत्त्वनिश्चये कर्म्मणि लौकिके सर्व्वत्र योग्यस्यैवाधिकार दर्शनाद् वेदाध्ययन तदर्थवि-

चारोऽनर्हाणां ब्रह्मतत्त्वावगमनं बुधत्वं च स्वप्नेपि न सं भावयितुं शक्यते ॥ ततोवेदान्त श्रवणादिनाऽधिगत ब्रह्मत त्त्वानामेव बुधत्वं संन्यासश्च निरुक्तश्रुतिस्मृतिभिरव म्यते ततएव भगवताप्युच्यते आरुरुक्षो मुनेर्योग मित्या ऽतः सम्यग्विदितात्मतत्वस्यैव संन्यासो न तुजडादेर्ना परोक्षज्ञानिनः। महत्पदं ज्ञात्वा वृक्षमूलेवसेत् ॥ ज्ञात्वा नैष्क र्म्म्यं माचरेत् तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्

अहमेवाक्षरं ब्रह्मवासुदेवाख्य मव्ययम् ॥
इतिभावो ध्रुवो यस्य तदा भवति भैक्ष्यभुक् ॥

यदा तु विदितं तत्त्वमित्यादि श्रुतिस्मृति शतेभ्योब्रह्म एव संन्यासः कर्त्तव्यइतिसिद्धं ॥ इतिभाव ॥ यदा हि नेन्द्रि र्थेषु न कर्म्मस्वनुषज्जते ॥
सर्व्वसङ्कल्पसंन्यासी योगारूढ स्तदोच्यते ॥

अस्यार्थः ॥ सर्व्वसङ्कल्पसंन्यासी सङ्कल्पाः द्रव्यगु कर्म्मादिगोचराः समीचीनत्वबुद्धयः सर्व्वविषयाः सङ्कल् सर्व्वसङ्कल्पास्तान् संन्यसितुं शीलमस्यास्तीतिसर्व्वसङ्क संन्यासी सर्व्वस्य ब्रह्ममात्रत्वेन निराश्रयान्न सर्व्व सङ्कल्पान् संन्यस्य सर्व्वंब्रह्मैव इति सर्व्वत्र ब्रह्मदर्शन शी ब्रह्मविद्यति र्यदा यस्मिन्नकाले इन्द्रियार्थेषु क्वचिद्र भिक्षा टनादौ दृष्टेषु शब्दादिषु कर्मसु च क्वचिद् वासनया कर्त त्वेन प्रतीतेषु स्नान शौचादिकर्म्मस्वपि नानुषज्जते ॥ भो क्तृ भोजन भोज्येषु कर्तृकारण कार्य्येषु च मिथ्यात्व बुद्ध स्वयमनुषङ्गं आसक्तिं न करोति ॥ अनुषङ्गोनाम अहंभु

अहं करोमीति भोक्तृकर्त्तृतादात्म्यापत्ति स्तां न करोति ॥ किंत्व सङ्गोदासीनत्वेन सर्व्वत्र साक्षीभूत स्तिष्ठतीत्यर्थः। यद्वा प्राक्तन संस्कारानुरूपाप्रवृत्तिरनुषक्ति स्तां न करोति। प्रवृत्तेः काम मूलत्वात् कामस्य सङ्कल्प मूलत्वात् संकल्पानां सर्व्वेषामप्या श्रयमिथ्यात्वविज्ञानेन संन्यस्तत्वाद्विदुषः शब्दादिषु कर्म्मसु चाप्यनुषङ्गा भावोयुक्तः कारणाभावे कार्य्याभाव इतिन्यायात्॥ यद्वा विपरीतप्रत्यय निरसनपूर्व्वकं सर्व्वत्र ब्रह्मदर्शननिष्ठायां प्रवृत्तो ब्रह्मविद्यतिः स्वयं सर्व्वसंकल्पसंन्यासी अधिष्ठाना ऽज्ञानदोषेण शुक्तौरजतप्रत्ययवन्निर्विशेषपरे ब्रह्मण्यद्वितीये घटःपटः कुड्यमिति भ्रान्तासम्यक् कल्प्यन्त इति सङ्कल्पा विपरीतप्रत्यया स्तान् सर्व्वान् सङ्कल्पान् संन्यसितुं चिद्-वृत्त्या ब्रह्मणि प्रविलापयितुं शीलमस्यास्तीति सर्व्वसङ्कल्प संन्यासी ॥ विजातीयप्रत्यय प्रविलापनपरतया सजातीय प्रत्ययावृत्तिं कुर्व्वन्नित्यर्थः॥ यदा यस्मिन् काले सर्व्वत्र ब्रह्ममात्र ग्रहणशीलाया बुद्धिवृत्तेःस्थिरीभावदशायां इन्द्रियार्थेषु क-द्विषयग्रहणकर्म्मस्वपि नानुषज्जते अनुषक्तिं न करोति ॥ चिदाभासतः प्रतीयमानेषु कर्म्मसु च चक्षुरादीन्द्रियै स्तत्त अनुषक्तिर्नामाऽकस्माद्दृष्टार्थानुरूपेण पुनर्वृत्तेः परिणति स्तां चक्षुरादिभि रिन्द्रियैर्ग्रहणक्रिया च न करोति। किन्तु दृष्टान् विषयान् तद्वृत्तिद्रष्टारञ्च प्रत्यावृत्त्याब्रह्मणि प्रविलापयतीत्यर्थः। एवं द्रष्टृदर्शनदृश्यादिभेदभिन्नं विश्वं सर्व्वं यदा ब्रह्ममात्रं पश्यति तदा योगारूढः सर्व्वस्य स्वस्य च ब्रह्ममात्राकारप्र त्ययो ऽप्रतिबद्धो योग स्तत्रारूढःप्रतितिष्ठत इति कृत्वा योगा

रूढ इत्युच्यते स्थितप्रज्ञो ऽयं जीवन्मुक्त इति पण्डितै रन्यो
प्रतिभाष्यते इत्यर्थः ॥ विजानन् विद्वान् भवेत नातिवा
आत्मक्रीड़ आत्मरतिः क्रियावानित्यादि श्रुतिप्रसिद्धियो
नार्थो हि शब्दः ॥ ४ ॥ इति ॥

॥ श्रीमद्भागवते ॥

जन्मान्तरसहस्रेषु यज्ञदानतपो ऽध्वरैः ॥
नराणांक्षीणपापानां कृष्णभक्तिःप्रजायते ॥१॥
स्ववर्णाश्रमधर्म्मेण तपसा हरितोषणात् ॥
साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम् ॥ २ ॥
नित्यनैमित्तिकैरेव नियमेनेश्वरार्पितैः ॥
वहुजन्मकृतै र्विप्रः सत्त्वशुद्धिं समश्नुते ॥ ३ ॥
स्वकर्म्मणातमभ्यर्च्य सिद्धिंविन्दति मानवः ॥
अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥ ४ ॥

इति श्लोकतात्पर्य्यमाह ॥ प्राक्तनानामीश्वरार्पिता
पुण्यकर्म्मणां चित्तशुद्ध्यैकप्रयोजनवत्त्वस्मरणात् ॥ ननु त
संन्यासाद्ब्रह्मणः स्थानमित्यादि स्मृतिप्रसिद्धसंन्यासक्रि
मात्रलभ्या ब्रह्मलोक गतिर्विद्यत एवइतिचेन्न तत्संन्यासस्य
न्यथा सिद्धत्वात् (एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्र
न्ति ) संन्यस्य श्रवणं कुर्य्यादित्यादिश्रुति स्मृतिविहि
संन्यासस्य श्रुत्यङ्गत्वेन श्रवणाद्यर्थसिद्धावेवोपक्षीणस्व
क्तिकत्वाद्ब्रह्मलोकप्रापकत्वानुपपत्ते र्यथा ज्योतिष्टोमे
स्वर्गकामो यजेत इति । तथा श्रवणाद्यर्थ सिद्धावेवोपक्षी
स्य विविदिषा संन्यासस्य श्रवणाद्यर्थप्रापण एव सामर्थ्य

न तु फलान्तरं इति। ततः श्रवणाद्यङ्गत्वेन कृतस्य विविदिषा संन्यासस्य श्रवणादावेवोपक्षीणत्वाद् यतेस्तदतिरिक्तपुण्य कर्म्मानुपलम्भाच्च युक्त एव अर्जुनस्यप्रश्न इति सिद्धम् ॥ ननु तर्हि संन्यासा द्ब्रह्मणः स्थानमित्यादि स्मृति वाक्यानामा नर्थक्यंस्यादिति चेदुच्यते ॥ संन्यासाद्ब्रह्मणः स्थानमिति सं न्यासस्य ब्रह्मस्थानं फलंस्मर्य्यते । तद्विद्वत् संन्यासस्य वा विविदिषा संन्यासस्य वा उत आपत् संन्यासस्य वा । नाद्यः न तस्य प्राणा उत्क्रामन्तीति विदुषः प्राणोत्क्रमणाभाव श्रवणात् तत् कर्तृकसंन्यासफलत्वानुपपत्तेः ॥ न द्वितीयः ॥ विविदिषा संन्यासस्य श्रवणाद्यर्थ सिद्ध्येकफलत्वात् ॥ पुनः फलान्तरकल्पनाऽयोगात्। तृतीयोऽपि पारिशेष्यादापत्कालः संन्यासस्यैव ब्रह्मलोकः फलमित्यवसीयते ॥ तथैवस्मर्य्यते। ( आपद्य पि च कुर्वीत संन्यासं ब्राह्मणोत्तमः यदनुष्ठानमात्रेण प्रयाति ब्रह्मणः पदम् ) इतिश्लोकः ॥ अतः संन्यासाद्ब्रह्मणः स्थानमित्यादि स्मृतिवाक्यानामापत् संन्यासविषयत्वेन सार्थकत्वान्न कदाचिद प्यनुपपत्तिः ॥ नन्वापदि संन्यस्यापि पुनर्जीवित्वाऽविवेकी श्रवणादिनाज्ञानं संपाद्यमुक्तो भवति कथं आपत्संन्यासस्य ब्रह्मलोक एकफलत्वमिति चेदुच्यते ॥ जन्मान्तरे मोक्षेच्छया संन्यस्य श्रवणं कृतवतस्तस्य प्रतिबन्धवशात् ज्ञानानुत्पत्तौ पुनरत्रापि जन्मन्यापद्युपदेशेन पूर्वसंस्कारवशात् संन्यस्य श्रुत्यामत्या च ज्ञानं प्राप्यमुक्तो भवतीममेवार्थं ॥ श्रीभगवानपि वक्ष्यति (शुचीनां श्रीमतांगेहे योगभ्रष्टोऽभिजायते ॥ इत्यादिना ।

ततो न कश्चिदत्र विरोधः ॥ ननु अप्राप्तयोगसंसिद्धेरपि यो
गिनो यतेः संन्यासस्य श्रवणाद्युपक्षीणत्वेऽपि) भिक्षाटनंजप
शौचंस्नानं ध्यानं सुरार्च्चनं । कर्त्तव्यानि षडेतानि यतीनां नृप
दण्डवत् ॥ स्वशाखोपनिषद्गीता मित्यादि स्मृत्युक्त मन्त्र
जप स्तोत्र सुरार्च्चनादि पुण्यकर्म्मणः स्वर्गादिहेतोः संभवा
स्त्येव तत् प्राप्यपुण्यलोकइतिचेन्न । स्तोत्रमन्त्र जपादेर्भे
प्रत्ययघटितत्वेन विपरीतभावहेतुत्वात् ब्रह्मविद्विषयत्व
नुपपत्तेः ॥ नैतादृशं ब्राह्मणस्याऽस्ति वित्तं उपरमः क्रियाभ्यः
नैवधर्म्मी न चा धर्म्मीतूष्णीं किञ्चिदचिन्तयेदिति । योगि
यतेः सर्व्वकर्म्मोपरमस्मरणात् । ध्यानयोगपरोनित्या
स्त्वत्र निदिध्यासस्य क्रियान्तरानवकाशार्थनित्यप्रदर्शि
श्रीभाष्यकृद्भिर्व्याख्यातत्वाच्च ॥ निरन्तरयोगानिष्ठाप
स्य यतेर्मन्त्रजपादि पुण्यकर्म्मानुष्ठानाऽनुपपत्तौ तत्फ
भूतपुण्यलोकगति र्न सम्भवति एव इतिभावः । (शान्तिपर्वे
राजधर्म्मे) ॥ सन्तोषात् स्वर्गमाप्नोति सन्तोषात् परमंसु
म ॥ तुष्टेर्न किञ्चित् परमं सा सम्यक् प्रतितिष्ठति ॥ क्रो
हर्षाविनीतस्य सततं सिद्धिरुत्तमा ॥ याभिः प्रत्याहरेत् क
मान् कुर्म्मोऽङ्गानीव सर्व्वशः ॥ यदा चायं न बिभेति य
स्चास्मान्न विभ्यति ॥ यदानेच्छति न द्वेष्टि ब्रह्मसंपद्यते तदा
यदा न भावं कुरुते सर्व्वभूतेषु पापकं ॥ कर्म्मणा मनस
वाचा ब्रह्मसंपद्यते तदा ॥ विनीतमानमोहश्च वहुसङ्गवि
र्ज्जितः । तदात्मज्योतिषः साधो निर्व्वाणमुपपद्यते ॥
स्वधर्म्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः । शतं वर्षाणि

प्रेत्य पुरीषं भुञ्जते जनाः ॥ अनर्हते यद्ददाति न ददाति यदर्हते । अर्हानर्हा परिज्ञानात् दानधर्म्मोऽपि दुष्करः ॥ लब्धानामपि वित्तानां वोद्धव्यौ द्वावतिक्रमौ । अपात्रे प्रतिपत्तिश्च पात्रेचाप्रतिपादनमिति ॥ ननु पात्रापात्रौ प्रतिपादनं पूर्व्वोक्तं तत् लक्षणं किमित्याह ॥ महाभारते उद्योगपर्व्वे धृतराष्ट्रं प्रति विदुरउवाच ॥

निषेवते प्रशस्तानि निन्दितानि न सेवते ॥
अनास्तिकः श्रद्धधान एतत् पण्डितलक्षणम् ॥ १ ॥
आत्मज्ञानसमारम्भ स्तितिक्षाधर्म्मनित्यता ॥
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भोमान्यमानिता ॥
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ३ ॥
यस्य कृतं न विघ्नन्ति शीतमुष्णं भयं रतिः ॥
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ४ ॥
यस्य संसारिणीप्रज्ञा धर्म्मार्थावनुवर्त्तते ॥
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ ५ ॥
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्व्वते ॥
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ ६ ॥
न हृष्यत्यात्मसम्माने नावमाने च तप्यते ॥
गाङ्गोह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ७ ॥
तत्त्वज्ञः सर्व्वभूतानां योगज्ञः सर्व्वकर्म्मणाम् ॥
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ८ ॥

अथ मुर्खस्यलक्षणमाह ॥ अश्रुतश्च समुन्नद्धो दरिद्रश्च

महामनाः । अर्थांश्चाकर्म्मणा प्रेप्सु मूढ इत्युच्यते बुधैः ॥९ स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ॥ मिथ्याचरति मित्रा र्थे यश्च मूढः स उच्यते ॥ १० ॥ अमित्रं कुरुते मित्रं मि द्वेष्टि हिनस्ति च ॥ कर्म्मचारभते दुष्टं तमाहु मूंढचेतसः ॥११ श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्च्चति ॥ सुहृन्मि न लभते तमाहु मूंढलक्षणम् ॥ १२ ॥ आशिष्यं शास्ति राजन् यश्च शून्यमुपासते ॥ कदर्य्यं भजते यश्च तमाहुर्मू चेतसम् ॥ १३ ॥

एकमेवाद्वितीयं तत् यद्राजन् नावबुध्यसे ॥
सत्यंस्वर्गस्य सोपानं पारावारस्य नौरिव ॥ १४ ॥
एकोधर्म्मः परंश्रेयः क्षमैकाशान्ति रुत्तमा ॥
विद्यैका परमादृष्टि रहिंसैका सुखावहा ॥ १५ ॥
पञ्चाग्नयो मनुष्येण परिचर्य्याः प्रयत्नतः ॥
पिता माताग्निरात्मा च गुरुश्च भरतर्षभः ॥ १६ ॥
पञ्चैव पूजयेल्लोके यशः प्राप्नोति केवलं ॥
देवान् पितृन् मनुष्यांश्च भिक्षूनऽतिथि पञ्चमान् ॥ १७ ॥
द्वाविमौ न विराजेते विपरीतेन कर्म्मणा ॥
गृहस्थश्च निरारम्भः कार्य्यवांश्चैव भिक्षुकः ॥ १८ ॥
द्वाविमौपुरुषौ राजन् स्वर्गस्योपरितिष्ठतः ॥
प्रभुश्च क्षमाया युक्तो दरिद्रश्च प्रदानवान् ॥ १९ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ॥
अपात्रे प्रतिपत्तिश्च पात्रेचा प्रतिपादनम् ॥ २० ॥
द्वाविमावप्सु निक्षेप्यौ कण्ठेबद्ध्वा महाशिलाम् ॥

धनवन्त मदातारं दरिद्रञ्चातपस्विनम् ॥ २१ ॥
द्वाविमौ पुरुषौलोके सूर्य्यमण्डल भेदिनौ ॥
परिव्राड्योगयुक्तश्च रणेचाभिमुखोहतः ॥ २२ ॥
इदानीं ब्राह्मणस्य शमदमादि धर्म्मलक्षणं विशेषेणाह ॥
महाभारते उद्योगपर्व्वे विदुरउवाच धृतराष्ट्रंप्रति ॥
शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ॥
कुमारस्य तु या बुद्धिर्व्वेद तां शाश्वती महम् ॥ २३ ॥
ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ॥
न तेन गुह्योदेवानां तस्मादेतद्ब्रवीमि ते ॥ २४ ॥
यो न शक्योमया वक्तुं तमस्मै वक्तुमर्हसि ॥
इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शनम् ॥ २५ ॥
ब्राह्मणस्य विशेषेण दमोधर्म्मः सनातनः ॥
तस्यदान क्षमासिद्धिर्यथा वदुपपद्यते ॥ २६ ॥
दमोदानं तपोज्ञान मधीतञ्चानुवर्त्तते ॥
दमस्तेजो वर्द्धयति पवित्रं दम उत्तमम् ॥ २७ ॥
विपाप्मा वृद्ध तेजाश्च पुरुषो विन्दते महत् ॥
क्रव्याद्भ्य इवभूताना मदान्तेभ्यः सदाभयम् ॥ २८ ॥
तेषाञ्च प्रतिषेधार्थं क्षत्रंसृष्टं स्वयम्भुवा ॥
आश्रमेषु चतुर्व्वाहुर्दम मेवोत्तमं व्रतम् ॥ २९ ॥
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ॥
क्षमा धृति रहिंसा च समता सत्य मार्ज्जवम् ॥ ३० ॥
इन्द्रियाभिजयो धैर्य्यं मार्द्दवं ह्री रचापलम् ॥
अकार्पण्य मसंरम्भः सन्तोषः श्रद्धधानता ॥ ३१ ॥

एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ॥
कामो लोभश्च दर्पश्च मन्युनिद्रा विकत्थनं ॥ ३२ ॥
मान ईर्षा च शोकश्च नैतान् दान्तो निषेवते ॥
अजिह्ममशठं शुद्ध मेतद्दान्तस्य लक्षणम् ॥ ३३ ॥
अलोलुप स्तथा लेप्सुः कामानामविचिन्तिता ॥
समुद्र कल्पः पुरुषः स दान्तः परिकीर्त्तितः ॥ ३४ ॥
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः ॥
प्राप्येहलोके सम्मानं सुगतिं प्रेत्य गच्छति ॥ ३५ ॥
अभयं यस्य भूतेभ्यः सर्व्वेषामभयं यतः ॥
स वै परिणतप्राज्ञःप्रख्यातो मनुजोत्तमः ॥ ३६ ॥
नैष्कर्म्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ॥
कालाकांक्षी चरल्लोके ब्रह्मभूयाय कल्पते ॥ ३७ ॥ इति

धृतराष्ट्रउवाच ॥ कस्यैष मौनः कतरन्नुमौनं प्रब्रुहि द्वन्निह मौनभावं । मौनेन विद्वानुत याति मौनं कथं मुनेमि मिहाचरन्ति ॥३८॥ सनत्सुजातउवाच ॥ यतो न वेदा नसासहै नमनु प्रविशन्ति ततोऽथमौनं । यत्रोत्थितो वेदश स्तथायं स तन्मयत्वेन बिभातिराजन् ॥३९॥धृतराष्ट्रउवा ऋचोयजुंपि योवेद सामवेदञ्च वेदयः। पापानिकुर्व्वन् पा न लिप्यते किं न लिप्यते ॥४०॥ सनत्सुजात उवाच ॥ नै सामान्यृचोवापि न यजुंष्यविचक्षणं। त्रायन्ते कर्म्मणः पा न् न ते मिथ्याब्रवीम्यहं ॥४१॥ न छन्दांसि वृजिनात्तारय मायाविनं मायया वर्त्तमानं॥ नीडंशकुन्ताइव जातपक्षा छ न्दांस्येनं प्रजहत्य काले॥ ४२॥ धृतराष्ट्र उवाच ॥ न वेदे

विनाधर्म्मं त्रातुं शक्ताऽविचक्षणम् ॥ अथ कस्मात् प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ४३ ॥ सनत् सुजातउवाच ॥
तस्यैव नामादि विशेषरूपैरिदं जगद्भाति महानुभाव ॥
निर्द्दिश्य सम्यक् प्रवदन्ति वेदा स्तद्विश्ववैरूप्य मुदाहरन्ति ४४
अस्मिल्लोके तपस्तप्तं फलमन्यत्र दृश्यते ॥
ब्राह्मणानामिमे लोका धत्त्वे तपसि तिष्ठताम् ॥ ४५ ॥
॥ धृतराष्ट्रउवाच ॥ कथंसमृद्धमसमृद्धं तपो भवति केवलम् ॥
सनत् सुजात प्रब्रूहि यथा विद्यामतद्वयं ॥ ४६ ॥
॥ सनत्सुजातउवाच ॥ निष्कल्मषं तपस्त्वेतत् केवलं परिचक्षते । एतत् समृद्धमप्यृद्धं तपोभवति केवलं ॥ ४७ ॥
तपोमूलमिदंसर्व्वं यन्मां पृच्छासि क्षात्रिय ॥
तपसा वेदविद्वांसः परं तत्त्वमवाप्नुयुः ॥ ४८ ॥
॥ धृतराष्ट्र उवाच ॥ कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषंतपः॥
सनत् सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ ४९ ॥
॥ सनत् सुजात उवाच ॥ क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि दशात्रि राजन् ॥ धर्म्मादयो द्वादश तेपितॄणां शास्त्रे गुणा ये विदिता द्विजानां ॥ ५० ॥ क्रोधकामौ लोभमोहौ विधित् सा कृपासूये मानशोकौस्पृहाच । ईर्ष्या जुगुप्सा च मनुष्य दोषा वर्ज्याःसदा द्वादशैते नराणाम् ॥ ५१ ॥ एकैकः पर्य्युपास्तेह मनुष्यान् मनुजर्षभ ॥
लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥ ५२ ॥
विकथनः स्पृहयालुर्मनस्वी बिभ्रत् कोपश्चपलोऽरक्षणश्च ॥ एतान् पापाषण्नराः पापधर्म्मान् प्रकुर्व्वते नो त्रसन्तः

सुदुर्गे ॥ ५३ ॥ सम्भोग सम्विद्विषमोऽतिमानी दत्त्वानुतापे ॥
कृपणे वलीयान् ॥ वग प्रशंसि वनितासु द्वेष्टा एते परे स
नृशंसरागाः ॥ ५४ ॥
तूष्णींभूत उपासीत न चेष्टेन्मनसा पिच ॥
उपावर्त्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥ ५५ ॥
मौनान्न स मुनिर्भवति नारण्य वसनान्मुनिः ॥
स्वलक्षणन्तु योवेद स मुनिः श्रेष्ठ उच्यते ॥ ५६ ॥
सर्व्वार्थानां व्याकरणाद्वैयाकरण उच्यते ॥
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ५७ ॥
प्रत्यक्षदर्शी लोकानां सर्व्वदर्शी भवेन्नरः ॥
सत्ये वै ब्राह्मण स्तिष्ठन् तद्विद्वान् सर्व्वविद्भवेत् ॥ ५८ ॥
शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ॥
ब्रह्मचर्य्यव्रतस्यास्य प्रथमं पाद उच्यते ॥ ५९ ॥
आचार्य्यस्य प्रियं कुर्य्यात् प्राणैरपि धनैरपि ॥
कर्म्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ ६० ॥
समा गुरौ यथा वृत्ति र्गुरुपत्न्यां तथा चरेत् ॥
तत् पुत्रे च तथा कुर्व्वन् द्वितीयः पाद उच्यते ॥ ६१ ॥
आचार्य्येणात्म कृतं विजानन् ज्ञात्वा चार्थं भाविते ऽस्मीत्यं
यन्मन्यते तं प्रतिहृष्ट बुद्धिः स वै तृतीयो ब्रह्मचर्य्यस्य पादः ॥६
नाचार्य्यस्यानपकृत प्रवासं प्राज्ञः कुर्व्वीत नैतदहं करोमि ॥
इतीवमन्येत न भाषयेत स वै चतुर्थो ब्रह्मचर्य्यस्य पादः ॥ ६३
कालेन पादं लभते तथार्थं ततश्चपादं गुरुयोगतश्च ॥
उत्साहयोगेन च पादमृच्छेत् शास्त्रेण पादञ्च ततोऽभिया

॥ ६४ ॥ धर्म्मादयो द्वादशायस्य रूपमन्यानि चाङ्गानि तथा-वलञ्च ॥ आचार्य्ययोगे फलतीति चाहुर्ब्रह्मार्थयोगेन च-ब्रह्मचर्य्यं ॥ ६५ ॥ एवं प्रवृत्तो यदुपलभेत वैं धनमाचार्य्याय तदनुप्रयच्छेत् ॥ सतां वृत्तिं बहुगुणामेवमेति गुरोः-पुत्रे भवति च वृत्तिरेषा ॥ ६६ ॥ एवं वसन् सर्व्वतो-वर्द्धतीह बहून् पुत्राँल्लभते च प्रतिष्ठां ॥ वर्षन्ति चास्मै प्र-दिशो दिशश्च वसन्त्यस्मिन् ब्रह्मचर्य्ये जनाश्च ॥ ६७ ॥ एतेन ब्रह्मचर्य्येण देवा देवत्व माप्नुवन् ॥ ऋषयश्च महाभा-गा ब्रह्मलोकं मनीषिणः ॥ ६८ ॥ सनत्सुजात उवाच ॥ शोकः-क्रोधश्च लोभश्च कामो मोहः परासुता ॥ ईर्षामानो वि-धित्सा च कृपासूयाजुगुप्सिता ॥ ६६ ॥ द्वादशैते महादोषा मनु ष्यप्राणनाशनाः ॥ एकैकमेते राजेन्द्र मनुष्यान्पर्य्यु पासते ॥ ६७ ॥ यैराविष्टोनरः पापंमूढसंज्ञो व्यवस्यति ॥ ६८ ॥ धर्म्मश्च स-त्यञ्च तपोदमश्च अमात्सर्य्यं ह्रीस्तितिक्षानसूया । दानंश्रुत ञ्चैवधृतिः क्षमा च महाव्रताद्वादश ब्राह्मणस्य ॥ ६८ ॥ यो नै-तेभ्यः प्रच्यवेद्द्वादशभ्यः सर्व्वानपीमां पृथिवीं सशिष्यात् । त्रिभिर्द्वाभ्यामेकतो वार्थितो यो नास्य स्वमस्तीति च वेदि तव्यं ॥ ७० ॥ दमस्त्यागोऽथा प्रमादइत्येतेष्वमृतं स्थितम् । एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषणाम् ॥ ७१ ॥ सद्वाऽसद्वा परीवादो ब्राह्मणस्य न शस्यते ॥ नरक प्रातिष्ठास्तेस्यूर्यं एवं कुर्व्वते जनाः ॥ ७२ ॥ मदोऽष्टादशदोषःस्यात् पुरायो ह्यप्रकीर्त्तितः ॥ लोक द्वेष्यंप्रातिकुलमभ्यसूया मृषावचः ॥ ७३ ॥

कामक्रोधौ पारतन्त्र्यं परीवादोऽथपैशुनम् ॥
अर्थहानि र्विवादश्च मात्सर्य्यं प्राणि पीडनम्‌ ॥ ७४ ॥
ईर्ष्या मोहोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता ॥
तस्मात् प्राज्ञो न माद्येत सदाह्येतद्विगर्हितम् ॥ ७५ ॥
द्रव्यवान् गुणवानेवं त्यागी भवाति सात्त्विकः ॥
पञ्चभूतानि पञ्चभ्यो निवर्त्तयति तादृशः ॥ ७६ ॥
यतोयज्ञाः प्रवर्द्धन्ते सत्यस्यैवावरोधना ॥
मनसान्यस्य भवतिं वाचान्यस्याथ कर्म्मणा ॥ ७७ ॥
सङ्कल्पासिद्धिं पुरुषमसंकल्पोऽधितिष्ठति
ब्राह्मणस्य विशेषेण किञ्चान्यद पिमे शृणु ॥ ७८ ॥
अध्यापयेन्महदेतद्यशस्यं वाचोविकारान् कवयो वदन्ति।
अस्मिन् योगे सर्व्वमिदं य एतद्विदुरमृता स्ते भवन्ति ॥७
न कर्म्मणा सुकृतेनैव राजन्सत्यं जयेज्जुहुयाद्वा यजेद्वा ।
नैतेन वालोऽमृत्युमभ्येति राजन्रतिञ्चासौ न लभत्यन्तका
तूष्णीमेक उपासीत चेष्टेत मनसापि न ॥
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्ज्जयेत् ॥ ८० ॥
न दर्शनेतिष्ठति रूपमस्य पश्यन्तिचैनं सुविशुद्धसत्त्वाः॥
हितोमनीषी मनसा न तप्यते ये प्रव्रजेयुरमृतास्ते भवन्ति
योगिन स्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥
अहमेव स्मृतो मातापितापुत्रोऽस्म्यहं पुनः ॥
आत्माहमपि सर्व्वस्य यच्चनास्ति यदस्ति च ॥ ८१ ॥

आत्मैवस्थानं मम जन्मचारमा ओतप्रोतोऽहमजरप्रति
अजश्चरो दिवारात्र मतन्त्रितोऽहं मा त्विज्ञायकविरा

प्रसन्नः ॥ ८५ ॥ इति सनत्सुजातपर्व्वणि उदेयोगपर्व्वणि षट्चत्वारिंशत्तमोऽध्यायः समाप्तः॥ अथेदानीं वेदान्तसम्मत साधनचतुष्टयशमदमादिसम्पन्नस्यसंन्यासेअधिकारित्वमाह॥ साधनचतुष्टयसम्पन्नइति ॥ वक्ष्यमाणसाधनचतुष्टयविशिष्टइत्यर्थः ॥ अयंभावः ॥ न तावद्वेदाध्ययनं ब्रह्मजिज्ञासाधिकारहेतु स्तस्य धर्म्मब्रह्मजिज्ञासयोः साधारणत्वात्तन्मात्रेणेह नियमेन प्रवृत्त्यनुपपत्ते र्नापि धर्म्मविचारः प्राग पिधर्म्मविचारादधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः ॥ नापिधर्म्मानुष्ठानमिह जिज्ञासाहेतु र्विनापिधर्म्मानुष्ठानं ब्रह्मचर्य्यादेव विरक्तस्य ब्रह्मजिज्ञासा दर्शनात् श्रुतिश्च भवति ॥ विविदिषोः संन्यासविधायिनो यदिवा इतरथा ब्रह्मचर्य्यादेव प्रव्रजेदित्यादिका ॥ ननुजायमानो वै ब्राह्मणस्त्रिभि र्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्योयज्ञेन देवेभ्यः प्रजया पितृभ्य एव वा अनृणो यः पुत्रीयज्वा ब्रह्मचारी वासीदिति श्रुतेः ) मनुः ॥ ऋणानित्रीण्यपाकृत्यमनो मोक्षे निवेशयेत् ॥ अन पाकृत्यमोक्षन्तु सेवमानो व्रजत्यधः ॥१॥ इतिस्मृतेश्च ऋणत्रयापकरणमन्तरेण मोक्षशास्त्रे विचारप्रवृत्त्य युक्ततया गम्यमानात् ॥ कथंधर्म्ममननुष्ठाय संन्यासपूर्व्वकं ब्रह्मविचार प्रवृत्तिरितिचेत् उच्यते श्रुतिस्तावत् हृदयस्याग्रेऽवद्यत्यऽथ जिह्वाया अथवक्षस इति पश्ववदनएषविधिमुपक्रम्य तदवदनैरेवावदयते तदवदानानामवदानत्वमित्य वदानानिर्व्वचनेनोपसंहाराद वदानत्रयविध्यर्थ वादत्वात् न स्वार्थपरा । अतः सा ब्रह्मचर्य्यादेवेति श्रुत्यानन्यपरयावाध्यते यदि-

ब्रह्मचर्य्यादिभिरपाकरणीयर्णत्रयमवदयत इत्यवदानश्रुतं ब्रह्मचर्य्यादे ऋणत्रयापाकरण हेतुत्ववचनं स्वार्थपरमेवमतं तथापि जातमात्रस्यर्णत्रयसम्बन्धे प्रमाणाभावादधिका जायमानो गृहस्थो जायमान इति वा व्याख्यानमुचितं स्मृ स्त्वविरक्तविषयताव्याख्याया एतेन यज्ञायुषीयजमानः ज यावान्मान मुच्येरन् वीरहा वा एषदेवानां योऽग्निमुद्वासय इत्यादिश्रुतयः ) एकाश्रम्यन्तु आचार्य्याः प्रत्यक्षविधाना गार्हस्थ्यस्येत्याद्याः स्मृतयश्चव्याख्याता वेदितव्याः ब्रह्म चर्य्यादेव प्रव्रजेत् (यद हरेव विरजेत्तदहरेव प्रव्रजेत्)( अथ नरव्रती वा किमर्थावयमध्येष्यामहे किमर्थावयं यक्षामहे कि प्रजया करिष्यामो येषांनोऽयमात्मेति याज्ञवल्क्यः प्रवव्रज प्रजामीशिरे ते श्मशानानि भेजिरे ये प्रजां नेशिरे तेऽमृ त्वं हि भेजिरे इत्यादिश्रुति स्मृत्यविरोधात् । तस्मान्न धर्म नुष्ठानं ब्रह्मजिज्ञासाहेतुः ॥ अतोब्रह्मजिज्ञासा जायमा यास्मिन् सत्येवनियमेन जायते यास्मिन्न सतिनैव जायते त व तस्याः साधनमेषितव्यं तच्च वक्ष्यमाणं साधुनचतुष्टयमे ति ॥ कस्मात् पुनः साधनसम्पन्नस्तत्राह ॥ नितान्तेति नितान्तमत्यन्तंनिर्म्मलं शुद्धंस्वान्तमन्तःकरणं यस्य सः त कुतः स्वान्तस्य नैर्म्मल्यं ) प्रतिवन्धकरागादिवासना वृत्तेत्याह ॥ निर्गतेतिरागादि वासनारूपकल्मष निवृत्ति रपि कुत स्तत्राह नित्येति ॥ काम्यकर्म्मभि स्तस्यानुष्ठीयमा मपि नित्यादि न साक्षात् कल्मषनिवृत्तिहेतुः कामवासन शुद्धप्रतिवन्धसम्भवात्तथा निषिद्धवर्ज्जने पापेन प्रतिवन्धादि

स्यभिप्रेत्य नित्याद्यनुष्ठानं विशिनष्टि काम्यनिषिद्धवर्ज्जन-
पुरः सरमिति ॥ एवंनित्याद्यनुष्ठानस्य शुद्धेश्चैकभविकत्व
नियमं व्यावर्त्तयति ॥ अस्मिन्नुजन्मनिजन्मान्तरे वेति ॥ अने-
कजन्म संसिद्धस्ततो याति परांगतिम् ॥ न हि कल्याणकृत् क
श्चिद्दुर्गतिं तात गच्छति ॥ इत्यादिस्मृते र्जन्मान्तरानुष्ठि–
तस्यापि जन्मान्तरोपकारकत्वसम्भवादितिभावः ॥ एवं
काम्यनिषिद्धवर्जनपुरः सरमिहजन्मनि जन्मान्तरे वानु-
ष्ठितमित्यादिक्षयितकल्मषस्य विवेकादिसाधनचतुष्टयसम्पत्तौ
कारणतामाह ॥ आपातत इति ॥ आपाततो विचारे-
णेदं पर्य्यवधारणमन्तरेणाधिगतोऽखिलोवेदार्थो येन स तथा,
वेदशब्दो वेदान्तविषयः॥ वेदार्थज्ञानं हेतुमाह । विधिवदिति
ब्राह्मणेन षण्डगोवेदो निष्कारणोऽध्येयोज्ञेयश्चेति वचना-
न्नित्याध्ययनविधानापादितवेदान्त वचोभिर्निरुक्त व्याकर-
णाद्यङ्गोपकरणैरनवबुद्ध्या तात्पर्य्यलिङ्गै रधिगाताखिलवेदा-
न्तार्थ इत्यर्थः ॥ एतदुक्तं भवति ॥ वस्तुतश्चित् सदान
न्दब्रह्मस्वभावो ऽप्यात्मानाद्यनिर्वाच्या विद्यासम्बन्ध ल-
ब्धजीवभावो ऽविद्याकामकर्म्मवशगतः काम्यनिषिद्धाद्यऽ
नवरतमाचरंस्तत्फलभूतस्वर्गनरकौ भुञ्जानस्तद्भोगवासना
वासितस्तदनुरूपं पुनः कर्म्म पुनः फलमित्येवं घटीय-
न्त्रवत् कुलालचक्रवच्चोर्द्धाधस्तिर्य्यग् भ्रमणमविश्रममनु
भवन् हृष्टःकृतार्थोमूढो दुःखी वा इत्यात्मानं मृषैव मन्यते स
पुनः । एकः काम्योऽपरो नित्यस्तथा नैमित्तिकः परः । प्रा-
धान्येन फलं शुद्धि रार्थिकीकाम्यकर्म्मणः । प्राधान्येन मनः

शुद्धिर्नित्यस्य फलमार्थिकं । केवलं प्रत्यवायस्य निवृत्तिं
तरस्य तु इत्यादि पुराणवचनादतीतानेक जन्म सुकृत
हक् पुण्यपुञ्ज परिपाकोदयवशात् काम्यफलेषु जातदोष
द्धिराध्यात्मिकादि दुःखत्रयञ्च निषिद्धाचरण फलमाकल
काम्यनिषिद्धे परित्यजन्नीश्वरार्पणबुद्ध्यानुष्ठितनित्यादि
यितकल्मषतया लब्धविवेकादि साधनसम्पन्नः स्वात्मः।
स्यजिज्ञासु वेदान्ताधिकारीति ॥ प्रत्यवाय शब्देनागामि
खमुच्यते ॥ येषामकरणे विज्ञायमाने तत्साध्यते ज्ञाप
तानि नित्यानीति यावत्॥ननु अकुर्व्वन् विहितंकर्म्मनिन्दि
समाचरन्॥ प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥
स्मृतौ ॥ निर्निमित्तान्युपात्त दुरितक्षयार्थानि नित्यानीति
नित्यकर्म्मलक्षणं नत्वकरणे प्रत्यवायोत्पादक लक्षणानीति
अतएव नित्याद्य नुष्ठानकाले निद्रालस्यादि परवशं नर
लोक्य शिष्टैर्लक्ष्यते यद्यस्य यथावान्नित्य नैमित्तिकानु
मभविष्यत्तदा सञ्चितदुरितक्षयोऽभविष्यन्नचायं विहि
कार्षीदतः प्रत्यवायी भविष्यतीति तथा च न प्रत्यवाय
करणहेतुकत्वं प्रत्यवायशब्दवाच्यस्य पापदृष्टस्य तज्जन्या
मि दुःखस्य वा निषिद्ध क्रियाजन्यत्वात् पापकारी पापोभव
अथ य इह कपूयचरणाअभ्यासो ह यत्ते कपूयां योनिम
पद्येरन्निति चश्रुतेः ॥ तस्माद करणे प्रत्यवाय साधनानि
त्यवाय ज्ञापकानि नित्यानीति व्याख्यानं सुव्याख्यानमि
सन्ध्यावन्दनादीनीत्यादि पदात् पञ्चमहायज्ञादिग्रहः ॥
मित्तमात्रमासाद्यावश्यकर्त्तव्यतया विहितानि नैमित्तिका

एतदाह पुत्रेति॥ जातेष्टिर्न्नाम वैश्वानरं द्वादशकपालं निर्व्वपेत् पुत्रेजात इतिविहिता॥ उपासनानां ज्ञानाङ्गत्वंदर्शयति॥ मानसव्यापाररूपाणीति॥ निदिध्यासनाङ्गत्वमाह॥सगुणेतिशाण्डिल्यविद्यानामसर्व्वं खल्विदंब्रह्म इत्युपक्रम्यसक्रतुं कुर्व्वीत-, मनोमयः प्राणशरीरोभारूप इत्यादिनाच्छान्दोग्ये विहिता॥ वाजिनामग्निरहस्याख्येऽपिकाण्डे स आत्मानमुपासीत मनोमयं प्राणशरीर मित्यादावुक्ता वृहदारण्यके च मनोमयोऽयं पुरुषो भाः सत्यइत्यादौ प्रत्यभिज्ञाता विद्यापआदि पदाद्दहरवैश्वानरादि विद्यान्तरग्रहणम् ॥ इदानीमुक्तलक्षणानां नित्यादीनामीश्वरार्पणतया नुष्ठीयमानानां परमफलं दर्शयति॥ एतेषामिति आदिपदान्नैमित्तिक प्रायश्चित्तयोर्ग्रहः॥ नित्यादीनामुपात्तदुरितक्षयद्वाराबुद्धिशुद्धि हेतुत्वमितिद्रष्टव्यं । निर्गतनिखिल कल्म षतयोक्तत्वात्। नित्यनैमित्तिकैरेव कुर्व्वाणोदुरितक्षयमित्यादिस्मृतेः॥ धर्म्मेणपापमपनुदतीतिश्रुतेश्च चित्तशुद्धेः परमप्रयोजनत्वं परम्परया मोक्षसाधनत्वात्॥ तथाचस्मृतिः॥ स्वेस्वे कर्म्मण्यभिरतः संसिद्धिंलभतेनरः स्वकर्म्मनिरतः सिद्धिंयथाविन्दति तच्छृणु॥ इत्युपक्रम्य॥ असक्तबुद्धिः सर्व्वत्रजितात्मा विगतस्पृहः॥ नैष्कर्म्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥इतितदुक्तं॥ नैष्कर्म्म्यसिद्धावपि नित्य कर्म्मानुष्ठानाद्धर्म्मोत्पत्तिः पापहानिः ततश्चित्त शुद्धिस्ततः स्वसंसारात्मा यथात्म्यावबोधस्ततो वैराग्यं ततोमुमुक्षुत्वं तत स्तदुपाय पर्य्येषणं ततः सर्व्वकर्म्मसंन्यास स्ततोयोगाभ्यास स्ततश्चित्तस्य प्रत्यक्प्रवणता । ततस्तत्त्वमस्यादि

वाक्यार्थपरिज्ञानं ततोऽविद्योच्छेद स्ततः स्वात्मन्य वस्था
मिति ॥ तस्यनित्याद्य नुष्ठानक्षयितकल्मषतया विशुद्धस्य
त्तस्य शास्त्रप्रकाशिते ध्येयेज्ञेये वा विषये ऐकाग्र्यं निश्च
त्वमित्यर्थः सूक्ष्मार्थावधारणसमर्थत्वमितियावत् ॥ पूर्व
क्तप्रकारेणानुष्ठीयमानानां नित्यादीनां उपात्त दुरितक्षयद्व
शुद्ध्यादिपरम्परया ज्ञानहेतुत्वे प्रमाणमाह । बिविदिष
ति ॥ आदिपदात्तपसाऽनाशकेनेति वाक्यशेषग्रहः ॥ वि
दिषन्तीति विविदिषासम्बन्धे विधिप्रत्ययोऽनुसंन्धेयो
र्व्वत्वात्तर्हि यज्ञादीनां विविदिषासंयोगः पूर्व्वं न प्राप्तो येन
वादत्वं वाक्यस्य कल्प्येत ॥ ननु यज्ञादीनां यावज्जीववाक्ये
वश्यकर्त्तव्यतया प्राप्तानां विविदिषार्थं यज्ञाद्यनुष्ठानमपरं
ष्येत ततः संसारव्याविवृत्सूनां द्विरनुष्ठानं स्यादितिचेन्न
दिरादिवत् संयोगपृथक्त्वोपपत्तेः । न च तर्हितेनैव न्यायेन
र्म्मणां मोक्षार्थत्वेपीति शङ्कनीयं ज्ञान कर्म्मसमुच्चय निरा
णात् तथा च न्यायः अतएवाऽग्नीन्धनाद्यनपेक्षेति कर्म
ज्ञानं प्रत्यादरादुपकारकत्वन्तु स्यात् सर्व्वापेक्षा च यज्ञा
ते रश्ववदितिन्यायात्, उक्तश्च भाष्यकृद्भिर्विविदिषा संयो
त्तु वाह्यान्तराणि यज्ञादीनीति ॥ तत्रैवस्मृतिं सम्वादयति
सेति आदिपदात् कषायपक्तिः कर्म्माणीत्यादि स्मृत्यन्तग्रह
ननु नित्यादेःसत्त्वशुद्धि तदैकाग्र्यफलकत्वे कर्म्मणा पितृलो
विद्यया देवलोकः सर्व्वत्र ते पुण्यलोका भवन्तीत्यादि श्रुति
त्यादीनां पितृलोकादिफलपरापीड्येतेति अतआह। नित्यनै
त्तिकयोरिति ॥ अत्र प्रायश्चित्ताग्रहणं तस्यावान्तरफलाभाव

न ह्युपात्तदुरितक्षयमन्तरेण तस्य किञ्चित्फलं श्रुतमस्ति, अनयोस्तु तत्श्रूयते इतिविशेषः। नित्यनैमित्तिकयोः पितृलोक प्राप्तिरवान्तरफलं उपासनानां सत्यलोकप्राप्तिरिति विवेकः, तद्यथाम्रफलार्थे आरोपिते निमित्तेच्छाया गन्धावनूत् पद्यते इतिस्मृत्युक्तच्छाया गन्धवत् पितृलोकादि फलस्यावान्तरत्वमानुषङ्गिकं तदुद्देशेन नित्यादेरविधानात् विविदिषासंयोगस्य च विधानाच्छुद्धेरेव महाफलत्वमिति भावः। ननु पितृलोकस्य कथंनित्यादि साध्यत्वंश्राद्धादि कर्म्मसाध्यत्वात्तस्य देवलोकस्य च अष्टाशीति सहस्राणां मुनीनामूर्द्धरेतसा मुत्तरेणार्य्यस्य पन्था इत्यादिस्मृते र्नैष्ठिकाद्यूर्द्धरेत आश्रमधर्म्ममात्र साध्यत्वावगमात् कुतोविद्याफलत्वमितिचेत् तत्र पृच्छामः किंश्राद्धादि नित्यनैमित्तिकरूपं कर्म्म काम्यं वेतिआद्ये कथं न नित्यादेः पितृलोकःफलं॥ द्वितीये तस्य विध्युद्देशफलेनैव निराकांक्षत्वात् पितृलोकफलसम्बन्धाभावात् नापि विना विद्यामूर्द्धरेत आश्रममात्रेणोत्तरमार्गगमनं सम्भवति, विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणायान्ति नाविद्वांसस्तपस्विन इति श्रुतौ विद्याविरहितानामुत्तरमार्गनिषेधात्, निर्णीतश्चैतदाचार्य्यै र्गुणोपसंहारपादेआनियमः सर्व्वासामविरोधःशब्दानुमानाभ्यामित्यत्राधिकरणे स्मृति र्न पुनरावृत्ति मूर्द्धरेतसामाचष्टे किन्तु गमनमात्रं,श्रुतौ तु देवलोकशब्दित ब्रह्मलोकगतानां पुनरावृत्त्य भावोऽवगम्यते एतेन प्रतिपाद्यमाना इमं मानवमावर्त्तंनावर्त्तन्त इति तेषामिह न पुनरावृत्तिरिति च यत्पुनरत्रेममिहेति च वि-

शेषणात् कल्पान्तरे आवृत्तिरवगम्यते तद्विद्यारहितानां अ
वृत्तिस्तु विद्यावतां क्रममुक्त्याम्नानादिति रहस्यं, नन्वेवंस
ति च्छान्दोग्यभाष्यविरोधः तत्र हि महता संरम्भेण ये
मेऽरण्ये श्रद्धातप इत्युपासतइति पञ्चाग्निविद्यागतवाक्
व्याख्यानावसरे गृहस्थानां विद्यारहितानामनृत पैशुन्यमा
भेदात् ब्रह्मचर्य्यादिभिरपूतत्वान्न स्वधर्म्मनिष्ठतामात्रेणो
मार्गगतिरस्ति ॥ इतरेषां नैष्ठिकवानप्रस्थमुख्य संन्यासिनां
तद्विपरीतत्वात् पूततया स्वाश्रमधर्म्मनिष्ठामात्रेणोत्तरमा
गतिरपुनरावृत्ति लक्षणाभावात् इत्याचार्य्यैरेव निरूपितं
तत्र दक्षिणेत्यादि श्रुतिः परमुक्त्यपेक्षेति व्याख्यातं तत
एवं विभागवचनमितिचेत् सत्यं ऊर्द्धरेतसामुत्तरमार्गेण
ह्मलोकगमनं विद्यांविनापीत्येतावन्मात्रं तत्रोक्तं न पुनरा
न्तिक्यपुनरावृत्तिस्तत्र विवक्षिता ॥ आभूत संप्लवंस्थानम
त्वं हि भाष्यते इत्यापेक्षिका भूतस्ववचनोदाहरणात् ॥ गुण
संहारे च तस्मादिहश्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् ॥
जसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते य एवमेतद्विदु
चामी अरण्ये श्रद्धांसत्यमुपासत इत्युदाहृत्य तत्रश्रद्धाल
ये सत्यं ब्रह्मोपासत इति व्याख्येयं सत्यशब्दस्य ब्रह्मण्यस
प्रयुक्तत्वादिति तैरेव व्याख्याततत्वात् ॥ याज्ञवल्क्यश्च
सप्तर्षि नागस्वर्गस्थं देवलोकंसमाश्रिताः तावन्त एव मुन
सर्व्वारम्भविवर्ज्जिताः ॥ तपसाब्रह्मचर्य्येण सङ्गत्यागेनमेधय
तत्र गत्वावतिष्ठन्ते यावदाभूत संप्लवमिति ॥ तस्मादात्यन्
क्यऽपुनरावृत्ति विंद्यावतामेवेति युक्तक्रममुक्तिहेतुत्वाद

ध्यायः ॥ न च तर्हि मुक्तेरेव विद्यापरमप्रयोजनत्वाच्चित्तैकाग्र्यस्य तदयुक्तमितिवाच्यं सगुणब्रह्मविदस्तथात्वेऽपि निर्गुणब्रह्मविद्याधिकारिणां चित्तैकाग्रतया एव परमप्रयोजनत्वात् तस्यापि साक्षात्कारोदयात् प्रागेव प्रमीतस्य ब्रह्मलोकगमनोपपत्तेः, प्राप्यपुण्यकृतान् लोकानुषित्वा शाश्वतीः समा इत्यादिस्मृतेः ॥ सगुणब्रह्मविदोऽपि ब्रह्मलोकगतस्य तत्र सम्भोगं विद्यावान्तरफलंभुक्तवतं स्तत्रोत्पन्नचित्तैकाग्र्यद्वारा स्वयम्भवद्वेदान्तवाक्यार्थज्ञानादेव मुक्तिरिति नियमात् भवत्येव चित्तैकाग्रतोपासनायाः परमंप्रयोजनमिति न किंचिद्दूष्यति॥ तस्मात्सर्व्वत्र ते पुण्यलोका भवन्ति इति श्रुतेर्नित्यनैमित्तिकयोः फलस्य वाचनिकत्वात्तथात्वेऽप्युक्त लक्षणभेदेन काम्यवैषम्यात् फलविशेषस्य चाश्रुतत्वात् पितृलोकस्य च फलात्मनः कर्म्मविशेषाकांक्षितत्वान्नष्टाश्वदग्धरथन्यायेन कर्म्मणा पितृलोक इति श्रुतिरुपपद्यते काम्यप्रायश्चित्तयोः फलविशेषोद्देशेन पापक्षयमात्रार्थत्वेन च विधानात् फलान्तरा कांक्षाभावात्, तथाङ्गावबद्धानां कर्म्मसमृद्ध्यर्थत्वादनङ्गावबद्धानामपि पितृलोकोपासनानां ब्रह्मोपासनानाञ्चाभ्युदयफलत्वात् कार्य्यकारण ब्रह्मोपासनानामवान्तरफलं देवलोक शब्दवाच्य ब्रह्मलोक इति परिशेषात् सिद्धिरतो युक्तं विद्ययादेवलोक इति वचनमित्यलं प्रपञ्चेन ॥ साधनसम्पन्नः प्रमाताधिकारीत्युक्तं तत्र कानिसाधनानि कियन्तीत्यपेक्षायां तानिविभजते ॥ साधनानीति ॥ विवेकमन्तरेण वैराग्ययोगात् विवेकस्य प्राथम्यं न हीदं हेयमिदमुपादेय मिति

विवेचनमन्तरेण हेयाद्रागनिवृत्तिः सम्भवति अनिवृत्तरागस्य शमाद्यभावात् शमाद्यपेक्षया विरागस्य पूर्व्वमुद्देशः । शान्त्यादिहीनस्य मुमुक्षायोगात् ततः प्रागेव शमाद्युद्देशः । एवं त्रिभिः साधनैः सम्पन्नस्य मुमुक्षाया अवश्यम्भावात् मुमुक्षायाश्च नियमेन ब्रह्मजिज्ञासाप्रवृत्तेर्मुमुक्षान्तान्येव साधनानि इत्यभिप्रायः ॥ विवेकादीन्युद्देशक्रमेण लक्षयति ॥ नित्यानित्यवस्तुविवेकस्तावदित्यादिना नित्यत्वंनाम कालावच्छिन्नत्वं तद्विपरीतत्वमनित्यत्वं न स्थास्यतीति लोकागमयोर्व्यवहारायोग्यंनित्यं तद्विपरीतमनित्यमिति वा तच्च नित्यानित्ये च ते वस्तुनीच नित्यानित्यवस्तुनी तयोर्विवेक इति विग्रहः । केचित्तु नित्यानित्ययोर्व्वसितुं शीलं ययोस्ते नित्यानित्यवस्तुनी नित्यत्वम नित्यत्वञ्च तयोः साश्रययोर्विवेको नित्यानित्यवस्तुविवेक इत्याहुः॥ स चापाततोऽधिगतवेदार्थस्यानुमान कुशलस्य ब्रह्मैव नित्यंवस्तु ततोऽन्यदखिलमनित्यमिति विवेको भवति ॥ तथा हि यस्मादर्व्वाक् संवत्सरोऽहोभिः परिवर्त्तते तद्देवाज्योतिषांज्योतिः नित्यंविभुं सर्व्वगतं सुसूक्ष्मं आकाशवत् सर्व्वगतश्च नित्यः अजोनित्यःशाश्वतः, सत्यंज्ञानमनन्तं ब्रह्म रातेर्दातुः परायणं यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यो वै भूमा तदमृतमित्यादि श्रुतिभ्योब्रह्मणि नित्यत्वं विशुद्धसत्त्वस्य पुंसः प्रतिभाति ॥ तथा नैवेह किंचनाग्र आसीत् मृत्युनैवेदमासीत् आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चनमिषत् सदेवसौम्येदमग्रआसीदेक मेवाद्वितीयं, नेतिनेति, नेहना

नास्ति किञ्चन, यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्वि-
जानाति तदल्पं अथ यदल्पं तन्मर्त्त्यमित्यादि श्रुतिवचनेभ्यो
ब्रह्मणोऽन्यत्वं भेदप्रपञ्चे नित्यत्वञ्च तस्यैव पुंसः प्रतिभाति
तथानुमानमपि विमतोऽचेतनवर्गोऽनित्यो विभक्तत्वाद्‌घट
पटस्तम्भादिवदिति ॥ अनेन हि विभक्तस्यानित्यत्वावगते
तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणोऽविभक्तस्य नित्यत्वम-
प्यर्थादवगच्छति ॥ आकाशादेश्चोत्पत्तिमत्त्वसाधनेना
नित्यत्वंमुत्तरत्र वर्णयिष्यामः । न चैवंश्रुत्यनुमानाभ्यां विवे-
के सति ब्रह्मणोज्ञातत्वादलं, विचारेणेतिवाच्यं ॥ आपाततो
नित्यवस्तु ब्रह्मेत्यवगमेऽपि तस्याद्वितीयत्व प्रत्यगभिन्नत्वा-
देरनिर्द्धारणाज्जिज्ञासाया अनिवृत्तेरित्यास्तां विस्तरः ॥
ऐहिकानामिति । इहलोकेभवा ऐहिकाः प्रतिपन्नशरीरस-
म्बन्धिनः । स्रक्‌चन्दनवनितागृहक्षेत्रपशुमर्त्त्यादिविषय जन्य-
सुखस्वरूपाभोगाः कृषिसेवाप्रतिग्रहादि कर्म्मजन्या अ-
नित्य यथा दृष्टाः एवमामुष्मिका अप्यमृतादि विषयसेवा ज-
न्यानन्दायागादिकर्म्मजन्यत्वादनित्याभवितुमर्हन्तीति नि-
श्चित्य तेभ्योऽतितरां विषमिश्रितान्नच्छर्द्दितान्नवज्जुगुप्सेहा-
मुत्र फलभोगविरागइत्यर्थः ॥ अयंभावः सुखं मे निरतिशयं
भूयात् दुःखं मा भूदणुमात्रमपीत्यखिलप्राणानामस्त्य-
भिनिवेशं । ते चैवमभिनिविष्टाः पुरुषकारावलम्बनेन
सर्व्वोत्साहं यतन्तोऽपि न लभन्ते सुखमात्यन्तिकं दुःखाभा
वश्च, कथं, केचित्समुद्रयानराजप्रीणनाद्यतिकष्टमनुभूय
फलकलेस्वयं नश्यन्ति, केचित्प्राप्तफलापिव्याध्याद्युप-

द्रुताः सन्तोभोगं न लभन्ते, ॥ केचित्तुप्राप्ते यद्भोगाश्रि
भोग्यभार्य्या पुत्रादिविनाशाद्वा तद्विसम्बादाद्वान्यैर्वा सह
स्पर्द्धा सूयादिभिः सञ्चितभोग्यजातस्य क्षयभये नानावृष्ट्य
दिचिन्ता सन्तापादिभिश्च क्षणमपि सुखमलभमानाः कष्ट
दरिद्राः काणकुब्जाक्लीववधिरादयो वुभुक्षापिपासार्दिता व
हुलमुपलभन्ते ॥ एवं दुःखवहुलेसंसारे सुखलेशमात्रमनु
भवन्नपि कृपणवद्विशुद्धचित्तो नसज्जते किन्तु विरज्यत एव
ति ॥ नन्वस्त्वेव मैहिकं सुखमनित्यत्वादि दोषदुष्टत्वाद्वि
रागास्पदं तथापि न पारलौकिकाद्विरक्ति रुपपद्यते क्षयिष्
त्वानुमानस्याक्षय्यं हवै चातुर्म्मास्ययाजिनं सुकृतं भवती
श्रुतिवाधित विषयस्यानुत्थानादिति चेत् मैवं तद्यथेह कर्म्मचि
तोलोकः क्षीयते एवमेवामुत्रपुण्यचितोलोकः क्षीयते इति
त्या वस्तुवलावलम्बनेन प्रवृत्तयाऽनन्यपरया सापेक्षाऽक्ष
फलविषयिकायाः प्रशस्तलक्षणाया विध्येकवाक्यत्वेनान्
परयास्तस्या एव वाधितत्वात् । न हि जन्यं नित्यं भाव
दृष्टं ) अत ऐहिक भोगवदेवाब्रह्मस्तम्वपर्य्यन्तेषु भोगेषु वै
ग्यमुपपद्यते इतितदुक्तं भगवताव्यासेन) यच्चकामसुखंलो
यच्चदिव्यं महत्सुखं । तृष्णाक्षय सुखस्यैते नार्हतः षोडशीं
कलामिति ॥शमादीन्विभजते॥ शमादय इति । मनसोवा
प्रवृत्तौवाह्येन्द्रियाणां द्वारत्वात् तन्निरोधमन्तरेण मनो नि
हाशक्तेर्दमानन्तरं शमोद्रष्टव्यः पाठक्रमादर्थ क्रमस्य वली
स्त्वादग्निहोत्रयवागुपाकवत् ॥ मनसोऽन्तः करणस्य निग्रह
विषयेभ्यो वलादाकर्षणं शमइत्येतावत्युक्ते श्रवणादि विष

येभ्योऽपि निग्रहे प्राप्ते ततो निग्रहस्य ज्ञानानुकूलत्वा भावादा
नर्थक्य मित्याशंक्यनिग्रहं विशिनष्टि श्रवणादीति ॥ मनना-
दिसंग्रहार्थमादिपदं एव मुत्तरत्रापिद्रष्टव्यं ॥ तद्व्यतिरिक्ते
त्यत्रश्रवणादि स्तच्छब्दार्थः। निवर्त्तितानां एतेषां वाह्यान्तरि
न्द्रियाणां तद्व्यतिरिक्त विषयेभ्यः श्रवणादिव्यतिरिक्त वि-
षयेभ्य उपरमणं पुन र्विषय प्रवृत्त्यनुत्साहकरणमुपरति
रित्यर्थः ॥ ननु शमदमयो र्लक्षणाभ्यामिदमुपरति ल-
क्षणं संकीर्णं प्रतिभाति वहिः प्रवृत्तेन्द्रिय व्यापारनिरोधात्म
कस्य लक्षणार्थस्य तुल्यत्वादित्यपरितोषात् प्रकारान्तरेणो
परतिं लक्षयति अथवा इति विहितानामवश्यकर्त्तव्यतया
चोदितानां सन्ध्यावन्दनाग्निहोत्रादीनां कर्म्मणां विधिना
तत्त्वेकेप्राजापत्यामिष्टिं कुर्वन्ति प्राजापत्यां निरूप्येष्टिं सर्व्व
वेद सदक्षिणां आत्मन्यग्निन् समारोप्य ब्राह्मणः प्रव्रजेद् गृ
हादित्यादि श्रुतिस्मृत्युक्तमार्गेण परित्यागः परिव्रजनं सं-
न्यासउपरति रित्यर्थः ॥ शमादिवत् संन्यासोऽप्यात्मज्ञाना-
न्तरङ्गत्वाद वश्यंमुमुक्षुणानुष्ठेयः तथा च श्रुतयः न कर्म्म-
णा न प्रजया धनेन त्यागेनैके अमृतत्वमान शुः ॥ वेदान्त
विज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥
एतमेव लोक मिच्छन्तः प्रव्राजिनः प्रव्रजन्ति ॥ पुत्रैषणायाश्च
वित्तैषणाया श्च लोकैषणाया श्च व्युत्थायाथ भिक्षाचर्य्यं चर
न्ति तानि वा एतानि अवराणि तपांसि न्यास एवात्यरेच
यदित्याद्याः ॥ स्मृतय श्च नैष्कर्म्म्यं सिद्धिं परमां संन्यासेना-
धि गच्छति ॥ त्वं पदार्थविचारो यः सन्न्यासः सर्व्वकर्म्म-

णां ॥ अर्थस्य मूलं प्रकृतिः क्षमाच कामस्य रूपञ्च वपुर्व यश्च ॥ धर्म्मस्य यागादि दयादम श्च मोक्षस्य सर्व्वो रमः क्रियाभ्यः ॥ प्रवृत्तिलक्षणो यागो ज्ञानं संन्यासलक्ष । तस्मात् ज्ञानं पुरस्कृत्य संन्यसेदिहबुद्धिमान् ॥ इत्याद न्यायश्च पुरुषस्योद्देश्यसिद्धये यदुपयुक्तमविरोधि च त पादेयं विपरीतं हेयमिति ॥ तदिहब्रह्मात्मजिज्ञासूनां वे न्तविचारे क्रियमाणे निष्कर्म्मणामुपयोगो विनापि क तदनुष्ठान सिद्धेः नाप्यविरोधः ॥ कर्म्मविक्षिप्त चित्तस्य दान्तार्थनिर्णयाशक्तेः कर्म्मणां विचारविरोधित्वात् ना प्येतेषामब्रह्मक्षत्राद्य कर्तृ भोक्तृ ब्रह्मास्मीत्यात्मनि वि चार्यमाणे ब्रह्मण्यनाद्यध्यासविशिष्टात्मप्रतिपत्त्यधीनेषुकर्म स्वधिकारो न विरुध्यते येनात्मजिज्ञासुना कर्म्माणि न त्यक्तव्यानि स्युः तस्मात् श्रुतिस्मृतिन्यायैरात्मज्ञा ङ्गतया यः संन्यासः कर्त्तव्यतया प्राप्तः स उपरति भावः शीतोष्णादीत्यादिपदात् मानापमानलाभालाभशोकह दि ग्रहः । श्रवणादावित्यत्रादिशब्दो मननादि संग्रहार्थः तदनुगुणोत्पन्नगुरुशुश्रूषापुस्तकसम्पादनतद्रक्षणादिःश्रवणा नुगुणो विषयो निर्दिश्यते, न पुनः सुखवासद्रव्यान्न संग्रहादेरपि श्रवणाद्यनुकूलत्वात्तदर्थं मठारम्भ प्रतिग्रह दावपि चित्तसमाधिः कर्त्तव्य इहोपदिश्यते ॥ दण्डम च्छादनं कौपीनं परिग्रहोच्छेषं विसृजेदिति संन्यासक ले त्याजितस्य दण्डकौपीनाद्यतिरिक्तस्य विना प्रति प्र वशात्तं संग्रहानुपपत्ते रित्यर्थः । समाधिरैकाग्र्यं तत् पर

मितियावत् ॥ गुरुवेदान्तादीत्यादि पदात् स्मृतीतिहास पुराणानां ग्रहः । विश्वास इदमित्थमेव नान्यथेति गुर्व्वादि वाक्येषु निश्चयात्मिका बुद्धिः सा श्रद्धेत्यर्थः ॥ चरममनु बन्धं लक्षयति । मुमुक्षुत्वमिति । मोक्षोनाम्म विद्यानिरस्ता विद्या तत्कार्य्यं ब्रह्मात्मनावस्थानं तद्विषयेच्छा मोक्षेच्छा तद्वत्वं मुमुक्षुत्वमित्यर्थः । ननु यदा सर्व्वे प्रमुच्यन्ते कामाये ऽस्यहृदिश्रिताः । अथमर्त्त्योऽमृतो भवतीति श्रुतेः ॥ सर्व्व कामविमुक्तस्य मोक्षाधिकारात् कथमिच्छा अधिकारिवि- शेषणमिति चेत्, नायं दोषः । अनात्मविषयेच्छाया एव कामत्वात्तदभिप्रायश्रुतिः, मोक्षेच्छाया स्त्वात्मविषयतयाऽ कामत्वात् ॥ अथाकामयमानो योऽकामो निष्कामः प्राप्त काम इति श्रुतेरात्मकामस्याप्तकामत्वेनाकामत्वावगमादिति विद्याधिकारिणः शमाधिसाधनवत्त्वे श्रुतिं प्रमाणयति ॥ शान्तोदान्त उपरतस्तितिक्षुः समाहितो भुत्वात्मन्येवात्मानं पश्येदितिकाण्वाः पठन्ति समाहित इत्यस्यस्थानेश्रद्धावित्तो भूत्वेतिमाध्यन्दिनाः ॥ तदुभयपाठानुरोधे गुणोपसंहारन्याय माश्रित्येहशमादयः षट्टानिर्द्दिष्टा इतिद्रष्टव्यं । शमादेर्वि- द्याहेतुत्वं भगवानप्याह ॥ योगारूढस्यतस्यैव शमःकारणमु- च्यते ॥ अशान्तस्यकुतः सुखम्, तथा यदासंहरतेचायं कु- र्म्मोऽङ्गानीवसर्व्वशः ॥ इन्द्रियाणीन्द्रियार्थेभ्य स्तस्यप्रज्ञा प्र- तिष्ठिता इति ॥ सर्व्वधर्म्मान् परित्यज्य मामेकं शरणंव्रज इति ॥ मात्रास्पर्शा स्तु कौन्तेय शीतोष्णसुखदुःखदाः ॥ स- माधावचलाबुद्धिः ॥ मय्येव मन आधत्स्वमयिबुद्धिं निवेशये

ति, श्रद्धावाँल्लभतेज्ञानं तत्परःसंयतेन्द्रियः ॥ अज्ञश्चाश्र
धानश्च संशयात्मा विनश्यतीति च ॥ मुमुक्षुत्वेऽपि मुमुक्षुं
शरणमहंप्रपद्ये ॥ ततः पदं तत्परिमार्गितव्यं यस्मिन्गता
निवर्त्तन्तिभूयः। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता
राणीति श्रुतिस्मृतीद्रष्टव्ये ॥ एवं विशेषेणविशिष्टो वेदान्
धिकारीति निरूपितेऽर्थेऽभियुक्तस्य वचनमुदाहरति उक्त
प्रशान्तेति प्रशान्तचित्ताय शान्ताय जितेन्द्रियाय दान्ता
क्षीणदोषाय नितान्तनिर्म्मलस्वान्ताय यथोक्तकारिणे का
निषिद्धवर्ज्जनपुरः सरं नित्याद्यनुष्ठानलब्धेश्वरप्रीतये गुण
न्विताय विवेकवैराग्योपरतितितिक्षासमाधानयुक्ताय स
गुरुमनुगताय श्रद्धालवे एवम्भूताय मुमुक्षवे एतदात्मज्ञानं
ततं गुरुणादेयमिति श्लोकार्थः॥तत्र यमानाह तत्रेति वाङ्
कायैःपरपीड़ावर्ज्जनमहिंसासत्यं यथार्थभाषणं अस्तेयं अ
दानरूपपरस्वहरण राहित्यंब्रह्मचर्य्यं अष्टाङ्गमैथुनवर्जनं त
चोक्तं स्मरणंकीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं सङ्कल्पोऽध्यव
यश्च क्रियानिर्वृतिरेवच।एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषि
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणमिति । अथ परिग्रह
माध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यसंग्रहः। इतिसंन्यास
कारिविषयमुक्तं ॥

( अथेदानीं संन्यासाश्रमं चतुर्विधं दर्शयति ) आश्र
पनिषदि अथर्व्ववेदे ॥ परिव्राजका आपिचतुर्विधा भवन्ति
कुटीचका१ वहुदका२ हंसाः३ परमहंसाश्चेति४ तत्रकुटीचक
ज ा रु ण रश्व ा पु न याज्ञवल्क्य हरितहारित माण्डव्य जैमि

प्रभृतयः ॥ स्वपुत्रगृहेषु भिक्षाचर्य्यं चरन्त आत्मानं प्रार्थयन्ते ॥१॥ वहुदका स्त्रिदण्ड कमण्डलु शिक्य यज्ञ जलपवित्रपात्र पादुकासन शिखायज्ञोपवीत कौपीनकाषाय केशधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षाचर्य्यं चरंत आत्मानं प्रार्थयन्ते ॥२॥ हंसा एकदण्डधारिणः शिखावर्जिता यज्ञोपवीतधारिणः। शिरस्तुण्डमुण्डवपनं कृत्वा शिक्य कमण्डलु दण्डहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषुपञ्चरात्रं वसन्तो गोमुत्रगोमयाहारा एकरात्रकृच्छ्रचान्द्रायणादिव्रतं चरन्त आत्मानं प्रार्थयन्ते ॥३॥ परमहंसाः॥ न दण्डधरः मुण्डाकंथा कौपीनवाससो त्यक्ताऽलिंगा अव्यक्ताचारो आश्रम उन्मत्तवदाचरन्त स्त्रिदण्डकमण्डलुशिक्य यज्ञोजलपवित्रपात्र पादुकासन शिखा यज्ञोपवीतानां त्यागिनः शून्यागार देवग्रहवासिनो न तेषां धर्म्मो नाधर्म्मो न ऋतश्चा नृतं सर्व्वसहाः सर्व्वसमाः समलोष्ट्राश्मकाञ्चना यथोत्पन्न मात्राहारा श्चातुर्वर्ण्ये भैक्षाचर्य्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्त इति । यतीनां प्रथमोधर्म्मो नियमो वनवासिनां वनमेव गृहस्थानां शुश्रुषा ब्रह्मचारिणां इति कात्यायनः ॥ इति चतुराश्रमधर्म्मः समाप्तः ॥ इतिचतुर्थ खण्डः इति अथर्व्ववेदे आश्रमोपानिषत् समाप्तः ॥

संन्यास्योपानिषादि प्रमाणं कुटीचकादि संन्यासधर्म्म दर्शयति ॥ तल्लक्षणमाह॥ त्यजधर्म्ममधर्म्मञ्च उभेसत्यानृते त्यज ॥ उभेसत्या नृतेत्यक्त्वा येन त्यजसि तत्त्यज॥ अथ संन्यासचतुर्विधाः सन्ति ॥ वैराग्यसंन्यासी १ ज्ञानसंन्यासी २ ज्ञानवैराग्यसंन्यासी३ कर्म्मसंन्यासीति॥४॥ चातुर्विध्यमुपागतः॥ तद्यथेति।

दृष्टा आनुश्राविकविषय वैतृष्ण्यमेत्य प्राक् पुण्यकर्म्म विशेषा संन्यस्तः स वैराग्य संन्यासी ॥ १ ॥ शास्त्रविधिमुपागतः शास्त्रज्ञानात् पापपुण्यलोकाऽनुभवश्रवणात् प्रपञ्चोपरतं देहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमि प्रवृत्तिं सर्व्वं हेयं मत्वा साधन चतुष्टय सम्पन्नो यः संन्यस्य ति स एव ज्ञानसंन्यासी ॥ २ ॥ क्रमेण सर्व्वमभ्यस्य स मनुभूय ज्ञानवैराग्याभ्यां स्वरूपाऽनुसन्धानेन देहमात्राऽ शिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्य संन्या ॥ ३ ॥ ब्रह्मचर्य्यसमाप्य गृहीभूत्वा वानप्रस्थाश्रममेत्य राग्याऽभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स क संन्यासी ॥ ४ ॥ स संन्यासः षड्विधो भवति ॥ इत्या कुटीचक बहूदक हंस परमहंस तुरीयाऽतीतोऽवधूताश्चेति कुटीचकः ॥ शिखा यज्ञोपवीती दण्डकमण्डलुधरः कौपी शाठीकन्थाधरः पितृमातृ गुर्व्वाराधनपरः पिठर खनित्र क्यादि मात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्व पुण्ड्र त्रिदण्डः ॥ २ ॥ बहुदकः शिखादिकन्थाधर स्त्रिपुण्ड्र कुटीचकवत् सर्व्वसमो मधुकरवृत्त्याऽष्टकवलाशी ॥ २ ॥ सो जटाधारी त्रिपुण्ड्रोर्ध्व पुण्ड्रधारी असंकृत मधुकरान्ना कौपीनखण्ड तुण्डधारी ॥ ६ ॥ परमहंसः शिखायज्ञोपवी रहितः पञ्चग्रहेषु करपात्री एक कौपीनधारी शाटीमे मेकं वैणवं दण्डमेक शाटीधरो वा भस्मोद्धूलनपरः सर्व्वत्य गी ॥ ४ ॥ तुरीयातीतो गोमुखवृत्या फलाहारी अन्नाहा चेत् गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणप वच्छरीर वृत्ति

॥ ५ ॥ अवधूतस्तु अनिमः पतितोऽभिशस्तवर्ज्जनपूर्व्वकं (अभिशस्त इतिकलङ्कित अपवादित)सर्व्ववर्णेष्व जगरवृत्त्या हारपरः स्वरूपानुसन्धानपरः। इति ॥ स्वरूप सन्धानंपरःश्लो-कमस्ति ॥ ६ ॥

इति चतुर्थोपदेशः । अथ नारदपरिव्राजकोपानिषदि । अथ हैनं पितामहं नारदः पप्रच्छ भगवन् सर्व्व कर्म्म निवर्त्तकः संन्यास इति त्वयैवोक्तः पुनः स्वाश्रमाचार परो भवेदित्युच्यते ॥ ततः पितामह उवाच ॥ शारीरस्य देहिनो जाग्रतस्वप्न सुषुप्ति तुरीयावस्थाः सन्ति तदधीनाः कर्म्मज्ञानवैराग्य प्रवर्त्तकाः पुरुषाजन्तव स्तदनुकूलाचाराः सन्ति तथैव चेद्भगवन् संन्यासाः कतिभेदा स्तदनुष्ठा-न भेदाः कीदृशास्तत्त्वतोऽस्माकं वक्तुमर्हसीति । तथेत्यङ्गी-कृत्य तं पितामहेन संन्यास भेदैराचार भेदः कथमिति चेत्त-त्त्वतस्त्वेक एवसंन्यासः । अज्ञानेनाशक्तिवशात् कर्म्मलोप-श्च त्रैविध्यमेत्य वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्य संन्यासः कर्म्मसंन्यासश्चेति चातुर्विध्यमुपागतस्तद्यथेति दु-ष्टमदनाभावाच्चेति विषयवैतृष्णमेत्य प्राक्पुण्य कर्म्मवशात् संन्यस्तः सवैराग्यसंन्यासी ॥ १ ॥ शास्त्रज्ञानात् पापपुण्य लोकानुभवश्रवणात् प्रपञ्चोपरतः क्रोधेर्ष्या सूयाहंकाराभि मानात्मक सर्व्व संसारंनिर्वृत्य दारैषणा धनैषणा लोकैषणा आत्मकदेहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमना न्नमिव प्रकृतीयं सर्व्वमिदंहेयं मत्वा साधनचतुष्टयसम्पन्नोयः संन्यस्यति स एव ज्ञान संन्यासी ॥२॥ क्रमेणसर्व्वमभ्यस्य

सर्व्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसन्धानेन देहमात्र
वशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी
॥३॥ ब्रह्मचर्य्यंसमाप्य गृहीभूत्वा वानप्रस्थाश्रममेत्य वै
ग्याभावेऽप्याश्रमानुसारेण यः संन्यस्यति स कर्म्मसंन्यासं
ति ॥ ४ ॥ ब्रह्मचर्य्येण संन्यस्य संन्यासाज्जातरूपधरोवैराग्य
न्यासी ॥ ५ ॥ विद्वत्संन्यासीज्ञानसंन्यासी ॥ त्रिविदिषासंन्
सी कर्म्मसंन्यासी कर्म्मसंन्यासोऽपि द्विविधः ॥ निमित्तसंन्
सोऽनिमित्तसंन्यासश्चेति ॥ निमित्तस्त्वातुरः अनिमित्तक
संन्यासः ॥ आतुरः सर्व्वकर्म्मलोपः प्राणस्योत्क्रमणक
संन्यासः स निमित्तसंन्यासः ॥ दृढाङ्गोभूत्वा सर्व्वकृतकं
श्वरमितिदेहादिकं सर्व्वंहेयंप्राप्य हंसः शुचिषद्वसुरन्तरिक्ष
होतावेदिषद तिथिर्दुरोणसत् नृषद्वरसदृत सद्व्योमसद
गोजाऋतजा अद्रिजाऋतं वृहत् ॥ ब्रह्मव्यतिरिक्तं सर्व्व
रमिति निश्चितः क्रमेण यः संन्यस्यति स संन्यासोऽनि
संन्यासः ॥ संन्यासः षड्विधोभवति ॥ कुटीचको बहू
हंसः परमहंस तुरीयातीतोऽवधूतश्चेति ॥ कुटीचकः शि
यज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृम
र्व्वाराधनपरः पिठरखनित्र शिक्यादिमन्त्रसाधनपर
त्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः ॥ १ ॥ वहूद
शिखादिकन्थाधर स्त्रिपुण्ड्रधारी कुटीचकवत् सर्व्वसमो
धुकरवृत्त्याष्टकवलाशी ॥ २ ॥ हंसोजटाधारी त्रिपुण्ड्रो
पुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्ड तुण्डध
॥ ३ ॥ परमहंसः शिखायज्ञोपवीत रहितः पञ्चगृहेष्वेकर

अन्नादनपरः करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्व्वत्यागी ॥ ४ ॥ तुरीयातीतो गोमुखःफलाहारी अन्नाहारी चेत् गृहत्रयेदेहमात्रावशिष्टोदिगम्बरः कुणपवच्छरीरवृत्तिकः ॥५॥ अवधूतस्त्व नियमोऽभिशस्त पतित वर्ज्जनपूर्व्वकं सर्व्ववर्णेष्व जगरवृत्त्याहारयरः स्वरूपानु सन्धानपरः ॥ ६ ॥ आतुरोजीवति चेत् क्रमसंन्यासः कर्त्तव्यः । कुटीचकवहूदकहंसानां ब्रह्मचर्य्याश्रमादि तुरीयाश्रमवत् । कुटीचकादीना संन्यासविधिः॥ परमहंसादि त्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलु नंदण्डः सार्व्ववर्णैक भैक्षाटनपरत्वं जातरूपधरत्वं विधिः॥ संन्यासकालेऽप्यलं वुद्धिपर्य्यन्त मधीत्यतदनन्तरंकटिसूत्रंकौपीनं दण्डवस्त्रंकमण्डलुं सर्व्वमप्सुविसृज्याथ जातरूपधरश्चरेन्न कन्थालेशो नाध्येतव्यो न श्रोतव्यमन्यत् किञ्चित् प्रणवादन्यं न तर्कंपठेन्न शब्दमपिवृहच्छब्दान्नाध्यायेन्न महद्वाचोविग्लापनं गिरापाण्यादिना सम्भाषणान्नान्यभाषाविशेषेण न शूद्रस्त्रीपतितोदक्यासम्भाषणं न यतेर्देवपूजा नुत्सवदर्शनं तीर्थयात्रावृत्तिः ॥ पुनर्यतिविशेषः ॥ कुटीचकस्यैकत्रभिक्षा वहूदकस्यासंकॢप्तमाधूकरं हंसस्याष्टगृहेष्व ष्टकवलं । परमहंसस्य पञ्चगृहेषु करपात्रं ॥ फलाहारोगोमुखं तुरीयातीतस्य ॥ अवधूतस्याजगरवृत्तिः सार्व्ववर्णिकेषु ॥ यतिर्नैकरात्रं वसेन्नकस्यापि नमेत् तुरीयातीतावधूतयोर्न ज्येष्ठो यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठो हस्ताभ्यां नद्युत्तरणं न कुर्य्यात् ॥ न वृक्षमारोहेत् न यानादिरूढो न क्रय

विक्रयपरो न किञ्चिद्विनिमयपरो न दाम्भिको नानृतवादं न यतेः किञ्चित्कर्त्तव्यमस्त्य स्ति चेत् साङ्कर्य्यं ॥ तस्मा न्मननादौ संन्यासिनामधिकारः ॥ आतुरकुटीचकयोर्भूर्लो भुवर्लोकौ वहूदकस्य स्वर्गलोको हंसस्य तपोलोकः परमं सस्य सत्यलोक स्तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्‍ स्वरूपानु संधानेन भ्रमरकीटन्यायवत् । श्लोकः ॥

यंयंवापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ॥
तन्तमेव समाप्नोति नान्यथा श्रुतिशासनम् ॥

तदेवंज्ञात्वा स्वरूपानुसंधानं विना न्यथाचारपरो नभवे तदाचारवशात् तत्तल्लोकप्राप्तिर्ज्ञान वैराग्यसम्पन्नस्य स्वस्मि न्नेवमुक्तिरिति न सर्व्वत्राचारप्रसक्तिस्तदाचारः ॥ इति ॥

अथ शाठ्यायनीयोपनिषदि कुटीचकादि परिव्राजका न्यासं दर्शयति ॥ अथखलुसौम्य कुटीचको वहुदकोहं परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति सर्व्वएते ष्णुलिङ्गिनः कुटीचकः शिखिनोपवीतिनःशुद्धचित्ताआत्म मात्मनाब्रह्मभावयन्तः शुद्धचिद्रूपोपासनरता जपयमव नियमवंतः सुशीलिनः पुण्यलोकाभवन्ति ॥ तदेतदृचाऽ क्तं। कुटीचको वहुदकश्चापिहंसः परमहंसइति वृत्त्या भिन्नाः ॥ सर्व्वे एतेविष्णुलिङ्गं दधाना ॥ व्यक्तयाव्यक्तं रन्तश्च नित्यं पञ्चयज्ञा देवशिरःप्रविष्टाः क्रियावन्तोऽमी ब्र विद्यां। त्यक्त्वा वृक्षं वृक्षमूलंश्रिता सः संन्यस्त पुष्पारसमे ऽश्नुवानाः॥ विष्णुक्रीडा विष्णुरतयो विमुक्ताविष्ण्वात्मक विष्णुमेवापियन्ति ॥ ११ ॥ त्रिसंध्यंशक्तितः स्नानंतर्प

मार्जनंतथा॥ उपस्थानं पञ्चयज्ञान् कुर्य्यादामरणाऽन्तिकम्१२
दशभिः प्रणवैः सप्तव्याहृतिभि श्चतुष्पदा ॥
गायत्री जपयज्ञश्च त्रिसंध्यं शिरसा सह ॥ १३ ॥
योगयज्ञः सदैकाग्र्य भक्त्या सेवा हरेर्गुरोः॥
अहिंसातु तपोयज्ञो वाङ्मनः कायकर्म्मभिः ॥ १४ ॥
नानोपनिषदभ्यासः स्वाध्यायो यज्ञ ईरितः॥
ओमित्यात्मानमव्यग्रो ब्रह्मण्यग्नौ जुहोति तत् ॥ १५ ॥
ज्ञानयज्ञः स विज्ञेयः सर्व्वयज्ञो त्तमोत्तमः ॥
ज्ञानदण्डा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः ॥ १६ ॥
शिखाज्ञानमयी यस्य उपवीतञ्च तन्मयम् ॥
ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ॥ १७ ॥

॥ इति कुटीचकासंन्यासादि लिङ्गमुक्तं ॥

## ॥ अथ तुरीयातीता वधूतोपनिषदि प्रमाणमाह ॥

तुरीयातीत संन्यासपरिव्राजाक्ष मालिका ॥
अव्यक्तैकाक्षरं पूर्णा सूर्य्याक्ष्य ध्यात्मकुण्डिका ॥ २ ॥

अथतुरीयातीतावधूतानां कोऽयं मार्गस्तेषां कास्थिति-रिति पितामहो भगवन्तं पितरमादिनारायणं परिसमेत्योवाच तमाह भगवन् नारायणो योऽयमवधूतमार्गस्थो लोके दुर्लभतरो न तु वाहुल्यो यद्येकोभवति स एव नित्यपूतः स एव वैराग्यमूर्त्तिः स (मुक्ति) एव ज्ञानाकारः स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते ॥ महापुरुषो य स्तच्चित्तं मय्येवावतिष्ठते। अहं च तस्मिन्नेवावस्थितः सोऽयमादौतावत् क्रमेण कुटी

चको वहूदकत्वं प्राप्य वहूदको हंसत्वमवलम्ब्य हंसः पर
हंसोभूत्वा स्वरूपानुसन्धानेन सर्व्वप्रपञ्चं विदित्वा दण्ड
मण्डलु कटिसूत्र कौपीनाच्छादनं स्वविध्युक्त क्रियादिकं
र्व्वमप्सु संन्यस्य दिगम्बरो भूत्वा विवर्णजीर्ण वल्कला
जिनपरिग्रहमपि सन्त्यज्य तदूर्ध्वममन्त्रवदाचरन् क्षौ
भ्यङ्गस्नानोर्ध्व पुण्ड्रादिकं विहाय लौकिक वैदिकमप्युपसंह
सर्व्वत्र पुण्यापुण्य वर्जितो ज्ञानाज्ञानमपि विहाय ॥ शीत
ष्ण सुखदुःखमानाऽवमानं निर्जित्य ( निर्भिद्य ) वासना
पूर्व्वकं निन्दाऽनिन्दागर्व्वमत्सरदम्भदर्पद्वेषकामक्रोधलो
मोहहर्षामर्षाऽसूयात्म संरक्षणादिकं दग्ध्वास्ववपुः कुणपा
मिव पश्यन्नयत्नेनाऽनियमेन लाभालाभौ समौभूत्वा गोवृ
प्राणसंधारणं कुर्व्वन् यत् प्राप्तं तेनैव निर्लोलुपः सर्व्वविद्या
पिडत्य प्रपञ्चभस्मी कृत्यस्वरूपं गोपयित्वा ज्येष्ठाऽज्येष्ठ
पलापकः सर्व्वोत्कृष्टत्व सर्व्वात्मकत्वाऽद्वैतं कल्पयित्वा म
व्यतिरिक्तः कश्चिन्नाऽन्योऽस्तीति देवगुह्यादिधन ( दीन्ध
मात्मन्युपसंहृत्य दुःखेन नोद्विग्नः सुखेन नाऽनुमोदको
निःस्पृहः सर्व्वत्रशुभाशुभयो रनभिस्नेहः सर्व्वेन्द्रियोपरमः
( श्च ) पूर्व्वापन्नाश्रमाचार विद्याधर्म्म प्रभवमननुस्म
न्त्यक्त वर्णाश्रमाचारः सर्व्वदा दिवानक्त समत्वेनाऽस्व
सर्व्वदासञ्चारशीलो देहमात्राऽवशिष्टो जलस्थलकमण्ड
सर्व्वदाऽनुन्मत्तो वालोन्मत्तपिशाचवदेकाकी सञ्चरन्न सम्भ
षणपरः स्वरूपध्यानेन निरालम्बमवलम्ब्य स्वात्मनिष्ठा
कूलेन सर्व्वंविस्मृत्य तुरीयातीताऽवधूतवेषेणाऽद्वैत निष्ठाप

प्रणवात्मकत्वेन देहत्यागं करोति यः सोऽवधूतः स कृतकृत्यो भवती त्युपनिषत् ॥ अवधूतोपनिषत् समाप्तः ॥

अथेदानीं परमहंसपरिव्राजकोपनिषदि कुटीचकादि संन्यासधर्म्मनिर्णयमाह ॥ सर्व्वेषु कालेषुलाभालाभौ समौ भूत्वा करपात्र माधूकरेणाऽन्नमश्नन् मेदोवृद्धिमकुर्व्वन्कृशी भूत्वा ब्रह्माऽहमस्मीति भावयन् गुर्व्वर्थग्राममुपेत्यध्रुवशीलोऽष्टौमास्येकाकी चरेद् द्वावेवाचरेत् ॥ यदाऽलंवुद्धिर्भवेत्तदा कुटीचको वा वहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्व्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्व्वमप्सुविसृज्याऽथ ॥ जातरूपधरश्चरेत् ॥ ग्रामेएकरात्रं तीर्थेत्रिरात्रं पत्तनेपञ्चरात्रं क्षेत्रेसप्तरात्रमनिकेत स्थिरमतिरनग्निसेवी निर्व्विकारो नियमाऽनियममुत्सृज्य प्राणसन्धारणार्थमयमेवलाभालाभौ समौभूत्वा गोवृत्त्या भैक्षमाचरन्नुदकस्थल कमण्डलुरबाधकरहस्यस्थलवासो न पुनर्लाभालाभरतः शुभाशुभकर्म्म निर्मूलनपरः सर्व्वत्र भूतलशयनः क्षौरंकर्म्मपरित्यक्तो युक्त चातुर्मास्यव्रतनियमः शुक्लधनपरायणोऽथ स्त्री पुरपरांमुखोऽनुन्मत्तो ऽप्युन्मत्तवदाचरन्नव्यक्तलिङ्गोऽव्यक्ताचारो दिवानक्त समत्वेनाऽस्वप्नः स्वरूपानुसन्धान ब्रह्मप्रणवध्यानमार्गेणाऽवहितः संन्यासेन देहत्यागं करोति स परमहंसपरिव्राजकोभवति ॥ इति ॥

अथ भिक्षूकोपनिषद्यपि प्रमाणमाह ॥ भिक्षुणां पटलं यत्रविश्रान्ति मगमत्सदा ॥ तत्त्रैपदं ब्रह्मतत्त्वं ब्रह्ममात्रं करोतु मां अथ भिक्षूणांमोक्षार्थिनां कुटीचक वहूदक हंस पर

महंसाश्चेति चत्वारः कुटीचको नाम गौतम भरद्वाज याज्ञ वल्क्यवशिष्ठप्रभृतयोऽष्टौग्रासां श्चरन्तो योगमार्गे मोक्षमेव प्र र्थयन्ते ॥ १ ॥ अथ वहूदकानाम त्रिदण्डकमण्डलु शिख यज्ञोपवीत काषायवस्त्रधारिणो ब्रह्मर्षिगृहे मधुमांस वर्जयि त्वाऽष्टौ ग्रासान्भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेवप्रा यन्ते ॥ २ ॥ अथ हंसानाम ग्रामैकरात्रं नगरेपञ्चरात्रं क्षे सप्तरात्रं तदुपरि न वसेत् ॥ गोमूत्रगोमयाहारिणोनित्यं न्द्रायणपरायणा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥ ३ ॥ अ परमहंसानाम संवर्त्तकारुणिश्वेतकेतु जडभरत दत्तात्रेयशु वामदेव हारीतक प्रभृतयोऽष्टौग्रासां श्चरन्तो योगमार्गे मो क्षमेव प्रार्थयन्ते ॥ ४ ॥ वृक्षमूले शून्यगृहे श्मशानवासि वा साम्बरा वा दिगम्बरा वा न तेषां धर्म्माधर्म्मौ लाभाला शुद्धाशुद्धौ द्वैतवर्जिताः समलोष्ट्राश्मकाञ्चनाः सर्व्ववर्ण भैक्षाचरणं कृत्वा सर्व्वत्रात्मैवेति पश्यन्ति। अथ जातरूप निर्द्वन्दा निष्परिग्रहाः शुक्लध्यानपरायणा आत्मनिष्ठाः प्रा सन्धारणार्थं यथोक्तकाले भैक्षमाचरन्तः शून्यागार देव तृणकूट वल्मीक वृक्षमूल कुलालशालाऽग्निहोत्रशाला नदी लिन गिरिकन्दर कुहरकोटर निर्झर स्थण्डिले। तत्रब्रह्म सम्यक्सम्पन्नाः शुद्धमानसाः परमहंसाचारणेन संन्यासे देहत्यागं कुर्व्वन्ति ते परमहंसा नामेत्युपनिषत् ॥ इति भि कोपनिषदुक्तं ॥

याज्ञवल्क्यसंहितामिताक्षराव्याख्यामाह ॥ (५६ श्लो टीका) वैखानसधर्म्माननुक्रम्य क्रमप्राप्तान् परिव्राजक

र्म्मान् साम्प्रतं प्रस्तौति ॥ यावता कालेन तीव्रतपः शोषितव-पुषो विषयकषाय परिपाको भवति पुनश्च यदोद्भवाशङ्का नोद्भाव्यते तावत् कालं वनवासं कृत्वा तत् समनन्तरं मोक्षे मनः कुर्य्यात् वनगृहशब्दाभ्यां तत्सम्बन्धा श्रामो लक्ष्यते मोक्षश-ब्देन च मोक्षैक फलकश्चतुर्थाश्रमः । अथवा गृहाद् गार्हस्था दनन्तरं मोक्षे ।

याज्ञवल्क्यसंहितायां यतिधर्म्मनिरूपयति ॥

वनाद्गृहाद्वा कृत्वेष्टिं सर्व्ववेद स दक्षिणाम् ॥
प्राजापत्यां तदन्तेतानग्नीनारोप्य चात्मनि ॥ १ ॥
अधितवेदो जपकृत् पुत्रवानऽन्नदोऽग्निमान् ॥
शक्त्या च यज्ञकृन्मोक्षेमनः कुर्य्यात्तु नान्यथा ॥ २ ॥
सर्व्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ॥
एकारामः परिव्राज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ३ ॥
अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिलक्षितः ॥
रहिते भिक्षुकैर्ग्रामे यात्रामात्र मलोलुपः ॥ ४ ॥
यतिपात्राणि मृद्वेणुदर्व्वा लावुमयानि च ॥
सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणात् ॥ ५ ॥
सन्निरुध्येन्द्रियग्रामं रागद्वेषौ ।विहाय च ॥
भयंहत्वा च भूतानाममृती भवति द्विजः ॥ ६ ॥
कर्त्तव्याशय शुद्धिस्तु भिक्षुकेण विशेषतः ॥
ज्ञानोत्पत्ति निमित्तत्वात् स्वातन्त्र्य करणाय च ॥ ७ ॥
अवेक्ष्या गर्भवासाश्च कर्म्मजा गतयस्तथा ।
आधयो व्याधयः क्लेशा जरारूप विपर्य्ययाः ॥ ८ ॥

भवोजाति सहस्रेषु प्रियाप्रिय विपर्य्ययः ॥
ध्यानयोगेन सम्पश्येत् सूक्ष्मआत्मात्मनिस्थितः ॥ ९ ॥
नाश्रमः कारणंधर्म्मे क्रियमाणो भवेद्धिसः ॥
अतो यदात्मनोऽपथ्यं परस्य न तदा चरेत् ॥ १० ॥
सत्यमस्तेयमक्रोधो ह्रीःशौचं धीर्धृतिर्द्दम ॥
संयतेन्द्रियता विद्या धर्म्मः सर्व्वउदाहृतः ॥ ११ ॥

इतियाज्ञवल्क्य संहिता यतिधर्मप्रकरणमुक्तम् (टीका) मनः कुर्य्यात्अनेन च पुर्व्वोक्तश्चतुराश्रम समुच्चयपक्ष पाक्षिक इतिद्योतयति तथा च विकल्पो जावालश्रुतौ श्रुयते। ब्रह्मचर्य्यं परिसमाप्य गृहीभवेत् गृहीभूत्वावनीभवेत् वनीभूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वा बनाद्वेति तथा गार्हस्थ्येतराश्रम वाधश्च गौतमेन दर्शितः एकाश्रम्यं त्वाचार्य्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्येति एषाञ्च समुच्चय विकल्पवाधपक्षाणां सर्व्वेषां श्रुतिमूलत्वादिच्छया विकल्पः अतोयत् कैश्चित् पण्डितमन्यैरुक्तं स्मार्त्तत्वान्नैष्ठिकादीनां गार्हस्थ्येन श्रौतवाधः गार्हस्थ्यानधिकृतान्धक्लीवादि विषयतावेति तत् स्वाध्यायाध्यायन वैधूर्य्यनिवन्धनमित्युपेक्षणीयं । किञ्च यथा विष्णुक्रमणाज्यं वेक्षणाद्यक्षमतया पङ्ग्वादीनां श्रौतेष्व नाधिकारस्तथा स्मार्तेष्व प्युदकुम्भाहरण भिक्षाचर्य्यादिष्व क्षमत्वात् कथंपङ्ग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्व्वाहः अस्मिंश्चाश्रमे ब्राह्मणस्यैवाधिकारः॥ आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ इति ॥ तथा एष वोऽभिहितोधर्म्मो ब्राह्मणस्य चतुर्विधः। इत्युपक्रमे

पसंहाराभ्यां मनुना ब्राह्मणस्याधिकार प्रतिपादनात् । ब्राह्मणाः प्रव्रजन्तीति श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य अन्येतु त्रैवर्णिकाणांप्रकृतत्वात् त्रयाणां वर्णानां वेदमधीत्यचत्वार आश्रमा इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकारमाह ॥ यदा च वनाद् गृहाद्वाप्रव्रजति तदासर्व्व वेदसदक्षिणांसार्व्व वेदसीसर्व्वधनसम्बन्धिनी दक्षिणा यस्याः सा तथोक्ता तां प्रजापतिदेवताकामिष्टिंकृत्वा तदन्तेतान् वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन समारोप्य च शब्दादुदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शुद्धेनकायेनाष्टौ श्राद्धानिनिर्वपेत् द्वादशवेति बौधायनाद्युक्तं पुरश्चरणादिकञ्च कृत्वा तथाधीतवेदो जपपरायणोजात पुत्राद्दीनाऽन्ध कृपणार्पितार्थो यथाशक्त्यऽन्नदश्च भूत्वाऽनाहिताग्निर्ज्येष्ठ त्वादिना प्रतिवन्धाभावेकृताधानोनित्यनैमित्तिकान् यज्ञान् कृत्वा मोक्षे मनः कुर्य्या च्चतुर्थाश्रमं प्रविशे न्नान्यथा अनेनानपाकृत ऋणत्रयस्य गृहस्थस्य प्रव्रज्यायामनधिकारं दर्शयति यथाह मनुः । ऋणानित्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यध इति ॥ यदा तु ब्रह्मचर्य्यात् प्रव्रजति तदा न प्रजोत्पादनादिनियमः अकृतदारपरिग्रहस्य तत्रानधिकारात् रागप्रयुक्तत्वाच्च विवाहस्य च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयं विद्याधनार्जन नियमवदन्य प्रयुक्तदार सम्भवे तस्या नाक्षेपकत्वात् न तु जायमानो ब्राह्मणस्त्रिभि ऋणवान्जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजयापितृभ्य इति जात

पुत्रमात्रस्य एव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति
मैवं न हि जातमात्र अकृतदाराग्नि परिग्रहो यज्ञादिष्वधिक्रिय
तस्मादधिकारी जायमानो ब्राह्मणादि यज्ञादीननुतिष्ठेदि
तस्यार्थः ॥ अतश्चोपनीतस्य वेदाध्ययनमेवावश्यकं कृ
दाराग्निपरिग्रहस्य प्रजोत्पादनमपीतिनिरवद्यं ॥

## ॥ अथ कुटीचक्रः पुत्रान्नजीवी गृहस्थवदिति ॥

अतएवंप्रकारेण बहूशिष्यान ध्यापयन् अष्टमे वं
प्राप्ते श्रीमद्गोविन्द योगेन्द्रस्य सदुपदेशात् परमहंसाश्रम स्वी
कारंकृतवान् ॥ श्रीमच्छङ्कर भगवत्पुज्य पादाचार्य्य सर्वज्ञ
ननुब्राह्मणानां ब्रह्मचर्य्याद्याश्रम चतुष्टय मस्ति, तथा च श्रुति
ब्रह्मचर्य्यं समाप्य गृही भवेत् गृही भुत्वा वनी भवेत्वनी भूत्वा
ऽथप्रव्रजेदिति एतै रेवाश्रमैरेव ॥ यथोक्त कर्म्मानुष्ठितै र्मुक्ति
र्भवत्येव क्रममन्तरेण ब्रह्मचर्य्याश्रमात् परमहंसाश्रमस्वी
कारः किमर्थमङ्गीकृतो भगवद्भिरिति ॥ तत्रापिकुटीचका
द्याश्रमाण्यतिक्रम्य परमहंसाश्रमस्वीकारश्चेति च प्राप्ते
ब्रूमः । ब्रह्मचर्य्याद्याश्रमेषु यत्र विराग उत्पन्नस्तदाश्रमा
देव प्रव्रजेन्न तद्युक्तं । यदीतरथा ब्रह्मचर्य्यादेव प्रव्रजेत्। गृह
द्वावनाद्वा अथ पुनरव्रती वा उत्सन्नाग्निकोवा यदहरेव वि
जेत् तदहरेव प्रव्रजेदितिश्रुतेः । कुटीचक्राद्याश्रमाणां पर
महंसाश्रमाधिकारिविषयत्वाभावाद्भगवद्भिः पूर्णब्रह्मानु
ष्ठानविचक्षणैः । भेदगन्धराहितान्तःकरणैः सर्व्वज्ञैः परम
हंसाश्रम एवाङ्गीकृत इति निरवद्यं ॥ इति ॥

अथ कुटीचकादि संन्यासस्य तात्पर्य्यदीपिका समेता-सूतसंहितायां ज्ञानयोगखण्डे षष्ठोऽध्याये यदुक्तं तद्वर्णयति ॥

अथ वाऽग्नीन् समारोप्य स्वात्मनि ध्यानतत्परः ॥
अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ॥ १ ॥
सदोपनिषदभ्यासपरो वास्यात् समाहितः ॥
त्रिपुण्ड्रोद्धूलनं कुर्य्याद्गृहस्थस्योक्तमन्त्रतः ॥ २ ॥
यदा वैराग्य मुत्पन्नं तदैव प्रव्रजेद्वनी ॥
वहूदके वा हंसे वा मुमुक्षुः परमहंसके ॥ ३ ॥
सर्व्वं संग्रहरूपेण सम्यगुक्तं वृहस्पति ॥
तस्मात् सर्व्वप्रयत्नेन श्रद्धया विद्धि सुव्रत ॥ ४ ॥

## ॥ ईश्वरउवाच ॥

अथातः सं प्रवक्ष्यामि संन्यासं मुनिसत्तम ॥
चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदत ॥ ५ ॥
कुटीचको मुनिश्रेष्ठ स्तथैवच वहूदकः ॥
हंसः परमहंसश्च तेषांवृत्तिं वदामि ते ॥ ६ ॥

अस्यार्थः ॥ वनस्थप्रसङ्गेनोद्दिष्टमेव कुटीचकादिचतुष्टयं तद्धर्म्माभिधानाय पुनरनुवदति ॥ अथात इति ॥

## ॥ अत उक्तमाश्रमत्रयंधर्म्मं स्कन्दः ॥

सांसारिकफलविषय एव । श्रूयते हि त्रयोधर्म्म स्कन्धा यज्ञोऽध्ययनं दानमिति । प्रथम स्तप एव द्वितीयोब्रह्मचर्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन् सर्व्वएते पुण्यलोका भवन्तीति । अतस्ततो विरक्त-

स्यानन्तरमपुनरावृत्तिरूप ब्रह्मप्राप्तये ज्ञानस्कन्धः संन्यास उच्यते श्रूयते हिं ब्रह्मसंस्थोऽमृतत्त्व मेति ॥ इति ॥ ब्रह्मणि संस्थासम्यङ्निष्ठा यस्य चतुर्थाश्रमिणः स ब्रह्मसंस्थः स एवामृतत्त्वमपवर्गंप्राप्नोति । आश्रमान्तराणामपि ब्रह्मसंस्थात्व संभवं प्रापय्यपरिहृतं हि तत्त्वविद्भिः ॥ लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा यथावकाशं ब्रह्मैव ज्ञातु मर्हत्यवारणात् ॥ अनन्याचित्तता ब्रह्मनिष्ठाऽसौ कर्म्मिणे कथं कर्म्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः ॥ इति ॥

विवृतंचैतत्तैरेव त्रयोधर्म्मस्कन्धा इत्यत्राश्रमानधिकृत्य ॥ सर्व्वएते पुण्यलोक्काभवन्ति ॥ इति ॥ आश्रमानुष्ठायिनां पुण्यलोकमभिधाय ब्रह्मसंस्थोऽमृतत्त्वमेति । इति मोक्षसाधनत्वेनब्रह्मनिष्ठा प्रतिपद्यते । सेयंब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते ॥

आश्रमकर्म्मण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं सुकरत्वात् । न हि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति तस्मादस्ति सर्व्वस्याश्रमिणो ब्रह्मनिष्ठतेति प्राप्ते ब्रूमः ब्रह्मनिष्ठा नाम सर्व्वव्यापार परित्यागेनानन्यचित्ततया ब्रह्मणिसमाप्तिः ॥ न चासौकर्म्मशूरे सम्भवति कर्म्मानुष्ठानत्यागयोः परस्परविरोधात् तस्मात् कर्म्मत्यागिन एव ब्रह्मनिष्ठेति वृत्तिभेदत इति आचारभेदतः॥ १ ॥ २ ॥ कुटीचकश्च संन्यस्य स्वेस्वे वेश्मनिनित्यशः ॥ भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथवा ॥ ३ ॥ शिखीयज्ञोपवीतीस्यात् त्रिदण्डी सकमण्डलुः ॥ स पवित्रश्च काषायी गायत्रीं च जपेत्सदा ॥

॥ ४ ॥ सर्व्वाङ्गोद्धूलनं कुर्य्यात् त्रिपुण्ड्रञ्च त्रिसन्धिषु ॥
शिवलिङ्गार्च्चनं कुर्य्या च्छ्रद्धयैव दिनेदिने ॥ ५ ॥

## ॥ कुटीचका सन्न्यासलिङ्गधारण मुक्तम् ॥

वहूदकश्च संन्यस्य वन्धूपुत्रादि वर्ज्जितः ॥
सप्तागारं चरद्भैक्ष्यमेकान्नं परिवर्जयेत् ॥ ६ ॥
गोवालरज्जुसंवद्धं त्रिदण्डं शिक्यमद्भुतम् ॥
पात्रं जलपवित्रञ्च कौपीनञ्च कमण्डलुम् ॥ ७ ॥
आच्छादनं तथा कन्थांपादुकां छत्रमद्भुतम् ॥
पवित्र मजिनं सूचीं पक्षिणी मक्षसूत्रकम् ॥ ८ ॥
योगपट्टं वहिर्वस्त्रं मृत्खणित्रीं कृपाणिकाम् ॥
सर्व्वाङ्गोद्धूलनं तद्वत् त्रिपुण्ड्रं चैव धारयेत् ॥ ९ ॥
अस्यार्थः । मृत्खन्यते यया स्नानाद्यर्थं तां कृपाणिकांकृपाणाकार तीक्ष्णलौह घटितां यष्टिं ॥
शिखी यज्ञोपवीती च देवताराधने रतः ॥
स्वाध्यायी सर्व्वदा वाचमुत्सृजेत् स्थानतत्परः ॥
सन्ध्याकालेषु सावित्रींजपन् कर्म्म समाचरेत् ॥ १० ॥
इतिवहूदकश्च लक्षणमुक्तम् ॥ हंस लक्षणमाह ॥
हंसः कमण्डलुं शिक्यंभिक्षापात्रं तथैव च ॥
कन्थांकौपीन माच्छाद्य मङ्गवस्त्रं वहिः पटं ॥
एकन्तु वैणवं दण्डंधारये न्नित्यमादरात् ॥ ११ ॥
त्रिपुण्ड्रोद्धूलनं कुर्य्याच्छिवलिङ्गं समर्च्चयेत् ॥
अष्टग्रासं सकृन्नित्य मश्नीयात् सशिखंभवेत् ॥
सन्ध्याकालेषु सावित्रीजपमध्यात्मचिन्तनम् ॥ १२ ॥

तीर्थसेवां तथाकृच्छ्रं तथा चान्द्रायणादिकम् ॥ १९ ॥
कुर्व्वन्ग्रामैकरात्रेण न्यायेनैव समाचरेत् ॥

## ॥ परमहंस लक्षणमाह ॥

परहंस स्त्रिदण्डश्च रज्जुंगोवालनिर्म्मितम् ॥
शिक्यंजलपवित्रश्च पवित्रश्च कमण्डलुम् ॥
पाक्षिणीमजिनं सूचीं मृत्खनित्रीं कृपाणिकाम् ॥
शिखांयज्ञोपवीत श्च नित्यकर्म्म परित्यजेत् ॥
कौपीनाच्छादनं वस्त्रंकन्था शीतनिवारिकां ॥
योगपट्टं वहिर्वस्त्रं पादुकांच्छत्रमद्भुतम् ॥
अक्षमालाश्च गृह्णीया द्वैणवं दण्डमव्रणम् ॥
अग्निरित्यादिभिर्म्मन्त्रै कुर्य्यादुद्धूलनं मुदा ॥
ओं ओमिति च त्रिः प्रोच्य परहंस स्त्रिपुण्ड्रकम् ॥
मृत्पात्रं कांस्यपात्रं वा दारुपात्रं श्च वैणवम् ॥
पाणिपात्रञ्च गृह्णीयादाचम्यैव तथोदरम् ॥ २० ॥

अस्यार्थः । हेयोपादेय विभववित्रक्षया प्रथमं साधारणे न संभवेत् पात्रजातमुद्दिशति ॥ मृत्पात्रमिति ॥ एतच्चा' लावु पात्रस्याप्युपलक्षणं ॥ मृत्पात्रमलावुपात्रं दारुपात्रं वा इत्यारुणिश्रुतेः । उद्दिष्टमध्य उपादेयमाह दारुपात्रमिति' एतच्चकांस्य व्यतिरिक्तस्योपलक्षणम् ॥ उपादेयमन्यदपि समुच्चिनोति तथोदरमिति ॥ २० ॥ वहूदकानां हंसानां पा' णिपात्र तथोदरम् ॥ कांस्यपात्रं न विद्युक्त मृत्पात्रमिति हि श्रुतिः ॥ २१ ॥ माधूकरमथैकान्नं परहंसः समाचरेत् ॥ नात्यश्नतस्तुयोगोऽस्ति न चैकान्तमनश्नतः ॥ तस्माद्द्योगा

जुगुप्स्येन भुञ्जीत परहंसकः ॥ अभिशस्तं समुत्सृज्य सार्व्ववा-र्णिक माचरेत् ॥२३॥ उत्तरोत्तरलाभेतु पूर्व्वं पूर्व्वं परित्यजेत् । गुरुशुश्रूषया नित्यमात्मज्ञानं समभ्यसेत् ॥

अस्यार्थः । एतच्च न केवलं परमहंसाना मेवेत्याह ॥ वहूदकानामिति ॥ पात्रान्तरमपि समुच्चिनोति पाणि पात्रमिति यथोदरं तथापाणि पात्रश्चेत्यर्थः ॥ तथाचारुणिश्रुतिः पाणिपात्र मुदरपात्रश्च इतिउपादेय मभिधाय हेयमाह कांस्य पात्रं नेतिमृत्पात्रमिति हिश्रुतिरिति यथोदीरितारुणि श्रुतेः ॥

स्नानं शौचमभिध्यानं सत्यानृत विवर्ज्जनम् ॥
कामक्रोध परित्यागं ईर्षारोष विवर्ज्जनम् ॥ २५ ॥

अस्यार्थः । सत्यानृत विवर्ज्जनमिति । असत्यवत् सत्यम पिव्यवहारं शक्यंविवर्ज्जयेत् चित्तैकाग्र्यविरोधादित्यर्थः ॥ श्रूयते हि तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथ ॥ इति स्मर्य्यते च ॥

त्यजधर्म्ममधर्म्मञ्च उभेसत्यानृते त्यजइति ॥ २६ ॥
लोभमोह परित्यागं दम्भदर्पादि वर्ज्जनम् ॥
चातुर्मास्यञ्च सर्व्वेषां वदन्ति ब्रह्मवादिनः ॥ २७ ॥
कुटीचकाश्च हंसाश्च तथैव च वहूदकाः ॥
सावित्रीमात्रसम्पन्ना भवेयुर्म्मोक्षकारणात् ॥ २८ ॥
प्रणवाद्या स्त्रयोवेदाः प्रणवेपर्य्यवस्थिताः ॥
तस्मात् प्रणवमेवैकं परहंसः सदाजपेत् ॥ २९ ॥

अस्यार्थः । परमहंसस्य प्रणवैकनिष्ठतां विवक्षुःप्रणवस्यो त्कृष्टतामाह प्रणवाद्याइति ओंइतिब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मो

पाप्नवानीतिब्रह्मैवोपाप्नोति इतिश्रुतेः प्रणवेपर्य्यवस्थिता इति प्रणवस्य वेदत्रयसारत्वात्तत् प्रतिनिधित्वं तथा त्वं च श्रूयते छान्दोग्योपनिषदि वह्वृचब्राह्मणे च लोकदेव वेदव्याहृत्यक्षरत्रय सरत्वं प्रणवस्य तैत्तिरीयोपनिषदि च ब्रह्मयज्ञप्रकरणे ओमितिप्रपद्यते एतद्वै यजुस्त्रयीं विद्यां प्रतीति ॥

सन्ध्याकालेषु शुद्धात्मा प्रणवेन समाहितः ॥
षट्प्राणायामकं कुर्य्याज्जपेदष्टोत्तरं शतम् ॥ २९ ॥
विविक्तदेश माश्रित्य सुखासीनः समाहितः ॥
यथाशक्ति समाधिस्थो भवेत् संन्यासिनां वरः ॥ ३० ॥
क्रमाद्वाऽक्रमतो विद्वानुत्तमां वृत्तिमाश्रयेत् ॥
उत्तमा वृत्तिमापन्नो न नीचां वृत्ति माश्रयेत् ॥

अस्यार्थः । क्रमादिति ब्रह्मचर्य्यंसमाप्य गृहीभवेत् गृहाद्वनीभूत्वा प्रव्रजेत् । इति जावालश्रुतिः अक्रमतो वा इति यदिवेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वा वनाद्वाइति ॥३१॥ उत्तमां वृत्तिमाश्रित्य नीचांवृत्तिंसमाश्रितः । आरूढपतितो ज्ञेयः सर्व्वधर्म्म वहिष्कृतः ॥ ३२ ॥ प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलतिभास्करः ॥ एष मे मण्डलं भित्वा ब्रह्मलोकं गमिष्यति ॥३३॥ रूपन्तु द्विविधं प्रोक्तं चरं वा चरमेवच ॥ चरंसंन्यासिनांरूप मचरं मृन्मयादिकम् ॥ ३४ ॥ यस्याश्रमे यतिर्नित्यं वर्त्ततेमुनिसत्तम । न तस्य दुर्लभं किञ्चित् त्रिषुलोकेषु विद्यते दुर्वृत्तो वा सुवृतो वा मुर्खो वा पण्डितोऽपिवा ॥ वेशमात्रेण संन्यासी पूज्यः सर्व्वेश्वरो यथा ॥ ३५ ॥ ब्रह्मचर्य्याश्रमस्थानां ब्रह्मादेवः प्रकीर्त्तितः ॥

गृहस्थानां च सर्व्वे स्यु र्यतीनान्तु महेश्वरः ॥ ३७ ॥
वानप्रस्थाश्रम स्थानामादित्यो देवतामता ॥
तस्मात् सर्व्वेषु कालेषु पूज्यः संन्यासिनां वरः ॥ ३८ ॥
मृते न दहनं कार्य्यं परहंसस्य सर्व्वदा ।
कर्त्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥ ३९ ॥
अश्वत्थस्थापनं कार्य्यं तद्देशेऽध्वर्य्युणा मुने
अश्वत्थे स्थापिते तेन स्थापितो हि महेश्वरः ॥ ४० ॥
दर्शनात् स्पर्शनात्तस्य सर्व्वं नश्यति पातकम् ॥
अन्येषामपि भिक्षूणां खननं पूर्व्वमाचरेत् ॥ ४१ ॥
पश्चाद् गृही यथा शास्त्रं कुर्य्याद्दहनमुत्तमम् ॥
अश्वमेधफलं तस्य स्नानमात्राद्विशुद्धता ॥ ४२ ॥
सर्व्वमुक्तं समासेन तत्र शिष्यस्य धीमतः ॥
तस्मादेतद्विजानीहि वेदान्तार्थं प्रकाशनम् ॥ ४३ ॥
इति श्रीसूतसंहितायां ज्ञानयोगखण्डे संन्यास विधिनिरूपणं नाम षष्टोऽध्यायः ॥ अग्नि पुराणे ५१ अध्याये कुटीचकादि संन्यासधर्म्म माह ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥
ह्री विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥ १ ॥
चतुर्विधं भैक्षवस्तु कुटीचकवहूदके ॥
हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥ २ ॥
एक दण्डी त्रिदण्डी च योगी मुच्येत बन्धनात् ।
अहिंसा सत्य मस्तेयं ब्रह्मचर्य्यापरिग्रहौ ॥ इति ॥ ३ ॥
आत्मपुराणे दशमाऽध्याये १० कुटीचकादि संन्यास निरूपणं दर्शयति ॥

पुरुषो मोक्षनामाथ ममृतत्त्वं प्रकीर्त्तितं ।
त्यागेनैनं पुराकेचित् प्राप्तात्मस्वरूपतः ॥ १ ॥
स्वर्गादपि समुत्कृष्ट मानन्दात्मान मीश्वरम् ।
स्वप्रकाशं समायान्ति यतयो गुरुवाक्यतः ॥ २ ॥
वर्णिनांहि सहस्रेषु भाग्यवन्तो नरोत्तमाः ।
न हितं स्वात्मनो वुद्धौ तादात्मा भेदवर्ज्जिताः ॥ ३ ॥
सत्यं तपो दमः शान्ति र्दानं धर्म्मः प्रजातयः ॥
आहिताग्निहोत्रञ्च यज्ञामानस मेवच ॥ ४ ॥
एकादशात्र संस्तुत्य न्यासः श्रूत्या विधीयते ।
सर्व्वे वर्णाश्रमाणां स्यात् स्वधर्म्मःसाधनं परम् ॥ ५ ॥
अर्थेकामे च मोक्षे च तेषामपि च साधने ।
सत्यं तपो दया दानं चतुष्पर्द्धत ईरितः ॥ ६ ॥
सर्व्वोपरि सदासेव्यो जन्मतो मरणावधि ।
शीतवातातपादीनां सहनं क्षुत्पिपासयोः ।
संकल्पात्ताद्धिविज्ञेयं तपोऽत्रान्नादि वर्जितम ॥ ७ ॥
दया दान्त्या च शान्त्याच न विनात्र प्रजायते ।
यतो दमः शमश्चेति द्वयं साधन मीरितम् ॥ ८ ॥
अस्मिन्पक्षे वयः स्त्र्यादि नापेक्ष्य केनचित् क्वचित् ॥
किन्तु संन्यास एवैकः शान्त्यादि गुणसंयुतः ॥ ९ ॥
विवेकिनो विरक्तस्य मुमुक्षोरप्यपेक्ष्यते ॥
इदं ततोधिकं सर्व्वसाधमेपु प्रकीर्त्तितम् ॥ १० ॥
मानसं सर्व्वभूतानां स्वर्गं मोक्षञ्च गच्छताम् ॥
लिङ्गधारण रूपोऽयं त्यागो ब्राह्मणजन्मनः ॥ ११ ॥

अलिङ्गः क्षात्रियादेः स्यात् सम एवात्र धर्म्मतः ॥
आद्यश्चतुर्विधः प्रोक्तो मुनिभिर्व्वेदवादिभिः ॥
त्रिदण्डो द्विविध स्तद्वदेक दण्डोऽपि तादृशः ॥ १२ ॥
अथ संन्यासस्य द्वादश साधन स्योत्कर्षं यथा श्रुति वर्णयिष्यं स्तद्भेदान् स्मृति प्रसिद्धां स्तावदाह ॥ लिङ्गधारणेति त्रयोदशभिः । संन्यास स्तावद्द्विविधः दण्डादिलिङ्गधारण सहित स्तद्रहितश्च । तत्राद्ये विप्रस्यैवाधिकारोऽन्यत्र क्षत्रियादिनामित्यर्थः ॥

आद्येति आद्योलिङ्गधारण रूपस्तद्द्विविधः त्रिदण्ड एकदण्डश्चेति तत्र त्रिदण्डस्य भेदौ कुटीचक वहूदकौ एकदण्डस्य हंस परमहंसाख्याविति द्वयोरर्थ इत्यर्थः आत्मपुराणे १० अध्याये ॥
कुटीचको वहूदश्च द्वौ त्रिदण्डौ प्रकीर्त्तितौ ॥
हंसः परमहंसश्च द्वावुक्तावेकदण्डिनौ ॥ १ ॥
पुत्री गृहीधनी तद्वद्भार्य्यया च विवर्ज्जितः ॥
जरसा व्याधिना चैव ग्रस्तः स्निग्धःसुतादिषु ॥ २ ॥
भिक्षया भोजने तद्वदशक्तो मृदुलः पुमान् ॥
त्रिदण्डं धारयेदेष गृहे कृत्वा कुटीं सदा ॥ ३ ॥
पुत्रदत्ताशनो नित्यं सधर्म्म परिपालकः ॥
कुटीचको भवेद्भिक्षुः प्रणवादि जपे रतः ॥ ४ ॥
विदारो यः पुनर्दारान् संपादयितु मक्षमः ॥
ब्रह्मचर्य्य रतः कर्म्म श्रद्धावां श्च जरादिना ॥ ५ ॥
पुत्रादिषु गत स्नेहो वृद्धभार्य्योऽथवा स्वयम् ॥
त्रिदण्डं परिगृह्यैष भवेद्विप्रो वहूदकः ॥ ६ ॥

कमण्डलुं त्रिदण्डञ्च शिक्यंपात्रं पवित्रकम् ॥
दधानः पञ्चमात्रा स्ताः कीटवत् पर्य्यटेद्यतिः ॥ ७ ॥
यतिधर्म्मानशेषांस्ताननुतिष्ठेत् सदैव सः ॥
वैराग्यंपरमं प्राप्तो य ईषत् कर्म्मवासनः ॥ ८ ॥
यज्ञोपवीती विशिखः सामगोत्र यथा वटुः ॥
एक दण्डधरो नित्यं कीटवत् पर्य्यटन् महीम् ॥ ९ ॥
प्रणवादि जपे युक्तो भवेद्धंसो यतिः स्वयम् ॥
वैराग्य परमं प्राप्त इहामुत्र सुखे यदा ॥ १० ॥
आनन्दात्मानमेवैकं संप्रेप्सु हृदये स्थितम् ।
कर्म्मसंस्कारशून्यो यः सभवेत् परमः सदा ।
हंसोविधृत्य करत एकदण्डं हि वैणवम् ॥ ११ ॥
एवं चतुर्व्विधः प्रोक्त श्चतुर्थाश्रमवासिनाम् ।
न्यास श्चतुर्थ स्तत्रापि सर्व्वोत् कृष्ट उदाहृतः ॥ १२ ॥
(अस्यार्थः ॥ तत्र कुटीचकस्याधिकारिणं धर्म्मांश्च दर्शयति पुत्रीति त्रिभिः ॥ स्निग्धः स्नेहवान् मृदुलः क्लेशासहिष्णु स्फुटमन्यत् ॥

पुत्र दत्तेति पुत्रेण दत्त मशन मन्नादिकं यस्मै स तद्वहुदकाधिकारिणमाह । विदार इति द्वाभ्यां यो मृतदार स्ततूसंपादने ऽक्षमो ऽनुत्सुकः कर्म्मसु सन्ध्योपासनादिषु श्रद्धावान् जरया पुत्रादिषु स्नेहहीनो वृद्धदारो भवेत् स बहुदको भवेदिति द्वयोरर्थः । तद्धर्म्मा ना कमण्डलुमिति शिक्यं । भिक्षान्नधारणार्थंपात्रंभोजनं पवित्रकं जलशोधनवस्त्रं वस्त्रपूतं जलं पिवेदिति व

नात् एताः पञ्चमात्रा उपकरणानि दधानः कीटवन्मन्दं मन्दं भूमिं पर्य्यटेदन्यांश्च यतिधर्म्म धर्म्मान् कुर्य्यादित्यर्थः॥मात्रा परिछदे इति हैमः॥ हंस संन्यासस्य तानाह ॥ वैराग्यमिति। यः परम वैराग्यवानऽपि कर्म्मसु किञ्चित् श्रद्धावान् भवति स हंसो यतिर्भवेत् कीदृशः सामवेदाध्यायि ब्रह्मचारिवद्वि- शिखो यज्ञोपवीतो च स्फुटमन्यत् परमहंसस्य तानाह । वैराग्यमिति। प्रेप्सुः साक्षाक्षाच्चिकीर्षुः कर्म्म वासनाहीनश्च यः सकरेणदण्डं वैणवं धृत्वा परमहंसो भवेदिति द्वयोरर्थः । एषु चरमोऽतिश्रेष्ठं इत्याह । एवमिति स्पष्टं ॥

आत्मपुराणे परस्परं श्रेष्ठत्वं दर्शयति ।

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
चतुष्पादो बुद्धिमतां चतुष्पात्स्वपि गो गणः ॥ १ ॥
उत्तमा गो गणेभ्यश्च द्विपदाः सर्व्वे जन्तवः
द्विपत्स्वपि तथाप्रोक्ताः शूद्रावर्णसमाश्रमाः ॥ २ ॥
शूद्रेभ्यश्च तथावैश्या वैश्यभ्यः क्षत्रवर्णिनः ॥
क्षत्रियेभ्य स्तथा श्रेष्ठाब्राह्मणा जन्मना हि ये ॥ ३ ॥
ब्राह्मणैश्च समादेवा अग्न्याद्याः परिकीर्त्तिताः ॥
ब्राह्मणेष्वपि विद्वांसो वेदवेदार्थ वेदिनः ॥ ४ ॥
विद्वत्स्वपि तथैव स्यु रुत्तमा निश्चिता हि ये ॥
शास्त्रार्थे संशयंहित्वावर्त्तन्ते निश्चला इव ॥ ५ ॥
निश्चितेष्वपि विज्ञेयाउत्तमा येऽत्रकर्म्मिणः ॥
आश्रमाणां विभेदेन चतुर्धा ये प्रकीर्त्तिताः ॥ ६ ॥
चतुर्भ्योऽत्र गृहीज्ञेय उत्तमो गृहिणोऽपिच ॥

वनी ततो यति सोऽयं चतुर्थः परिकीर्त्तितः ॥ ७ ॥
कुटीचको बहूदश्च हंसः परमहंसकः ॥
चतुर्विधो यतिः प्रोक्तो यो यः पश्चात् स उत्तमः ॥ ८ ॥
चतुर्थाः परमहंसा वेदेब्रह्मविदः स्मृताः ॥
ब्रह्मनिष्ठा यतस्तेषां न्यास्यः सदात्म वेदने ॥ ९ ॥
त्वं पदार्थविवेकाय संन्यासः सर्व्वकर्म्मणाम् ॥
प्रकुर्व्वाणः पतत्येष तं त्यक्त्वाकर्म्ममोहतः ॥
कुर्व्वाणश्च परब्रह्म भवत्येवं न संशयः ॥ १० ॥
न्यासे ब्रह्मात्मके सर्व्वजगतो हेतुनां द्विजाः ॥
विवक्षव इमां प्राहु र्युक्तिं वेद समीरितां ॥ ११ ॥
न्यासाद्ब्रह्मात्मविज्ञानं विदुषां जायते यतः ॥
ततोन्यासः परंब्रह्म कारणं हेतु वर्ज्जितम् ॥ १२ ॥
इत्यात्मपुराणे कुटीचकादि संन्यासस्योक्तम् ॥

अथेदानीं सूतसंहितायां तात्पर्य्यदीपिकासमेता यज्ञवैभवखण्डे द्वितीयाऽध्याये कुटीचकादि संन्यासस्य विधिनिर्णयं दर्शयति ॥

अधिष्ठानस्य नाशो न सत्यत्वादेव सर्व्वदा ॥
सर्व्वाधिष्ठान मीशानं पश्येन्नेव विमुच्यते ॥ १ ॥
ईशान विषयंज्ञानं वेदान्तश्रवणादिना ॥
जायते परहंसस्य यतेर्मुख्याधिकारिणः ॥ २ ॥
नाश्रमान्तरनिष्ठस्य क्रमात्तस्या पि जायते ॥
ब्रह्मलोक मवाप्नोति वनस्थो नैष्ठिकोऽपिच ॥ ३ ॥
गृहस्थः पितृलोकञ्च शिवज्ञानन्तु भिक्षुकः ॥

तत्रापि प्रथमो भिक्षुर्ज्ञानेच्छादयो वाधकात् ॥ ४ ॥
महापापाद यत्नेन मुच्यते मुनिपुङ्गवाः
द्वितीयः शान्ति दान्त्यादि ज्ञानाङ्गेच्छामवाप्नुयात् ॥ ५ ॥
तृतीयोऽखिल वेदान्त श्रवणेच्छा मवाप्नुयात् ॥
चतुर्थोज्ञान माप्नोति वेदान्त श्रवणेन तु ॥ ६ ॥
स एवकर्म्मसंन्यासी परहंससमाश्रयः ॥
अन्येकाम्यपरित्यागाद्भिक्षुका इतिकीर्त्तिताः ॥ ७ ॥
परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्व्वकम् ॥
बुद्धिपूर्व्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ ८ ॥
शाब्दं ब्रह्मात्म विज्ञानमपरोक्षं महत्तरम् ॥
संसारनाशकं प्रोक्तं तमसश्चण्डभानुवत् ॥ ९ ॥
अतोविज्ञानलाभाय परहंसो भवेद्द्विजः
कुटीचकाश्च हंसाश्च तथाऽन्ये च वहूदकाः ॥ १० ॥
ये भाविष्यन्ति ते कुर्य्युः प्राजापत्येष्टि संज्ञिताम् ॥
आग्नेयेष्टिं द्विजाः कुर्य्युः परहंसाभिलाषिणः ॥ ११ ॥
पश्चात् त्रैधावतीं कुर्य्युः सर्व्वेसंयतमानसाः ॥
येऽनाहिताग्नयो विप्रस्तेषां नेष्टिर्विधीयते ॥
स्वंस्व मग्नौ तु होमन्ते कुर्य्युः श्राद्धपुरः सरम् ॥ १२ ॥
विरजाख्यैर्महामन्त्रै राज्येन चरुणापि च ॥
हुतशेषं चरुसाज्यं प्राश्याचम्यैव सर्पिषा ॥ १३ ॥
पूर्णाहुतिंपुनः कुर्य्युः प्रणवेनाग्निजायया ॥
सहाग्निं पुनराघ्राय अयं ते योनि ऋत्विजः ॥ १४ ॥
इति मन्त्रेण कुर्य्यु स्ते प्रैषोच्चारण मादरात् ॥

संन्यासाध्वर्य्युणादत्तं दण्डं काषाय मेवच ॥ १५ ॥
परिगृह्य गुरोः पादं प्रणम्य श्रद्धयासह ॥
वेदान्तश्रवणं कुर्य्यु र्ज्ञानार्थं भिक्षुकोत्तमाः ॥ १६ ॥
काम्य कर्म्मफले दोषं विदित्वा प्रतिषिद्धवत् ॥
काम्यकर्म्मत्यजं स्तुल्यो भिक्षुणा फलतो भवेत् ॥ १७ ॥
न सन्ति जप्या मन्त्राश्च परहंसस्य सर्व्वदा ॥
त्रयीसारमिमंमन्त्रं जपेन्नित्यं समाहितः ॥ १८ ॥
प्रणवाद्यपरं जप्त्वा कदामुक्तो भविष्यति ॥
ओंकारः सर्व्वमन्त्राणा मुत्तमः परिकीर्त्तितः ॥ १९ ॥
ओंकारेण प्लवेनैव संसाराब्धिं तरिष्यति ॥
उमार्धविग्रहो देवो रुद्रः सत्यादि लक्षणः ॥ २० ॥
संसारतारकस्यास्य प्रणवस्यार्थ उच्यते ॥
विष्ण्वादयोऽपि देवाश्च रुद्रस्यास्यान्वये नतु ॥ २१ ॥
कथञ्चित् प्रणवस्यार्था भविष्यन्ति न मुख्यतः ॥
यतिभिर्ज्ञान सिद्ध्यर्थ मविमुक्तं महत्तरम् ॥ २२ ॥
स्थानं संसेवनीयं स्याच्चिन्तनीयं तथैवच ॥
अविमुक्ते महादेव साक्षाद्विश्वेश्वरप्रभुः ॥ २३ ॥
उपास्यमानः सुप्रीतो ज्ञानं साक्षात् प्रयच्छति ॥
अविमुक्ते महादेवमनुपास्य विमुक्तये ॥ २४ ॥
नरः किञ्चिद्विषं भुक्त्वा क्षुन्निवृत्तिं करिष्यति ॥
तस्मान्मुमुक्षुभि र्भक्त्या ज्ञानार्थ मविमुक्तकम् ॥ २५ ॥
अधिभूते तथाध्यात्मे सेवनीयं तथैवच ॥
चिन्तनीयो महादेव स्तत्रोपास्यो न संशयः ।

गृहस्थैश्च वनस्थैश्च तथा वै ब्रह्मचारिभिः ॥ २६ ॥

## इति सूतसंहितायां यज्ञवैभवखण्डे २१ एकविंशाऽध्याये ।

चित्त पाकानु गुण्येन प्रव्रज्यां कुरुते पुनः ॥
तत्र मुमुक्षुः संन्यासी प्रेरितः परमेश्वरात् ॥ १९ ॥
कुटीचकाभिधां वृत्तिं वृत्तिं वाथ बहूदकाम् ॥
हंस वृत्तिन्तु वा नित्यं वाञ्छते मुनि सत्तमाः ॥ २० ॥
मुमुक्षु भिक्षुको नित्यं परहंसाभिधां शुभाम् ॥
वृत्ति मिच्छति देवेश प्रसादेन द्विजोत्तमाः ॥ २१ ॥
कुटीचकादि वृत्तिस्थो मुक्ति मिच्छति चेद्द्विजाः ॥
परहंसाभिधां वृत्तिं प्राप्नुयाच्छङ्कराज्ञया ॥ २२ ॥
सर्व्वेषामेव भिक्षूणां शान्ति दान्ति स्तितिक्षुता ॥
स्नान शौच महिंसाच मिथ्या भाषण वर्जनम् ॥ २६ ॥
अग्निरित्यादिभि र्मन्त्रै र्भस्मनोद्धूलनं तथा ॥
त्रिपुण्ड्रधारणं साक्षाद्ब्रह्म विष्णु शिवात्मकम् ॥ २७ ॥
लिङ्गे शिवार्च्चनं नित्यं धर्म्मः प्रोक्तः सनातनैः ॥
साक्षाद्वेदान्तवाक्यानां श्रवणं मननं तथा ॥ २८ ॥
निदिध्यासन माचार्य्यपरिचर्य्यं प्रियेणतु ॥
परहंसस्य धर्म्मोऽयं विशेषेण समीरितः ॥ २९ ॥
पूर्व्वपुण्यवलात्साक्षात् प्रसादाच्च शिवस्य तु ॥
ब्रह्मात्मविषयं ज्ञानं लभते भिक्षुकोऽचिरात् ॥ ३० ॥
ज्ञानाद्वेदान्तवाक्यार्थान् मुक्तिं भिक्षुरवाप्नुयात् ॥

विना ज्ञानेन मुक्तिस्तु न सिध्यति न सिध्यति ॥ ३१ ॥
मुक्तिसाधन माख्यातं संग्रहेण मुनीश्वराः ॥
ज्ञाने यूयमपिश्रद्धां कुरुध्वं यत्नतः सदा ॥ ३२ ॥
सूतउवाच ॥ इत्युक्त्वा भगवान् रुद्रः साक्षात् संसारमोचकः ।
आगमान्तैकसंवेद्य स्तत्रैवान्तर्हितोऽभवत् ॥ ३३ ॥
भवन्तोऽपि प्रसादेन शिवस्यपरमात्मनः ॥
मत्तोलब्धपरिज्ञाना अभवन्न चिरेणतु ॥ ३४ ॥
वर्णाश्रमसमाचारं विना कैवल्य मिच्छतः ॥
नास्ति कैवल्य संसिद्धिः सत्यं सत्यं न संशयः ॥ ३५ ॥
विष्णुप्रजापतीन्द्रेभ्यः शिवस्याधिक्यमादरात् ॥
अविज्ञाय न संसारान् मुच्यते जन्मकोटिभिः ॥ ३६ ॥
प्रत्यग् ब्रह्मैकताज्ञानं विना कैवल्यमिच्छताम् ॥
नास्तिकैवल्यमित्येषा शाश्वतीश्रुतिराह हि ॥ ३७ ॥
भगवानपि सर्व्वज्ञःशिवः कारुणिकोत्तमः ॥
विना वेदान्तविज्ञानं न मुक्तिरिति चाह हि ॥ ३८ ॥
विष्णुप्रजापतीन्द्रादिदेवताश्च तथैव च ॥
विना ज्ञानं न कैवल्यमित्याहुर्व्वेदवित्तमाः ॥ ३९ ॥
मुनयश्च महात्मनः सत्यसन्धा जितेन्द्रियाः ॥
विना ज्ञानं न कैवल्य मित्याहुर्वेद वित्तमाः ॥ ४० ॥
अथ किं बहुनोक्तेन मुनीन्द्रावेदवित्तमाः ॥
मुक्तिसाधनविज्ञानं वेदा देव न चान्यतः ॥ ४१ ॥
वेदमार्गजनितन्तु वेदनं दोषहीन मतिशोभनंसदा ॥
अन्यमार्ग जनितं विचारतोवेदमार्ग रुचिकारणं क्रमात् ॥४

इति श्रीस्कन्दपुराणे सूतसंहितायां चतुर्थे यज्ञवैभवखण्डे मुक्तिसाधनविचारोनामैकविंशोध्यायः ॥ २१ ॥

## ॥ सूतसंहितायां ४२ अध्याये ॥

संन्यासश्चापि पापानां प्रायश्चित्तं प्रकीर्त्तितम् ॥
पापिष्ठानामयोग्यानां योग्यानां मुक्तिसाधनम् ॥ १ ॥
चतुर्बिधस्तु संन्यासो वृत्तिभेदेन सत्तमाः ॥
एकःकुटीचकः प्रोक्तस्तथाऽन्यश्च वहूदकः ॥ २ ॥
हंसश्चान्य स्तथैवान्यः परहंससमाश्रयः ॥
कुटीचकादपि श्रेष्ठोभिक्षुकश्च वहूदकः ॥ ३ ॥
हंसोवहूदकाच्छ्रेष्ठः परहंसस्ततः परः ॥
परहंसादपि श्रेष्ठ आश्रमी नास्ति कश्चन ॥ ४ ॥
कुटीचकाश्च हंसाश्च तथैव च वहूदकाः ॥
नित्यानुष्ठानतः शुद्धा भवन्ति द्विजपुङ्गवाः ॥ ५ ॥
हंसः परहंसश्च सत्वचं सौम्यमव्रणं ॥
एकन्तु वैणवं दण्डंकाषायं चैव धारयेत् ॥ ६ ॥
परहंसस्य हंसस्य समानं मौण्डमास्तिकाः ॥
स्नानंशौचं शिवध्यानं शिवार्च्चा भस्मगुण्ठनम् ॥ ७ ॥
त्रिपुण्ड्रधारणं शान्तिर्दान्तिः क्रोधादि वर्ज्जनम् ॥
चातुर्म्मास्यश्च सर्व्वेषां समानं परिकीर्त्तितम् ॥ ८ ॥
पापिष्ठः कर्म्मसंन्यासं कृत्वा शास्त्रोक्तवर्त्मना ॥
प्राणत्यागं पुनः कुर्य्यात्पापानां च विशुद्धये ॥ ९ ॥
योगीसंन्यासमापन्नः प्राणत्यागं कदाचन ॥
न कुर्य्यान्मोहतो वापि ज्ञान मेव सदाभ्यसेत् ॥ १० ॥

संन्यासेन समंनास्ति प्रायश्चित्तं द्विजर्षभाः ॥
ततः पापनिवृत्त्यर्थं संन्यसेत् परितापितः ॥ ११ ॥
रहस्यानाञ्च संन्यासः प्रायश्चित्तं तथैनसाम् ॥
प्रसिद्धानाञ्च पापानां प्रायश्चित्तमयंतथा ॥ १२ ॥
शिवज्ञानं शिवध्यानं शिवशब्दजपस्तथा ॥
अग्निरित्यादिभिर्म्मन्त्रै र्भस्मना चावगुण्ठनम् ॥ १३ ॥
रुद्राक्षधारणं भक्त्यात्रिपुण्ड्रस्य च धारणम् ॥
संन्यासश्चैव पापानां प्रायश्चित्तं महत्तरम् ॥ १४ ॥
चण्डमुण्डी समाख्यन्तु स्थानमन्यन्महत्तरम् ॥
दण्डीतत्र महादेवो दण्डिनी परमेश्वरी ॥ १५ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां चतुर्थे यज्ञवैभवखं
प्रायश्चित्तविचारोनामद्वाचत्वारिंशोऽध्यायः ॥

## ब्रह्मपुराणे दशमाध्याये ययात्युपाख्याने वैराग्यं दर्शयति

तत्र गाथामुनिश्रेष्ठा गीताःकिल ययातिना ॥
योऽभिपत्याहरेत् कामान् सर्व्वशोऽङ्गानिकुर्म्मवत् ॥ १ ॥
न जातुकामः कामानामुप भोगेन शाम्यति ॥
हविषाकृष्ण वर्त्मेव भूय एवाभिवर्द्धते ॥ २ ॥
यत् पृथिव्यांव्रीहि यवं हिरण्यं पशवः स्त्रियः ॥
नालमेकस्य तत् सर्व्वमितिकृत्वानु मुह्यति ॥ ३ ॥
यदा भावं न कुरुते सर्व्वभूतेषु पापजम् ॥
कर्म्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ४ ॥

यदान्येभ्यो न विभेति यदाचास्मान्न विभ्यति ॥
यदा नेच्छति नद्वेष्टि ब्रह्म संपद्यते तदा ॥ ५ ॥
धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यति ॥
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥
तृष्णाक्षय सुखस्यैते कलां नार्हन्ति षोडशीम् ॥ इति ॥ ६ ॥

## निर्णयसिन्धौअपि कुटीचकादि संन्यासश्चतुर्धेत्याह ॥ हारीतः ॥

कुटीचको वहूदको हंसश्चैव तृतीयकः ॥ चतुर्थःपरमो-हंसो यो यःपश्चात् स उत्तमः ॥ १ ॥ आद्यःपुत्रादिनाकुटीं-कारयित्वा तत्र गृहे वा वसन् काषायवासाः शिखोपवीतत्रि-दण्डवान् वन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेत् ॥ एत दत्यन्ताशक्तपरं ॥ द्वितीय स्तु वन्धून् हित्वा सप्तागाराणि भैक्षं चरन् पूर्व्वोक्तवेशः स्यात् ॥

हंस स्तु पूर्व्वोक्तवेशोऽप्येकदण्डः । एकन्तु वैणवं दण्डं धा-रयेन्नित्यमादरादिति स्कान्दात् ॥ २ ॥ विष्णुरपि । यज्ञोपवीतं दण्डञ्च वस्त्रं जन्तुनिवारणं । तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः ( चतुर्थोऽपिस्कान्दे ) परहंस स्त्रिदण्डश्च रज्जुं गोवालनिर्म्मिताम् । शिखांयज्ञोपवीतञ्च नित्यंकर्म्मपरित्यजेत् । ( अयमप्येकदण्डएव ) ये तु शिखोपवीतादित्यागनिषेधा स्तेकुटीचकादिपराः ॥ इति ॥ ( यत्तुमेधातिथि ) यावन्नस्यु स्त्रयो दण्डास्तावदेकेन वर्त्तयेदिति ॥ तदपि तत् परमेत्र ॥ ( यच्चाऽत्रिः ) चतुर्धाभिक्षवः प्रोक्ताः सर्व्वेचैव त्रिदण्डिन इति

तद्वागदण्डादिपरं ॥ न यष्टिपरं ॥ वाग्दण्डोऽथमनो दण्ड कर्म्मदण्ड स्तथैव च यस्यैते नियतादण्डाः स त्रिदण्डीति चोच्यते इतिमनूक्ते ॥ तस्मात् परमहंसस्यैकदण्डप सोऽप्यविदुषः ॥ विदुषस्तु सोऽपिनास्ति ॥ न दण्डं न शिखां नाच्छादनं चरति परमहंस इति महोपनिषदुक्तेः । ज्ञानमेव स्यदण्ड इति वाक्यशेषाच्च ॥ यत्तुयमः ॥ काष्ठदण्डो धृतोयेन सर्व्वाशीज्ञान वर्ज्जितः । स याति नरकान् घोरान् महारौरव संज्ञितान् ॥ इतितद्वैराग्यं विनाजीवनार्थं संन्यासपरम् । एकदण्डं समाश्रित्य जीवन्ति वह्वोनराः ॥ नरकेरौरवे घो कर्म्मत्यागात् पतन्ति ते ॥ इति स्मृतेः ॥

(यच्चाश्वमेधिके) एकदण्डी त्रिदण्डी वा शिखा मुण्डि एव वा । काषाय मात्रसारो पि यतिः पूज्यो युधिष्ठिर ॥ इति तस्यापि पूर्व्वोक्त व्यवस्थाज्ञेया ॥ इति ॥

## आत्मपुराणे एकादशाध्याये कुटीचकादि सन्न्यास धर्म्म दर्शयति ।

कुटीचको वहुदो वा हंसो वापि यदा भवेत् ॥
यतिःपरमहंसाख्यः श्राद्धं होमादिकं तदा ॥ १ ॥
न कुर्य्यादातुरो यद्वत् प्रैषमात्रात् प्रपूरयेत् ॥
संन्यासं तद्वदेतेऽ पि पूरयेयुः सदैव हि ॥ २ ॥
प्रैषमात्रेण विद्वांसः परवैराग्य माश्रिताः ।
अभयं सर्व्वभूतेभ्यो मत्तः स्वाहेति कीर्तयेत् ॥ ३ ॥
मन्द मध्योत्तमैः शब्दैः प्रत्येकं व्याहृतित्रयात् ॥

त्रिः कृत्वाऽद्भिस्तु संपूर्य्य स्वाञ्जलिं ह्युत्तरां दिशं ॥ ४ ॥
प्राचीं वा प्रव्रजेद्विद्वान् यथा जातवपुर्नरः ॥
यज्ञोपवीतं सशिख मुत्कृत्याञ्जलिसंस्थितम् ॥ ५ ॥
विसृजेदप्सु भूमौ वा ततो गच्छेदुदङ्मुखः ॥
नग्नो भूत्वा विरक्तो वा गुरुमेकंपरिगृहेत् ॥ ६ ॥
पञ्च मुद्रात्मकं दण्डं त्रिदण्डं वा परित्यजेत् ॥
ब्रह्मचर्य्याद् गृहाद्वा पि वनाद्वा प्रव्रजेदिह ॥ ७ ॥
यज्ञोपवीतं पूर्व्वेण दण्डेन सह हंसकः ॥
भूःस्वाहेति च मन्त्रेण जुहुयादप्सु सादरम् ॥ ८ ॥
जडोन्मत्तपिशाचेभ्यो नग्नो विद्वानिव स्वयम् ॥
विद्वान् वाऽप्यथ वाविद्वान् परं वैराग्य माश्रितः ॥ ९ ॥
नाना योगाश्रमे तुर्य्ये लिङ्गधारण मिष्यते ॥
वैष्णवं धारयेल्लिङ्गं विप्र एव न चापरः ॥ १० ॥
प्रार्थये तापिनाध्वर्य्यु रेनं यान्तं दिगम्बरम् ॥
कौपीनादि न गृह्णीयादध्वर्य्यु प्रार्थनां विना ॥ ११ ॥
संन्यासे तत एव स्याद नावृत्तिर्द्वयो रपि ॥
क्षात्रियो वा पि वैश्यो वा संन्यासी ऋषभादिवत् ॥ १२ ॥
वीरमार्गेण देहं स्वं त्यजेदेवाविचारयन् ॥
अभीतः सर्व्वतो गच्छेच्छवदाग्निजलदंष्ट्रितः ॥ १३ ॥
आनिपातं शरीरस्य वीरमार्गोऽयमीरितः ॥

( एतेषां श्लोकानां तात्पर्य्य माह ॥ अस्यार्थः ॥ )

जावालादौ वीराध्वना देहत्यागो य उक्तः ॥
स क्षत्रियादिसंन्यासाभिप्रायेणैवेति दर्शयति ॥

क्षत्रिय इति नवभिः ॥ यदि क्षत्रियो वैश्यो वा यदा संन्या
लिङ्गवर्ज्जितः सन्ननावृत्तिं पुनरावृत्तिहीनमध्वानं ग
दित्यर्थः ॥ कीदृशः । जडादितुल्याभः नग्नः आविद्वा
दृश्यमानो वस्तुतो विद्वान् परवैराग्यशाली अविद्वान्
सन्निति द्वयोरर्थः । नाना इति यद्यपि तुर्य्ये पारिव्राज्य
योगप्रधाने आश्रमे नानाविधलिङ्गानां धारणमिष्टं प्र
न्नमस्त्वा य स्तथापि वैष्णवस्य लिङ्गस्य धारणे विप्र ए
धिकारीत्यर्थः ॥ तदुक्तम् ॥

मुखजानामयं धर्म्म इत्यादि दण्डे वैष्णवत्वञ्च
प्रभृति ग्रन्थि विशेषेण सुदर्शनादि संज्ञत्वात् तदुक्तं। प
सुदर्शनं प्रोक्तं वासुदेवं तथाष्टभिरित्यादीति ॥ तयो
वृत्तिपथगतौ हेतुमाह । प्रार्थयेतापीति ॥ अध्वर्य्यु यजु
ऋत्विक्तत् कर्त्तृकं पादपतनपूर्व्वकं वक्ष्माणविधं प्र
विप्रं प्रत्येव संभवतीत्यतः सोऽध्वर्य्युरेनं क्षत्रियं वैश्यं
दिगम्बरं यान्तं सन्तं न प्रार्थयेत् लोकव्यवहारोपयोगि
कौपीनादीनां ग्रहणञ्च संन्यासिना प्रार्थना विना क्रिय
संप्रदायविरुद्धं ततो द्वयोः क्षत्रियवैश्ययोरना
फलित इत्यर्थः ॥ तथाच क्षत्रियादिः संन्यास
देवादिवत् वीरमार्गेण शीघ्रं देहं त्यजेदित्याह ॥
इतिआदिपदेन पाण्डव ग्रहः ॥ वीरमार्गं लक्षयति ॥ अ
इति शब्दः सिंहनादादिदंष्ट्रिणो व्याघ्रादयस्तेभ्यो भयर
शरीरपतन पर्य्यन्तं यद् गमन मेतद्वीर मार्गपदेनोक्त । मि

( आत्मपुराणे ११ अध्याये ) ।

बुद्धिपूर्व्वं जले चायं वह्नौ वापि वपुः क्षिपेत् ॥
अन्नोदक परित्यागादथवा सततं गतैः ॥ १ ॥
एकस्यामेव दिश्यात्मदेहं धीरः परित्यजेत् ॥
श्राद्धादि प्रैषपर्य्यन्त मकृत्वा मनसैवहि ॥ २ ॥
संकल्पपरमप्राप्तो विरागं पूर्व्वपुण्यतः ।
स्त्रीशूद्रादिरपि प्रायः कुर्य्यात्त्यागं तथासदा ॥ ३ ॥
स देहनाश हेतु तं किमु यत्र द्विजातयः ॥

अस्यार्थः ॥ अत्रानुकुलस्य जावाल वाक्यस्यार्थमाह ॥ बुद्धिरिति । जलपानेन वह्निपातेनान्नादि परित्यागेनैकस्यां दिशिसततं बुद्धिपूर्व्वं गमनेन वा देहः संन्यस्त क्षात्रियादिना परित्यक्तव्य इत्यर्थः ॥ एतादृश संन्यासेन देहत्यागे शूद्रादीनामप्यधिकारं दर्शयति । श्राद्धादीति । श्राद्धमारभ्य व्याहृतिघटित प्रैषमन्त्रपर्य्यन्तमिति कर्त्तव्यताजातं विना केवलं मानसं संन्यस्यसङ्कल्पं विधाय स्त्रीशुद्रः संकरजातीयो वा पूर्व्वपुण्यलब्धवैराग्यशाली तथा क्षात्रियादिवत् स्वदेहनाश होतौत्यागे अधिकारीभवति किमुताद्विजातीया इति द्वयोरर्थः॥

॥ आत्मपुराणे ११ अध्याये ॥

यदा विप्रः परोहंसो भूयान्नग्न उदङ्मुखः ॥ ४ ॥
शिखा यज्ञोपवीतादि रहितः परितो व्रजेत् ॥
अध्वर्य्यु स्तु ततोगत्वा दण्डवत् प्रणिपत्यतम ॥ ५ ॥
प्रार्थयेत्तं कराभ्यां तत् पादौधृत्वा मुहुर्मुहुः ॥
वेदविद्भगवान्विप्रः सर्व्वदेव वपुर्य्यतः ॥ ६ ॥

ततो वपुरिदं त्यक्तुं न त्वमर्हसि धर्म्मवित् ॥
अपितेन वपुर्विप्रः किमुलोकस्य तद्वृयतः ॥ ७ ॥
परकीयं कथं वित्तं विनाशयसि बुद्धिमान् ॥
आत्मनः श्रवणं कृत्वा मननं ध्यानमेव च ॥ ८ ॥
साक्षात्कारं हि संपाद्य पश्चात् कुरु यथेप्सितं ॥
गुरुस्त्वयाचिरं कालं सेवितो ब्रह्मवित्तमः ॥ ९ ॥
अनुज्ञापितवान् मांसवहुशोऽपि निवारणम् ॥
गुर्व्वाज्ञां तत एव त्वं कुर्व्वात्मज्ञानहेतवे ॥ १० ॥
इत्यादि वचनैर्भूवि संप्रार्थ्यद्विजसत्तमः ॥
दद्याद्दण्डादिकं तस्मै तिष्ठ तिष्ठेति कीर्त्तयन् ॥ ११ ॥
दत्तं दण्डमृजुं सौम्यं सत्वचं वैणवं द्विजः ॥
इन्द्रस्येत्यादि मन्त्रेण गृहीत्वा प्रणवेन तु ॥ १२ ॥
दोरकौपीन वासांसि प्रणम्य गुरुमादरात् ॥
सेवेत तं यथा तद्वदात्मविद्या न लभ्यते ॥ १३ ॥
अधिकार प्रसंगात्ते संन्यासविधिरीरितः ॥
एवं परमहंसस्य शृणुवक्ष्यामि ते ऽधुना ॥ १४ ॥
दधानो वैणवं दण्डंसौम्यं पूर्व्वोक्तलक्षणम् ॥
शिखा यज्ञोपवीताभ्यां रहितोविकसन् मुखः ॥ १५ ॥
कौपीनयुगलं कन्था तद्वच्छीतनिवारणीम् ॥
भिक्षाटनाय शाटीञ्च ह्यखण्डां वापि खण्डिताम् ॥ १६ ॥
अलावुं दारुपात्रं वा वैणवं मृन्मयञ्च वा ॥
वहन् करेण शौचादि कार्य्यार्थं कार्य्य वर्ज्जितः ॥ १७ ॥
न पाणिपादचपलो न वागू भेदादि चापलः ॥

गच्छन् विलोकयेद्भूमिं युगमात्रां पुरः सदा ॥ १८ ॥
आसीनो नासिकां तद्वत् पुस्करं वा विलोकयेत् ॥
शून्यागारे देवगृहे वल्मीके तृणकूटके ॥ १९ ॥
वृक्षमूले कुलालस्य शालायामग्निहोत्रके ॥
पुलिनेषु नदीनाम्वा गिरीणां कुहरादिषु ॥ २० ॥
कोटरेषु तरूणां वा स्थण्डिले निष्कुटे पिवा ॥
निवासनिरतो नित्यं सदा शौचपरायणः ॥ २१ ॥
भिक्षार्थञ्च व्रजन् ग्रामं प्रीतिमान्निर्ज्जने सदा ॥
प्रदाक्षिण्ये न भिक्षायां गृहानेष व्रजेत् सदा ॥ २२ ॥
उदरं वापि पाणिं वा पात्रं कृत्वाथ वा परम् ॥
यथौषधं तथैवान्नं प्राशयत्येष सर्व्वदा ॥ २३ ॥
न निन्दति न च स्तौति किमप्येष कदाचन ॥
अलाभे वापि लाभे वा भिक्षया एकरूपभृत् ॥ २४ ॥
असम्यक्त्वेपि सम्यक्ते विकारं नाधिगच्छति ॥
न स्थूलो न कृशश्चायमाहारेण क्वचिद्भवेत् ॥ २५ ॥
केशश्मश्रुनखानाञ्च कुरुते वपनं सदा ॥
ऋतु सन्धिषु वर्षासु कुरुते वा न वापि सः ॥ २६ ॥
आषाढ्या पौर्णमास्या ञ्च कुरुते व्यासपूजनम् ॥
कृष्णद्वैपायनं पैलं वैशंपायननामकम् ॥ २७ ॥
जैमिनिञ्च सुमन्तुञ्च पूजयेद् व्यासपञ्चकम् ॥
कृष्णञ्च वासुदेवञ्च संकर्षणमथापरम् ॥ २८ ॥
प्रद्युम्नमनिरुद्धञ्च पूजयेत् कृष्णपञ्चकम् ॥
शङ्करं चित्ररूपञ्च पद्मनाभं तथैवच ॥ २९ ॥

हस्तामलकनामानं तोटकाख्यञ्च पञ्चमम् ॥
आचार्य्यपञ्चकं प्रायः पूजयेच्छाङ्करेमते ॥ ३० ॥
गुरुञ्चपरमं तद्वदात्मनः परमेष्ठिनम् ॥
गोविन्दं गौड़नामानं पूजयेद्गुरुपञ्चकम् ॥ ३१ ॥
आत्मानमन्तरात्मानं ज्ञानात्मानं परात्मकम् ॥
आनन्दात्मानमित्ये तत् पूजयेदात्म पञ्चकम् ॥ ३२ ॥
आत्माचार्य्य गुरुभ्यास पञ्चकानि चतुष्टये ॥
पूर्व्वादीनां दिशां मध्ये कथितं कृष्णपञ्चकम् ॥ ३३ ॥
आग्नेयादि विदिक् संस्थान् पूजयेच्चतुरोह्यमून् ॥
गणनाथं तथा दुर्गां देवीं चैव सरस्वतीम् ॥ ३४ ॥
क्षेत्रपालं महेशानं सर्व्वारिष्ट विनाशकान् ॥
सनन्दनं च सनकं कुमारञ्च सुजातकम् ॥ ३५ ॥
सनत् पदादिकं कृष्णपञ्चकं परितोऽर्च्चयेत् ॥
नरनारायणौ कृष्णपञ्चकात् पुरतः स्थितौ ॥ ३६ ॥
ब्रह्मादि त्रयमस्यैव पृष्ठत स्तु समर्च्चयेत् ॥
शेषान् देवान् मुनीन् सर्व्वान् यथा योग्यं प्रपूजयेत् ॥३७
नरनारायणाग्रस्थं नारदं मुनिसत्तमम् ॥
एवं संपूज्य वसति मासौ द्वौ चतुरो पि वा ॥ ३८ ॥
वर्षाकाले महीसर्व्वा स्थिरजङ्गमदेहिभिः ॥
निरन्तरं समास्तीर्णा लक्षकोटयादि संख्यया ॥ ३९ ॥
तेषांपक्षार्थ मेषोऽपि वसत्येकत्र सर्व्वदा ॥
न हिंसतिकमप्येषास्थिरजंगमदेहिनाम् ॥ ४० ॥
वदत्यसत्यं नैवायं न च चौर्य्यं करोति सः ॥

तृणस्यापि च नारीषु ग्राम्यधर्म्मं प्रयाति न ॥ ४१ ॥
कामं न परिगृह्णीयाद्भवेदत्रा परिग्रहः ॥ १६३ ॥
तथा समायिकीश्चेष्टां न कुर्य्यात् प्रलपेन्न च ॥ ४२ ॥
नियमांश्च यथोक्तितान् देवनारायणादिकान् ॥
कुर्व्वाणः प्राणरोधश्च स्वात्मनोऽवसरे सति ॥ ४३ ॥
वेदान्तश्रवणे स्नानं त्रिसन्ध्यादौ तथैव च ॥
गुरुभक्तिं तथाप्राह वर्षाकालाति रेकतः ॥ ४४ ॥
एकत्र च वशेन्नैव तत्ररागादि वर्ज्जितः ॥
अलाभेन विषादीस्याल्लाभश्चैनं न हर्षयेत् ॥ ४५ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
आत्मवत् सर्व्वभूतानां कर्म्मणा मनसागिरा ॥ ४६ ॥
अनुकूलं हि कुर्व्वाणः प्रतिकूलं न चाचरेत् ॥
हिरण्यादीनि वस्तूनि वधूस्तद्वन्मनोरमाः ॥ ४७ ॥
विष्ठावन्मनसा नित्यं भावयेन्न स्मरेच्च वा ॥
विण्मूत्रसम्भवो देहो मलभाण्डो विनिर्म्मितः ॥ ४८ ॥
कामाद्यनेक रोगार्त्तः सर्व्वावस्थासु नश्वरः ॥
किमर्थं वहसेगर्व्वं मनोदेहस्य सर्व्वदा ॥ ४९ ॥
अहं ब्रह्मेति वाक्यार्थं शृण्वनोगुरुवाक्यतः ॥
मननञ्च तथाध्यानं कुर्य्यादात्मावबोधनम् ॥ ५० ॥
यावन्न साक्षादात्मायं ज्ञायते तेन सर्व्वगः ॥
ओंकारमपि तावत्तु जपेच्छत्तथानुसारतः ॥ ५१ ॥
प्रणवाद्य विरोधेन मन्त्रानन्यांश्च संजपेत् ॥
आरोहन्नैव याने च न च किंचित् परिग्रही ॥ ५२ ॥

यावता न भवेद्देह त्यागोत्र वासनादिना ॥
स्वीकुर्य्यात्तावदेवायं नाधिकन्तु कदाचन ॥ ५३ ॥
सन्ध्यात्रये समाधिस्थो न कुर्य्यात् सन्धिनाशनम् ॥
जीवात्मनो रिहैक्येन स्वात्मनो ब्रह्मबोधनात् ॥ ५४ ॥
कस्यापिनैव कुर्व्वीत सदसद्दोष कीर्त्तिनम् ॥
आत्मनोऽधिक बुद्धिं वा मानसं वा विनाशनम् ॥ ५५ ॥
कर्म्मणा मनसा वाचा त्रिधाधर्म्मं स्वयंकृतम् ॥ ॥
परेभ्यः प्रकटंनैव कुर्य्याद्दम्भो हि तत् सदा ॥ ५६ ॥
ऊहज्ञानेन कस्यापि पक्षंचैव न दूषयेत् ॥
अभिलाषञ्च कुत्रापि सुखे कुर्य्यान्न धीधनः ॥ ५७ ॥
दुःखद्वेषञ्च तद्वत्सन् कुर्य्याद्धिसमसाधने ॥
मैथुनेच्छां च नैवायं कुर्य्यात्स्वप्ने पि कुत्रचित् ॥ ५८ ॥
कर्म्मणा मनसावाचा भूतद्रोहं कदापि न ॥
दैवादृष्टं सुवर्णादि न गृह्णीयात् कदाचन ॥ ५९ ॥
अनात्मभूते देहादावात्मबुद्धिञ्च वर्ज्जयेत् ॥
सुखप्राप्तौ प्रहर्षञ्च वर्ज्जयेत् सर्व्वदा यतिः ॥ ६० ॥
दुःखप्राप्तौ विषादश्च तत्तपूर्व्वमुदीरितम् ॥
क्षुद्राणामसहिष्णुत्वं न कुर्य्याद्देहिनामिह ॥ ६१ ॥
अहंमानश्च देह स्वे ममत्वं वसनादिषु ॥
नैवकुर्व्वीत मेधावी क्षेममिच्छन्निजात्मनः ॥ ६२ ॥
अनृतं वचनं तद्वन्मानसं विषयैरपि ॥
लोकरञ्जन मुख्यांश्च त्यजेत् सर्व्वात्मना यतिः ॥ ६३ ॥
विण्मुत्र कुणपैस्तुल्यं शरीरं स्वंविलोकयेत् ॥

न स्तुति र्न नमस्कारो निःस्वधाकार एव च ॥ ६४ ॥
चलाचल निकेतस्तु यतिर्यादृच्छिको भवेत् ॥
न चार्हैच्च प्रकुर्व्वीत न कस्यापि विवर्ज्जनम् ॥ ६५ ॥
मन्त्रांश्च न जपेन्नैव ध्यानं कुर्व्वीत कस्यचित् ॥
आत्मनो व्यतिरिक्तस्य नापि चोपासनं यतिः ॥ ६६ ॥
लक्ष्यं तस्य न किञ्चित् स्याद्व्यापारेषु यतेः सदा ॥
अलक्ष्यञ्च न किञ्चित्तु वालवत् समदर्शिनः ॥ ६७ ॥
आत्मनो व्यतिरिक्तेन वेदनं नाप्यभेदवत् ॥
प्रयोजनं किमप्यस्य विद्यते समदर्शिनः ॥ ६८ ॥
अहं त्वं सर्व्वमित्यादि भेदोप्यस्य न विद्यते ॥
सर्व्वेषामात्मभूतं यदाश्रयेण विवर्ज्जितम् ॥ ६९ ॥
ब्रह्मतत् स्थितिहेतुः स्यादस्य नित्यं महात्मनः ॥
सुवर्णा दीनि वस्तूनि सुवर्णञ्च विशेषतः ॥ ७० ॥
रागतो न स्पृशे न्नैव पश्येत् कुर्य्यान्न च ग्रहं ॥
स्पर्शनात् पुष्कसस्तस्य चाण्डाल दर्शनादपि ॥ ७१ ॥
आत्महाच भवेदेव तत् परिग्रहतः सदा ॥
आत्मन्यत्रोहते सर्व्वं निहतं स्याच्चराचरम् ॥ ७२ ॥
सर्व्वरूपो यतः स्वात्मा सर्व्वेषामिह देहिनाम् ॥
दान्त सर्व्वेन्द्रिय शान्त मानसो विगतस्पृहः ॥ ७३ ॥
उपवीतं शिखां तद्वज्ज्ञानमेव दधद्भवेत् ॥
यस्माद्ब्रह्मोपनिषदि श्रुयतेऽ न्यत्र चेदृशम् ॥ ७४ ॥
हृदिस्था देवताः सर्व्वा हृदि प्राणः प्रतिष्ठितः ॥
हृदिज्योतिः परं तद्वत् त्रिवृत् सूत्रमिदं स्मृतम ॥ ७५ ॥

यज्ञोपवीतं चैतन्यं हृदि तिष्ठतियत्ततः ॥
साशिखं वपनं कृत्वा बहि सूत्रं त्यजेद्बुधः ॥ ७६ ॥
यदक्षरं परंब्रह्म तत् सूत्रमिति धारयेत् ॥
सूचनात् सूत्रमित्याहुः सूत्रंनाम परंपदम् ॥ ७७ ॥
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
इति आत्मपुराणे यत् कथितं तदुक्तं ॥ ७९ ॥

इदानीं जीवन्मुक्ति प्रकरणे विद्यारण्य स्वामिना यदुक्तं तद्दर्शयति ॥

(ॐ) वक्ष्ये विविदिषान्यासं विद्वन्न्यासश्च भेदतः ॥
हेतुविदेह मुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥ १ ॥
संन्यास हेतु वैराग्यं यदह विंरजेत्तदा ॥
प्रव्रजेदिति वेदोक्ते स्तद्भेदस्तु पुराणगः ॥ २ ॥
विरक्ति र्द्विविधा प्रोक्ता तीव्रातीव्रतरेतिच ॥
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥ ३ ॥
शक्तोवहूदके तीव्रतरायां हंससंज्ञिते ॥
मुमुक्षुः परमे हंसे साक्षाद्विज्ञान साधने ॥ ४ ॥
पुत्रदारगृहादीनां नाशे तात्कालिकी मतिः ॥
धिक् संसार इतीदृक् स्याद्विरक्ते र्म्मन्दता हि सा ॥ ५ ॥
अस्मिन् जन्मनि मा भूवन् पुत्रदारादयो मम ॥
इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता ॥ ६ ॥
पुनरावृत्तिसहितो लोको मे मास्तु कश्चन ॥
इति तीव्रतरत्वं स्यान्मन्दे न्यासो न कोऽपि हि ॥ ७ ॥

यत्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् ॥
कुटीचको वहुदश्चेत्युभावेतौ त्रिदण्डिनौ ॥ ८ ॥
द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ॥
तल्लोके तत्त्वविद्धंसो लोकेऽस्मिन् परहंसकः ॥ ९ ॥
एतेषान्तु समाचाराः प्रोक्ताः पाराशरस्मृतौ ॥
व्याख्यानेऽस्माभिरत्रायं परहंसो विविच्यते ॥
जिज्ञासु र्ज्ञानवांश्चेति परहंसो द्विधा मतः ॥
प्राहुर्ज्ञानाय जिज्ञासो र्न्यासं वाजसनेयिनः ॥ ११ ॥
प्रव्राजिनो लोकमेतमिच्छन्तः प्रव्रजन्ति हि ॥
एतस्यार्थस्तु गद्येन वक्ष्यते मन्दबुद्धये ॥ १२ ॥
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ॥
शान्तिदान्त्यादिभिः सर्व्वैः साधनैः सहितो भवेत् ॥ १३ ॥
पुंजन्म लभते माता पत्नीच प्रेषमात्रतः ॥
ब्रह्मनिष्ठं सुशीलश्च ज्ञानं चैतत् प्रभावतः ॥ १४ ॥

त्यागश्च तैत्तिरीयोपनिषदि श्रूयते । न कर्म्मणा न प्रजया न धनेन त्यागेनैकेनामृतत्त्वमानशुः ॥ इति ॥ वृहदारण्यके मैत्रेयीवाक्यमाम्नायते । येनाहं नामृतास्यां किमहं तेन कुर्य्यां यदेव भगवन् वेत्थ तदेव मे ब्रूहि ॥ इति ॥ ब्रह्मचारि-गृहस्थवानप्रस्थानां केनचिन्निमित्तेन संन्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्म्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसः कर्म्मादित्यागो न विरुध्यते श्रुतिस्मृतीतिहासपुरा-णेषु लोके च तादृशां तत्त्वविदां वहूनामुपलम्भात् ॥ यस्तु दण्डधारणादिरूपो वेदनहेतुः परमहंसाश्रमः स पूर्व्वैराचार्य्यै

बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते ॥ इति विविदि
सन्न्यासः ॥ १ ॥ अथ विद्वत्संन्यासं निरूपयामः ॥ सम
गनुष्ठितैः श्रवणमनननिदिध्यासनैः परतत्त्वं विदितव
संपाद्यमानो विद्वत्संन्यासः ॥

॥ आरुणिकोपनिषदि प्रमाणमाह ॥

केन भगवन् कर्म्माण्यशेषतो विसृजामीति ॥ शिखा यज्ञो
पवीत स्वाध्याय गायत्री जपाद्यशेषकर्म्मत्यागरूपे विवि
षासंन्यासे शिष्येणारुणिना पृष्टे सति गुरुः प्रजापतिःशि
यज्ञोपवीतमित्यादिना सर्व्वत्यागमभिधाय दण्डमाच्छा
कौपीनं च परिग्रहेदिति दण्डादिस्वीकारं विधाय त्रिसन्ध्य
दौ स्नानमाचरेत् ॥ सन्धिसमाधावात्मन्याचरेत् सर्वे
वेदेष्वारण्यमावर्त्तयेत् ॥ उपनिषदमावर्त्तयेदिति वेदनहेतू
श्रमधर्म्माननुष्ठेयतया विधत्ते ॥ अथ योगिनां परमहंसा
कोऽयं मार्ग इति विद्वत्संन्यासे नारदेन पृष्टे सति गुरु
गवान् प्रजापतिः स्वपुत्रमित्रेत्यादिना पूर्व्ववत् सर्व्वत्या
माभिधाय कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थ
लोकस्योपकारार्थाय च परिग्रहेदिति । दण्डादिस्वीकार
लौकिकत्वमभिधाय तच्च न मुख्यो ऽस्तीति शास्त्रीय
प्रतिषिध्य कोऽयंमुख्य इति चेदयं मुख्यो न दण्डं न शि
न यज्ञोपवितं न चाच्छादनं चरति परमहंस इति दण्डा
दिलिङ्गराहितस्य शास्त्रीयतामुक्त्वा न शीतं न चोष्णमित्या
दिवाक्येनाशाम्बरो निर्नमस्कार इत्यादिवाक्येन च लोक
व्यवहारातीतत्व मभिधाय अन्ते पूर्व्वं यदानन्दैकबोधस्त

ब्रह्माहमस्मि इतिकृतकृत्यो भवतीत्यन्तेन ग्रन्थेन ब्रह्मानुभव-मात्रपर्य्यवसानं भवति ॥ इत्यभिप्रायः ॥

## ॥ अथ शाढ्यायनीयोपनिषदि ॥

अथ खलु सौम्यैते परिव्राजका यथा प्रादुर्भवन्ति तथा भवन्ति । कामक्रोधमोहलोभदम्भदर्पाऽसूयाममत्वाहङ्का-रादींस्तितीर्य्य मानावमानौ निन्दास्तुती च वर्जयित्वा वृक्ष इव तिष्ठासेत् ॥

च्छिद्यमानो न ब्रूयात् । तदैव विद्वांस इहैवामृता भवन्ति तदेतदृचाभ्युक्तं ॥ वन्धुपुत्रमनुमोदयित्वाऽनवेक्ष्यमाणो द्वन्द्व-सहः प्रशान्तः प्राचीमुदीचीं वा निवर्त्तयंश्चरेत् पात्री दण्डी युगमात्राऽवलोकी । शिखीमुण्डी चोपवीती कुटुम्वी यात्रा-मात्रं प्रतिगृह्णन्मनुष्यात् ॥ १८ ॥ इति ॥

अथेदानीं महानिर्व्वाणतन्त्रेऽपि चतुर्विधावधूतान् प्रकारा-न्तरेणाह । श्रीदेव्युवाच । द्विविधावाश्रमौ प्रोक्तौ गार्हस्थो भैक्षुकस्तथा ॥ किमिदं श्रूयते चित्रमवधूताश्चतुर्विधाः ॥ १ ॥
श्रीसदाशिवउवाच । ब्रह्ममन्त्रोपासका ये ब्राह्मणक्षत्रियादयः॥
गृहाश्रमे वसन्तोऽपि ज्ञेयास्ते यतयः प्रिये ॥ २ ॥
पूर्णाभिषेकविधिना संस्कृता ये च मानवाः ॥
शैवावधूतास्ते ज्ञेयाः पूजनीयाः कुलार्च्चिते ॥ ३ ॥
ब्राह्मावधूताः शैवाश्च स्वाश्रमाचारवर्त्तिनः ॥
विदध्युः सर्व्वकर्म्माणि मदुदीरितवर्त्मना ॥ ४ ॥
उक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः ॥
पूर्णः परमहंसाख्यः परिव्राड़परः प्रिये ॥ ५ ॥

कृतावधूतसंस्कारो यदि स्याज्ज्ञानदुर्व्वलः ॥
तदा लोकालये तिष्ठन् आत्मानं स तु शोधयेत् ॥ ६ ॥
रक्षन् स्वजातिचिह्नञ्च कुर्व्वन् कर्म्माणि कौलवत् ॥
सदा ब्रह्मपरो भूत्वा साधयेत् ज्ञानमुत्तमम् ॥ ७ ॥
ॐतत्सन्मन्त्रमुच्चार्य्य सोऽहमस्मीति चिन्तयन् ॥
कुर्य्यादात्मोचितं कर्म्म सदा वैराग्यमाश्रितः ॥ ८ ॥
कुर्व्वन् कर्म्माण्यनासक्तो नलिनीदलनीरवत् ॥
यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः ॥ ९ ॥
ॐतत् सदिति मन्त्रेण यो यत् कर्म्म समाचरेत् ॥
गृहस्थो वाप्युदासीनः तस्याभीष्टाय तद्भवेत् ॥ १० ॥
जपोहोमः प्रतिष्ठा च संस्काराद्यखिलाः क्रियाः ॥
ॐतत्सन्मन्त्रनिष्पन्नाः संपूर्णाः स्युर्न संशयः ॥ ११ ॥
किमन्यैर्व्वहुभिर्म्मन्त्रैः किमन्यैर्भूरिसाधनैः ॥
ब्राह्म्येणानेन मंत्रेण सर्व्वकर्म्माणि साधयेत् ॥
सुखसाध्यमवाहुल्यं संपूर्णफलदायकम् ॥ १२ ॥
नास्त्येतस्मान्महामन्त्रादुपायान्तरमम्बिके ॥
पुरः प्रदेशे देहे वा लिखित्वा धारयेदिमम् ॥ १३ ॥
गेहस्तस्य महातीर्थं देहः पुण्यमयो भवेत् ॥
निगमागमतन्त्राणां सारात्सारतरो मनुः ॥ १४ ॥
ॐतत्सदिति देवेशि तवाग्रे सत्यमीरितम् ॥
ब्रह्मविष्णुमहेशानां भित्त्वा तालुशिरःशिखाः ॥ १५ ॥
प्रादुर्भूतोऽयमों तत्सत् सर्व्वमन्त्रोत्तमोत्तमः ॥
शैवावधूतसंस्काराऽवधूताखिलकर्म्मणः ॥ २८ ॥

नापि दैवे न वा पित्र्ये नार्षे कृत्येऽधिकारिता ॥
चतुर्णामवधूतानां तुरीयो हंस उच्यते ॥ २९ ॥
त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्व्वे शिवोपमाः ॥
हंसो न कुर्य्यात् स्त्रीसङ्गं न वा धातुपरिग्रहम् ॥ ३० ॥
प्रारब्धमश्नन् विहरेत् निषेधविधिवर्ज्जितः ॥
त्यजेत् स्वजातिचिह्नानि कर्म्माणि गृहमेधिनाम् ॥३१॥
तुरीयो विचरेत् क्षौणीं निःसङ्कल्पो निरुद्यमः ॥
सदात्मभावसन्तुष्टः शोकमोहविवर्ज्जितः ॥ ३२ ॥
निर्न्निकेतस्तितिक्षुः स्यात् निःशङ्को निरुपद्रवः ॥
नार्पणं भैक्ष्यपेयानां न तस्य ध्यानधारणा ॥ ३३ ॥
मुक्तो विरक्तो निर्द्वन्द्वो हंसाचारपरो यतिः ॥
इति ते कथितं देवि चतुर्णां कुलयोगिनाम् ॥ ३४ ॥
लक्षणं सविशेषेण साधूनां मत्स्वरूपिणाम् ॥
इति महानिर्व्वाणे संन्यासधर्म्मउक्तः ॥ ३५ ॥ इति ॥

## ॥ नारदपरिव्राजकोपनिषदि ॥

प्रवृत्तिलक्षणं कर्म्म ज्ञानं संन्यासलक्षणं । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ इति वचनेन संन्यासग्रहणं प्रसिद्धमेव ॥ यतःज्ञानात् परतरंनहि । इतिश्रूतिः ॥ ऋतेज्ञानान्नमुक्तिः ॥ इति ॥ न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥ अतएव ज्ञानं संन्यासलक्षणमिति ॥ संन्यासस्य ज्ञानाधीनत्वात् । कर्म्मणस्तु चित्तशुद्धिजनकत्वात् । ईश्वरार्पितं यत् निष्कामकर्म्म तच्चित्तशुद्धिकारणं परमिति । चित्तशुद्ध्यनन्तरं ज्ञानप्राप्तिरिति कर्म्मणः सकाशात् संन्यासस्य श्रेष्ठतरत्वम् ॥

यतो भगवद् वाक्यमाह ॥ सर्व्वकर्म्माणि मनसा संन्यस्या सुखंवशी । इति ॥ सर्व्वधर्म्मान् परित्यज्यइति ॥ संन्यासे तनुं त्यजेत् ॥ इति श्रुतिस्मृतीतिहासपुराणेषु संन्यासग्र प्रसिद्धमेव ॥

ननुशास्त्रसम्मतं संन्यासग्रहणं कर्त्तव्यमस्ति परन्त्विद कलौसंन्यासग्रहणं शास्त्रेऽपिनिषिद्धं प्रतीयते इति संन्या ग्रहणं कर्त्तव्यं न वा यतो विधिनिषेधौ प्रतीयेते । इतिप्रश्ने उत्तरमाह । अधिकारिणः संन्यासनिषेधो न स्यात् तद्दर्शयति साधनचतुष्टयविशिष्टानां विवेकवैराग्ययुक्तानां मुमुक्ष तत्त्वज्ञानेच्छुकानां ब्राह्मणानां संन्यासग्रहणे अवश्यकर्त्तव्य स्तीति ॥

## ॥ तत्रनारदपरिव्राजकोपनिषदिप्रमाणमाह ॥

यदा मनसि संजातं वैतृष्ण्यं सर्व्ववस्तुषु ॥
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्य्यये ॥ १ ॥
संसारदोषदृष्ट्यैव विरक्तिर्जायते सदा ॥
विरक्तस्य तु संसारात् संन्यासः स्यान्न संशयः ॥ २ ॥
विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् ॥
सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥ ३ ॥
संसारमेव निःसारं दृष्ट्वा सारं दिदृक्षया ॥
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥ ४ ॥
यदा तु विदितं तत्त्वं परंब्रह्म सनातनं ॥
तदैकदण्डं संगृह्य सोपवीतं शिखां त्यजेत् ॥ ५ ॥

ज्ञात्वा सम्यक् परंब्रह्म सर्व्वं त्यक्त्वा परिव्रजेत् ॥
संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्य्यवान् ॥ ६ ॥
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ॥
सर्व्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥ ७ ॥
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् ॥
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ॥ ८ ॥
श्रुत्यनुष्ठानमार्गेण कर्म्मानुष्ठानमेव वा ॥
समाप्य संन्यसेद्विद्वान् नोचेत् पातित्यमाप्नुयात् ॥ ९ ॥
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयं ॥
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ॥ १० ॥
यस्मिन् शान्तिः शमःशौचं सत्यं सन्तोष आर्ज्जवं ॥
अकिञ्चनमदंभश्च सकैवल्याश्रमे वसेत् ॥ ११ ॥
यदा न कुरुते भावं सर्व्वभूतेषु पापकं ॥
कर्म्मणा मनसा वाचा तदा भवति भैक्षभुक् ॥ १२ ॥
दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः ॥
वेदान्तान् विधिवच्छ्रुत्वा संन्यसेदनृणोद्विजः ॥ १३ ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥
ह्री विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥ १४ ॥
अतीतान्न स्मरेद्भोगान् न तथानागतानपि ॥
प्राप्तांश्च नाभिनंदेद्यः स कैवल्याश्रमेवसेत् ॥ १५ ॥
अन्तःस्थानीन्द्रियाण्यन्तर्व्वहिष्ठान् विषयान् वहिः ॥
शक्नोति यः सदाकर्त्तुं स कैवल्याश्रमे वसेत् ॥ १६ ॥
प्राणे गते यथा देहे सुखंदुःखं न विंदति ॥

तथाचेत् प्राणयुक्तोऽपि स कैवल्याश्रमेवसेत् ॥ १७ ॥
इत्युपनिषदि प्रमाणेन अधिकारिविषयउक्तः ॥

॥ अथ पुनरपिव्यासबचनमाह ॥

यदा मनसि वैराग्यं जायते सर्व्ववस्तुषु ॥
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ १८ ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः ॥
विरक्तः सर्व्वकामेभ्यः पारिव्राज्यं समाश्रयेत् ॥ १९ ॥
। यमः । समःसर्व्वेषु भूतेषु चरेषु स्थावरेषु च ॥
उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ॥ २० ॥

॥ अथेदानीं संन्यासोपनिषदि दर्शयति ॥

योऽनुक्रमेण संन्यस्यति स संन्यस्तो भवति ॥
कोऽयं संन्यास उच्यते कथं संन्यस्तो भवति ॥ २१ ॥

य आत्मानं क्रियाभिर्गुप्तं करोति मातरंपितरं भार्य्यापु
त्रं वंधून् अनुमोदयित्वा ये चास्यर्त्विजस्तान् सर्व्वांश्च
वत् प्राणित्वा वैश्वानरेष्टिं निर्व्वपेत् सर्व्वस्वंदद्याद्यजमान
गा ऋत्विजः सर्व्वैःपात्रैः समारोप्य यदाहवनीये गार्हपत्ये
न्वाहार्य्यपचने सभ्याऽऽवसथ्ययोश्च प्राणापानव्यानोदान
मानान् सर्व्वान्सर्व्वेषु समारोपयेत् । चत्वारिंशत् संस्कार
संपन्नः सर्व्वतो विरक्तश्चित्तशुद्धिमेत्याऽऽशासूयेर्ष्याहंकारं
दग्ध्वा साधनचतुष्टयसंपन्न एवसंन्यस्तुमर्हति ॥

संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ॥
स कुर्य्यात् किच्छ्रमात्र न्तु पुनः संन्यस्तु मर्हति ॥ १ ॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ॥
संन्यास विघ्नकर्त्ता च त्रीनेतान् पतितान् विदुः ॥ २ ॥ इ

॥ अथ जाबालोपनिषदि ॥ अथ हैनंजनको वैदेहो याज्ञवल्क्य-मुपसमेत्योवाच भगवन् संन्यासं ब्रूहीति ॥ सहोवाच याज्ञवल्क्यः ॥ ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वनाद्वा ॥ अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ इति ॥ अग्निपुराणे ॥ यदह्नि विरजेद्धीर स्तदह्नि च परिव्रजेत् ॥ इति ॥

(सौरपुराणे) यदामनसि वैराग्यं जायते सर्व्ववस्तुषु ॥
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ १ ॥

(बृहस्पतिः) यस्मिन् कामा प्रविशन्ति विषयेभ्योपसंहृता ॥
विषयान्न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ २ ॥

॥ अङ्गिराः ॥ यस्मिन् क्रोधः शमं याति विफलः सम्यगुस्थितः ॥ आकाशेऽग्नि र्यथा क्षिप्तः स कैवल्याश्रमे वसेत् ॥३॥

विरक्तः संन्यसेद्विद्वान् न निष्ठापि द्विजोत्तमः ॥
प्रकर्त्तुमप्यशक्तोऽ पि जुहोति यजति क्रियाः ॥ ४ ॥

अन्धः पंगुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः ॥
सर्व्वेषामेव वैराग्यं संन्यासेतु विधीयते ॥ ५ ॥

पतत्येवाऽविरक्तो यः संन्यासं कर्त्तुमिच्छति ॥
पुनर्दारक्रियाभावान्मृतभार्य्यः परिव्रजेत् ॥ ६ ॥

(पराशरः) परिव्राज्यं तु वैराग्यात् कर्त्तव्यं वंधुरादिभिः ॥
विधिना तच्च कुर्व्वीत संन्यासमिह बुद्धिमान् ॥ ७ ॥

(अत्रिः) न तावन्मुच्यते दुःखाज्जन्ममृत्योश्च बंधनात् ॥

यावन्न धारयेद्विप्रो वैष्णवं लिङ्गधारणम् ॥ ८ ॥
(व्यासः) परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ॥
सर्व्वैषणा विनिर्म्मुक्तः स भैक्ष्यं भोक्तुमर्हति ॥ ९ ॥
यस्मिन् क्षान्तिः क्षमा शौचंसत्यं सन्तोष आर्जवं ॥
अकिञ्चनमदंभश्च तदा भवति भैक्ष्यभुक् ॥ १० ॥
पूजितोवन्दितश्चैव सुप्रसन्नो भवेद्यथा ॥
तथाचेत्ताड्यमानस्तुतदा भवति भैक्ष्यभुक् ॥ ११ ॥
॥ क्रतुः ॥ अहमेव परंब्रह्म वासुदेवाख्यमव्ययम् ॥
इति भावो ध्रूवो यस्य तदा भवति भैक्ष्य भुक् ॥ १२ ॥
॥ संवर्त्तः ॥ भावितैः कारणैश्चायं बहुसंसारयोनिषु ॥
आसादयति शुद्धात्मा मोक्षं वै चतुराश्रमे ॥ १३ ॥
॥ सुमन्तुः ॥ संन्यस्तोऽहमिति ब्रूयाद्वचनेषु त्रिषु क्रमात् ।
त्रीन् वारांस्तु त्रिलोकात्मा शुभाशुभविशुद्धये ॥ १४ ॥
यत्किञ्चिद्बंधकं कर्म्म कृतमज्ञानतो मया ॥
प्रमादालस्यदोषादि तत् सर्व्वं संत्यजाम्यहं ॥ १५ ॥
एवं संचित्य भूतेभ्यो दद्यादभयदक्षिणाम् ॥
॥ मनुः ॥ दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः ॥ १६ ॥
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥
संन्यस्य सर्व्वकर्म्माणि कर्म्मदोषानपानुदन् ॥ १७ ॥
नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥
एवं संन्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः ॥ १८ ॥
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥
एष वोऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्विधः ॥ १९ ॥

पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्म्मंनिबोधत ॥
॥ विष्णुसंहितायां ॥ अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजाप-
त्यामिष्टिं कृत्वा सर्व्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात्
॥ १ ॥ आत्मन्यग्नीनारोप्य भिक्षार्थं ग्रामामियात् ॥ २ ॥

॥ पद्मपुराणे स्वर्गखण्डे ३१ अध्याये ॥

एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः ॥
चतुर्थं चायुषोभागं संन्यासेन नयेत् क्रमात् ॥ १ ॥
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥
यदामनसि संपन्नं वैतृष्णं सर्व्ववस्तुषु ॥ २ ॥
तदा संन्यासमिच्छेच्च पतितः स्याद्विपर्यये ॥
प्राजापत्यां निरूप्येष्टि माग्नेयीमथ वा पुनः ॥ ३ ॥
दान्तः शुक्लकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ॥ ३ ॥

इति श्रुतिस्मृतिपुराणेषु ब्राह्मणानां चतुर्थाश्रम कर्त्तव्य-
तया अवगतत्वात् यतः संन्यासेन तनुं त्यजेत् इतिश्रुतिः ॥

एवं नारदपरिव्राजकोपनिषदि च ॥ शरीरत्रयमुत्सृज्य
संन्यासेनैव देहत्यागं करोति स कृतकृत्यो भवति ॥ इति ॥

॥ जाबालोपनिषदि ॥ संन्यासेन देहत्यागं करोति स
परमहंसोनाम ॥ इति ॥ नारदपरिव्राजके ॥ वीराध्वानमार्गेण
विहितसंन्यासेन देहत्यागं करोति स परमहंसो परिव्राजको
भवति ॥ इति ॥

शान्तो दान्तः संन्यासी परमहंसाश्रमेणाऽस्खलितस्व-
स्वरूपध्यानेन देहत्यागं करोति ॥

॥ इत्यादिवचनेषु संन्यासविधानात्तत्परित्यागेन विहि-

ताकरणजन्यपातित्यसंभवेनावश्यमेव संन्यासग्रहणं क
व्यमिति । जाबालोपनिषदि ॥ इदमेवास्य तद्यज्ञोपवीतं
आत्मापः प्राश्याचम्याऽयंविधिः परिव्राजकानां ॥ वीराध्वा
वा अनाशके वा अपांप्रवेशे वा अग्निप्रवेशे वा महाप्रस्था
वा इति ॥ परमहंसोपनिषदि ॥ एषात्रिधि र्वीराध्वाने
इत्यादिपूर्व्वोक्तं ॥ याज्ञवल्क्योपनिषदि ॥ अथ हैनमत्रिः पृ
च्छ याज्ञवल्क्यं यज्ञोपवीती कथं ब्राह्मण इति । सहोवा
याज्ञवल्क्य इदं प्रणवमेवाऽस्य तद्यज्ञोपवीतं य आत्मा॥ प्रा
श्याचम्याऽयं विधिरथ वा परिव्राड् विवर्णवासा मुण्डोऽप
ग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति ॥ एष प
पारिव्राजकानां वीराऽध्वनि (ध्वाने) वाऽनाशके वाऽपांप्र
वाऽग्निप्रवेशे वा महाप्रस्थाने वा एष पन्थाब्राह्मणा ह्य
त्तस्तेनेति । स संन्यासीब्रह्मविदिति ॥

## आत्मपुराणे ११ अध्याये

वीरमार्गेण देहस्वं त्यजेद्वा ऽविचारयन् ।
अभीतः सर्व्वतोगच्छेच्छ्वदाग्निजलदंष्ट्रितः ॥
आनिपातं शरीरस्य वीरमार्गोऽयमीरितः ॥ १ ॥
वुद्धिपूर्व्वं जलेचायं वह्नौवापिवपुः क्षिपेत् ॥
अन्नोदकपरित्यागादथवा सततं गतैः ॥ २ ॥
एकस्यामेव दिश्यात्मा देहं धीरः परित्त्यजेत् ॥ इति ॥

इतिपूर्व्वोक्तश्रुतिस्मृतीतिहासपुराणेषु अधिकारिभिः
संन्यासग्रहणं कर्त्तव्यमित्युक्तं ॥ परन्तु वृहन्नारदीयपु
ब्रह्मवैवर्त्तपुराणे च संन्यासग्रहण निषेधवचनं प्रतीयते

न तु वेदवेदान्तशास्त्रेषु एवं मन्त्रादिसंहितायामपि संन्यास-ग्रहणनिषेधवचनं न दृष्टामिति ॥

तथापि कलौपुराणोक्तं यन्निषेधवचनमस्ति तद्वर्णयति ॥ ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे वाणाऽनिरुद्धसंवादे पञ्च-दशाधिकशततमेऽध्याये ॥ ११५ ॥

अश्वमेधं गवालम्भं संन्यासं पलपैतृकं ॥
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत् ॥ १ ॥

इति वचनेनाश्वमेधादीनां कलौनिषिद्धत्वं ॥

एवं वृहन्नारदीयपुराणेऽपि ॥ समुद्रयात्रास्वीकारः कम-ण्डलुविधारणं । द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ ॥ २ ॥ देवरेण सुतोत्पत्तिर्मधुपर्केपशोर्वधः । मांसदानं तथाश्राद्धे वाणप्रस्थाश्रमस्तथा ॥ ३ ॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्यच ॥
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥ ५ ॥
महाप्रास्थानगमनं गोमेधश्च तथा मखं ॥
इमान्धर्म्मान् कलियुगे वर्ज्ज्यानाहुर्म्मनीषिणः ॥ ५ ॥

॥ एवंहेमाद्रिपराशरभाष्ययोरादित्यपुराणमाह ॥

दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः ॥
देवरेण सुतोत्पत्तिर्दत्ता कन्या प्रदीयते ॥ ६ ॥

इत्यादिवचनेन कलौ संन्यासादि निषिद्धं प्रतीयते । तत् कथं संन्यासग्रहणं स्यात् । मैवं ॥ कलौ संन्यासग्रहणविधिव चनं दर्शयति तथाहि व्यासवचनम् ॥

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते ॥

तावन्न्यासाग्निहोत्रञ्च कर्त्तव्यन्तु कलौ युगे ॥ १ ॥
(कात्यायनः) ब्रह्मचर्य्याद्गृहाद्वापि वनाद्वा संन्यसेद् बुधः
पुत्रेषु भार्य्यां निक्षिप्य मृतपत्नीक एव वा ॥ २ ॥
तपसो ब्रह्मचर्य्यस्य जपादेश्च फलं द्विजः ॥
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितं ॥ ३ ॥
इत्यादि वचनेन कलावल्पेन कालेन ब्रह्मचर्य्यस्य जपा-
धिकफलं वदन् ॥ ब्रह्मचर्य्यादि प्रधानस्य परिव्राज्य
कलावनुष्ठेयत्वं सूचयतीत्यर्थः ॥

॥ मनुसंहितायां तथा वायु पुराणेऽपि ५८ अध्याये

यत् कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् ॥
द्वापरे तत्तु मासेन अहोरात्रैः कलौ युगे ॥ ४ ॥
त्रेतायां वार्षिकोधर्म्मो द्वापरे मासिकः स्मृतः ॥
यथाशक्ति चरन् प्राज्ञस्तदह्वा प्राप्नुयात् कलौ ॥ ५ ॥
ब्रह्मपुराणे ॥ तपसा ब्रह्मचर्य्येण देवार्च्चायां फलंद्विजाः
प्राप्नोति पुरुषस्तेन कलेः साध्विति भाषितम् ॥ ६ ॥
यत्कृते दशभिर्वर्षै स्त्रेतायां हायनेन तत् ॥
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ ॥ ७ ॥

॥ वृहद्धर्मपुराणे सप्तमाऽध्याये ॥

एवं संन्यस्य कर्म्माणि स्वकार्य्ये परमस्पृहः ॥
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ ८ ॥
मुहूर्त्तमपि संन्यस्य लभते परमांगातिम् ॥
न संन्यासात् परोधर्म्मो वर्त्तते मुक्तिकारणम् ॥ ९ ॥
ब्रह्मक्षत्रविशाञ्चैव संन्यासो धर्म्म इष्यते ॥

विशेषतः कलौधर्म्मः संन्यासाख्यो हि दुर्घटः ॥ १० ॥

॥ महानिर्व्वाण तन्त्रेऽपि ॥

ब्रह्मचर्य्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये ॥
गार्हस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौयुगे ॥ ११ ॥
शैवसंस्कारविधिनावधूताश्रमधारणम् ॥
तदेव कथितं भद्रे संन्यासग्रहणं कलौ ॥ १२ ॥
ब्रह्मज्ञानं विना ज्ञानं यस्य चित्ते न विद्यते ॥
संन्यासधर्म्मं तस्यैव नान्यस्य सुरपूजिते ॥ १३ ॥
संन्यासधारणं कार्य्यं विप्रस्य मुक्तिहेतवे ॥
यो विप्रो धारयेद्दण्डं सैव नारायणः स्वयं ॥ १४ ॥
चतुर्भुजाः प्रजायन्ते दण्डधारणमात्रतः ॥
सर्व्वलक्षणसंयुक्तो ब्राह्मणो गमनं चरेत् ॥ १५ ॥
गत्वा च दण्डिनं दृष्ट्वा प्रणमेत् दण्डवत् क्षितौ ॥
त्वमेव देवदेवेश त्वमेव त्राणकारकः ॥ १६ ॥
त्वमेव जगतां वंद्य त्राहिमां शरणागतम् ॥

॥ निर्व्वाणतन्त्रे ॥ गैरिकं कौपिणं वस्त्रं यत्नेन परिधापयेत्॥
दण्डधारणमात्रेण नरो नारायणो भवेत् ॥
अद्यावधि महामाया दण्डोपरि विभावय ॥ १८ ॥
गुरुपूजां महाकालीं दण्डोपरि विभावयेत् ॥
ब्राह्मणो दण्डिनं दृष्ट्वा प्रणमेत् विधिपूर्व्वकं ॥ १९ ॥

॥ महानिर्व्वाणतन्त्रे अष्टमोल्लासे ॥

जातमात्रो गृहस्थः स्यात् संस्कारादाश्रमी भवेत् ॥

गार्हस्थ्यं प्रथमं कुर्य्यात् यथाविधि महेश्वरि ॥ २० ॥
तत्त्वज्ञाने समुत्पन्ने वैराग्यं जायते यदा ॥
तदा सर्व्वं परित्यज्य संन्यासाश्रममाश्रयेत् ॥ २१ ॥
विद्यामुपार्ज्जयेत् वाल्ये धनं दारांश्च यौवने ॥
प्रौढ़े धर्म्म्याणि कर्म्माणि चतुर्थे प्रव्रजेत् सुधीः ॥ २२ ॥
मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम् ॥
शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥ २३ ॥
मातॄःपितॄन् शिशून् दारान् स्वजनान् वांधवानपि ॥
यः प्रव्रजति हित्वैतान् स महापातकी भवेत् ॥ २४ ॥

॥ श्रीसदाशिवउवाच ॥

अवधूताश्रमो देवि कलौ संन्यास उच्यते ॥
विधिना येन कर्त्तव्य स्तत् सर्व्वं शृणु सांप्रतं ॥ २५ ॥
ब्रह्मज्ञाने समुत्पन्ने विरते सर्व्वकर्म्माणि ॥
अध्यात्मविद्यानिपुणः संन्यासाश्रममाश्रयेत् ॥ २६ ॥
ब्रह्मज्ञानादृते देवि कर्म्मसंन्यसनं विना ॥
कुर्व्वन् कल्पशतं कर्म्म न भवेन्मुक्तिभाग् जनः ॥ २७ ॥
यतेर्दर्शनमात्रेण विमुक्तः सर्व्वपातकात् ॥
तीर्थव्रततपोदानसर्व्वयज्ञफलं लभेत् ॥ २८ ॥

॥ इति तन्त्रोक्तं सम्पूर्णं ॥

॥ श्रुतिरपि ॥ यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ १ ॥
इतिश्रुतौ युगादेः कालादेश्च नियमो नास्ति ॥ एवमन्या
श्रुतावपि ॥
॥ जावालोपनिषदि ॥ ब्रह्मचर्य्यं परिसमाप्य गृहीभवेत्

गृहीभूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् ॥ २ ॥
॥ इति श्रुतिप्रमाणेन आश्रमादाश्रमान्तरं प्रतीयते ॥
॥ मनुरपि ॥ ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥
अनपाकृत्य मोक्षंतु सेवमानो व्रजत्यधः ॥ ३ ॥
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्म्मतः ॥
इष्ट्वा स्वशक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ४ ॥
( अस्याभिप्रायमाह ) यस्य दृष्टानुश्राविक विषयेष्वधादावेव वैराग्यं न जातं स एतत् सर्व्वं यथा शास्त्रं कृत्वा संन्यसेन्नान्यथा इति श्लोकयोरर्थः । अन्यथा ब्रह्मचर्य्यादेव प्रव्रजेदित्यादि प्रत्यक्ष वेदवचनविरोधादप्रामाण्यप्रसंगात् । व्रजत्यध इति मनुना यदुक्तं तद् मोक्षादर्व्वाक् मुमुक्षुः सत्यलोकादिषु वर्त्तेत इत्यर्थः ) न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छतीति भगवद्वचनात् । (कलौ अधिकारिणोऽनधिकारिणश्च भेदेन विधिनिषेधौ नियमौ संभवतः ॥ परंतु अधिकारिणः कुत्रापि निषेधकं न दृश्यते । विरक्तस्य वैराग्यविशिष्टस्य संन्यासपरित्यागे दोषमाह नारदपरिव्राजकोपनिषदि )
विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् ॥
सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥ १ ॥
यदा मनसि संजातं वैतृष्ण्यं सर्व्ववस्तुषु ॥
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्य्यये ॥ २ ॥
( इत्यादि वचनेनाकरणजन्यपातित्यदर्शनात् एवंसंन्यासस्य विघ्नकर्त्तुरपि दोषमाह । संन्यासोपनिषदि )
संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ॥

स कुर्य्यात् कृच्छ्रमात्रंतु पुनः संन्यस्तु मर्हति ॥ ३ ॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ॥
संन्यासविघ्नकर्त्ता च त्रीनेतान्न पतितान् विदुः ॥ ४ ॥
( इत्यादि वचनेष्वकरणजन्यपातित्यदर्शनात् । एवंसंन्
सग्रहणे विघ्नकर्त्तापि पतितः संभवति ॥ अतएव श्रु
स्मृति पुराणेषु संन्यासग्रहणमवश्य मेवकर्तव्यं न तु विर
स्य विवेकवैराग्ययुक्तस्य संन्यासग्रहणे निषेधः संभ
किन्तु संन्यासग्रहणमवश्यमेव कर्त्तव्यं ॥ इत्य भिप्राय
ननु अधिकारिभेदेन कलौ संन्यासग्रहणकर्त्तव्यत्वम्
केन पुनः कर्त्ता कलौसंन्यासयज्ञादि कृतम् । इति प्र
उत्तरमाह ॥

( द्वापरांते कलौ प्राप्ते युधिष्ठिरो राजा अश्वमेधादि
कृतवान् महाभारते प्रसिद्धमस्ति तदेव कलेः प्रमाप
वायुपुराणेपि वाणानिरुद्धसंवादे ॥ )

शिशुपालो दन्तवक्रो जयोविजय एव च ॥ १ ॥ (इ
वचने उक्तौ शिशुपालदन्तवक्रौ कलौ उत्पन्नौ तौ द्वौ राज्ञो
धिष्ठिरस्य राजसूय यज्ञे कृष्णेन निहतौ तस्मिन् कलियुगे
अश्वमेधादि यज्ञं कृतवान् ॥ तत् प्रमाणं स्पष्टं दर्शयति)
द्वितीयजन्मनि पुरा रावणः कुंभकर्णकः ॥
श्रीरामेण हतौ तौ द्वौ शेषजन्म कलौ तयोः ॥ १ ॥
श्रीकृष्णेन हतौ तौ द्वौ धर्मपुत्रकृतौ तथा ॥

(इति एतद्वचनेन कलियुगीयराजा युधिष्ठिरो अश्वमेधा
यज्ञं कृतवान् महाभारते स्पष्टं प्रतीयते ॥ )

एवं कलेः प्रथमचरणे परिक्षिद् राजा अश्वमेधादि यज्ञं कृतवान् एवं जन्मेजयो राजाऽप्यश्वमेध सर्पसत्रादि कृतवान् तस्य पुत्रः शतानीको राजा अश्वमेधादि यज्ञं कृतवान् तत् प्रमाणं वायुपुराणे ७१ अध्याये अनुषंग पादे ॥

विष्णुपुराणे च यदुक्तं तदाह ॥

परीक्षितस्तु दायादो राजा सीज्जन्मेजयः ॥
ब्राह्मणान् स्थापयामास स वै वाजसनेयिकान् ॥ १ ॥
यावत् स्थास्याम्यहं लोके तावन्नै तत् प्रशस्यते ॥
अभितः संस्थितश्चापि ततः स जनमेजयः ॥ २ ॥
पौर्णमास्येन हविषा देवमिष्ट्वा प्रजापतिम् ॥
विज्ञाय संस्थितो ऽपश्यत्तद्वधीष्टां त्विभोर्मखे ॥ ३ ॥
परिक्षित्तनय श्चापि पौरवो जनमेजयः ॥
द्विरश्वमेध माहृत्य ततो वाजसनेयकम् ॥ ४ ॥
प्रवर्त्तयित्वा तद्ब्रह्म त्रिखर्व्वी जनमेजयः ॥
खर्व्वमश्वकमुख्यानां खर्व्वमंगनिवासिनां ॥ ५ ॥
खर्व्वंश्च मध्यदेशानां त्रिखर्व्वी जनमेजयः ॥
विषादाद्ब्राह्मणैः सार्द्धमभिशस्तः क्षयं ययौ ॥ ६ ॥
तस्य पुत्रः शतानीको बलवान् सत्यविक्रमः ॥
ततः सुतं शतानीकं विप्रास्तमभ्यषेचयत् ॥ ७ ॥
पुत्रो ऽश्वमेधदत्तो ऽभूत् शतानीकस्य वीर्यवान् ॥
पुत्रो ऽश्वमेधदत्ता द्वैजातः परपुरंजयः ॥ ८ ॥

(इति कलौ अश्वमेधादि यज्ञउक्तः ॥)

( एवं पृथ्वीराजापि क्षत्रियस्याखण्डराज्यनिमित्तार्थं

यज्ञादि कृतवान् महाभारते प्रसिद्धमेव ॥

(विष्णुपुराणे २१ अध्याये ॥ ब्रह्मक्षत्रस्य यो योनि वंशो
जर्षि सत् कृतः । क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते
एतद्वचन प्रमाणेन कलौ अश्वमेध यागादि अधिकारी
प्रसिद्धः । न तु निषिद्धमेव ननु अश्वमेधादि यज्ञः कलौ अ
कारिभेदेन प्रसिद्धः । संन्यासग्रहणं कलौ के जनाः कृत
इत्याह । नारायणं पद्मभवं वसिष्ठं शक्तिं च तत् पुत्रपरा
च व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथ
शिष्यं श्री शंकराचार्य्यमथास्य पद्मपादञ्च हस्तामलक
शिष्यंतन्तो टकं वार्त्तिककारं अन्यान्स्यस्मद्गुरून्
मानतोऽस्मीति ॥ शुकदेवस्य शिष्यः गौडपादाचार्य्यः
शिष्यो गोविन्दपदाचार्य्यः तस्य शिष्यः श्री भगवत् पूज्य
शङ्कराचार्य्यः तस्य शिष्य चतुष्टयः पद्मपादाचार्य्य सुरे
राचार्य्य तोटकाचार्य्य हस्तामलकाचार्य्य प्रभृतयः । अ
षामपि वहवो महात्मानः गौरांगप्रभृतयः संन्यासग्र
चक्रुः ॥ त एते सर्व्वे महात्मानः । किं संन्यास ग्रहणं नि
न जानन्ति स्म अपितु जानन्त्येव । एते सर्व्वे अधिका
सन्ति अतएव संन्यासग्रहणं कलौ सिद्धं । इति ॥

(ननु यद्यपि वृहन्नारदीयपुराणे एवं ब्रह्मवैवर्त्त पुराणे
कलौ संन्यास ग्रहणं निषिद्धं प्रतीयते तत् निषिद्धं कुत्र
च्छतां । इति तदाह ॥ ( अधिकारि भेदेन निर्द्दिष्टमिति सं
मेत्र इति नैवदोषः ॥ यद्यपि पूर्व्वोक्त निषिद्धवचनं गृह्णीया
यावत् वर्णविभागोऽस्तीति व्यासवचने विधिर्व्विरोधात्

तन्त्रोक्तोऽपि विधि वचने विरोधात् अतएव अधिकारिभेदेन सर्व्वशास्त्रेऽपि संन्यासग्रहणं सामञ्जस्यं निश्चितं न विरुद्ध मिति॥ यतः आत्मनः श्रेयः साधनं तपो योगादिकमाचरति ततश्च मोक्षं प्राप्नोति ॥

## ( आत्मपुराणे १२ अध्याये ॥)

सश्वेताश्वतरस्यापि कठस्यापि च तित्तिरेः ॥
जावालादि मुनीशानां योग संन्याससंयुतम् ॥ १ ॥
आख्या नान्यति चित्राणि वहूनि विविधानि च ॥
श्रुतानि तानि सर्व्वाणि मया ते वदनाद्गुरोः ॥ २ ॥
संवर्त्तकाद्याः संन्यासे भवतात्र समीरिताः ॥
पूर्व्वं संन्यासिनः सर्व्वे लोकातीता महाधियः ॥ ३ ॥
वैराग्यं तस्य कालश्च संन्यासस्य प्रकीर्त्तितः ॥
नानाविधैरुपायैश्च विरक्ताद्य धिकारिणः ॥ ४ ॥
संन्यासस्य विधिर्न्यासि मरणे संस्क्रिया पि च ॥
वेषस्तस्य तथाचारः कीर्त्तितो बहुधात्वया ॥ ५ ॥

## ॥ आत्मपुराणे १६ अध्याये ॥

यत्रवेनो ऽपि गंधर्व्वो ब्रह्महानुभवन्नपि ॥
संन्यासान्तानि यत्र स्युः साधनान्यात्म वित्तये ॥ ६ ॥
जावालादि श्रुति प्रोक्ताः कथा नानाविधा अपि ॥
यत्र संन्यासिनः सर्व्वे संवर्त्ताद्या उदाहृताः ॥ ७ ॥
वैराग्य कारणं न्यास स्तच्च योगादि कारणं ॥
अधिकारी विरक्तश्च तद्वेषो मण्डनादिकः ॥ ८ ॥

आचारो ब्रह्मविज्ञानं कीर्त्तितो यत्र तस्य सः इति ॥ ६ ॥

( देवीभागवते ) ॥ तपसाषड्रिपून् जित्वा भार्य्यां
निवेश्यच । सर्व्वानग्नीन् यथान्याय मात्मन्यारोप्यधर्म्म
॥ १ ॥ वसेत्तुर्य्याश्रमेश्रान्तः शुद्धेवैराग्यसंभवे । विरक्त
धिकारो ऽस्ति संन्यासे नान्यथाक्वाचित् ॥ २ ॥

( ननु पूर्व्वोक्त वाक्यशेषे अधिकारि भेदेन संन्यासाश्र
कर्त्तव्यमित्युक्तं । न तु ब्राह्मणक्षत्रियवैश्यानांप्रभृ
निर्द्दिष्टमुक्तं । एतेषांमध्ये परिब्राजकस्य धर्म्मे को ऽधिका
इति प्रश्नः ॥ ) एतदुत्तरमाह ॥ द्विजातीनां मध्ये च
श्रम स्वीकारस्य ब्राह्मणस्याधिकारत्वात् ॥ तत् प्रमाण
॥ जावालश्रुतिः ॥

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहादिति ॥
( मिताक्षरायांतु ) ब्राह्मणाः प्रव्रजन्तीति श्रुतेः ॥ २ ॥
(अङ्गिरः) चीर्णेवेदव्रते विद्वान् ब्राह्मणो मोक्षमा श्रयेदिति ॥
(मनुः) एष वो ऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्व्विधः ॥
(हारितः) संन्याससमयं कृत्वा ब्राह्मणो ब्रह्मचर्य्यया ॥
( संवर्त्तः ) चतुर्थमाश्रमं गच्छेद्धुत होमो जितेन्द्रियः ॥
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ॥ ६ ॥

॥ आत्मपुराणे १८ अध्याये ॥

ब्राह्मणा एतमिच्छन्ति एषणा त्रय वर्ज्जिताः ॥
भिक्षाचर्य्यं चरन्त्यत्र व्युत्थायाश्रमकर्म्मतः ॥ १ ॥

( विष्णुपुराणे ) ॥ कृत्वा ग्निहोत्रं स्वशरीर संस्थंशा
मग्निं स्वमुखे जुहोति । विप्रस्तु भिक्षोपगतैर्हविर्भिः चि

श्निना स व्रजति स्म लोकान् ॥ २॥ ( दत्तात्रेयः ) ॥ ब्राह्मणः प्रव्रजेत् गृहात् । इति यम संवर्त्त बोधायनादिवचनाच्च ॥ (मनुः)
संन्यास हेतु वैराग्यं यदहर्विरजेत्तदा ॥
प्रव्रजेदिति वेदोक्ते स्तद्भेदस्तु पुराणगः ॥ ३ ॥
( वायुपुराणे ) ॥ ब्राह्मणा एतमिच्छंति एषणात्रयवर्ज्जिताः ॥
भिक्षाचर्य्यं चरन्त्यत्र व्युत्थायाश्रम कर्म्मतः ॥ ४ ॥

[ वृहदारण्यके चतुर्थाऽध्याये चतुर्थ ब्राह्मणे ]

मैत्रेयीति होवाच याज्ञवल्क्य उद्वास्यन् वा अरे ऽहम स्मात् स्थानादस्मि हंत तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥ भाष्यार्थमाह ॥

कर्म्म आत्मविषय स्तस्य तत्प्रत्यय संन्यासात्तत् कार्य्याणां कर्म्मणां कर्म्मसाधनानाञ्चार्थप्राप्तश्चसंन्यासः । तस्मादात्मज्ञानाङ्गत्वेन संन्यास विधित्सयैवाख्यायिकेऽयमारभ्यते ॥ मैत्रेयीति होवाच । याज्ञवल्क्यो मैत्रेयीं स्वां भार्य्यामामन्त्रितवान् याज्ञवल्क्यो नामऋषिः । उद्वास्यन्नूर्ध्वंयास्यन् पारिव्राज्याख्यामाश्रमांतरं वै अरे इति संबोधनं । अहमस्माद्गार्हस्थात् स्थानादाश्रमादूर्ध्वंगन्तुमिच्छन्न स्मि भवामि ॥ अतो हंतानुमतिं प्रार्थयामि ते तव किंचान्यत्तवाऽनया द्वितीयया भार्य्यया कात्यायन्या अन्तं विच्छेदं करवाणि पातिद्वारेण युवयो र्मया संवध्य मानयो र्यः संबंध आसीत्तस्य संबन्धस्य विच्छेदं करवाणि द्रव्य विभागं कृत्वा वित्तेन संविभज्य युवां गमिष्यामि ॥

॥ वृहदारण्यके पञ्चमाऽध्याये पञ्चम ब्राह्मणे॥
त्रयं वै तमात्मानं विदित्वा ब्राह्मणाः । पुत्रैषणायाश्च वि
णायाश्च लोकैषणायाश्च व्युत्थाय । अथ भिक्षाचर्य्यं चर
या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकै
भे ह्येते एषणे एव भवतः ॥ भाष्यार्थमाह ॥ तमेतं वै
त्मानं स्वं तत्त्वं विदित्वा ज्ञात्वाऽयमहमस्मि परं ब्रह्म
सर्व्व संसार विनिर्मुक्तं नित्यतृप्तमिति ब्राह्मणाः ॥
णानामेवाधिकारो व्युत्थाने । अतो ब्राह्मण ग्रहणं व्यु
वैपरीत्येनोत्थानं कृत्वा कृत इत्याह । पुत्रैषणायाः
र्थी एषणा पुत्रैषणा पुत्रेणेमं लोकं जयेयमिति लो
साधनं पुत्रं पतीच्छा एषणा दारसंग्रहः । दारसंग्रह
त्यर्थः ॥ वित्तैषणायाश्च कर्म्मसाधनस्य गवादे रुपादा
नेन कर्म्म कृत्वा पितृलोकं जेष्यामीति ॥ विद्या सं
वा देवलोकं केवलाय वा हिरण्यगर्भविद्यया दैवेन
देवलोकं देवाद्वित्ताद्व्युत्थानमेव नास्तीति केचित्।
स्मात्तद्बलेन हि किल व्युत्थानमिति । तदसत् एता
काम इति पठितत्वात् एषणामध्ये दैवस्य वित्तस्य हि
गर्भादि देवता विषयैव विद्याऽविद्येत्युच्यते । देवलो
तुत्वात् । न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्म
देवलोकप्राप्तिहेतुः । तस्मात्तत् सर्व्वमभवत् आत्मा
सं भवतीतिश्रुतेः ॥ तद्बलेन हि व्युत्थानं । एतं वै
त्मानं विदित्वेति विशेषवचनात् ॥ तस्मात् त्रिभ्यो ऽ
भ्योऽ नात्मलोकप्राप्तिसाधनेभ्य एषणा विषयेभ्यो व्यु

एषणा काम एतावान् वै काम इति श्रुते रेतस्मिं स्त्रिविधे ऽनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः । सर्व्वा हि साधनेच्छा फलेच्छैव । अतो व्याचष्टे श्रुतिरेकै वैषणेति कथं या ह्येव पुत्रैषणा सा वित्तैषणाऽदृष्टफलसाधनत्वतुल्य-त्वादुया वित्तैषणा कर्म्मभूता सा लोकैषणा फलार्थैव सा सर्व्वः फलार्थप्रयुक्त एव हि सर्व्वं साधनमुपादत्ते । अत एकैवैषणा लोकैषणा या सा साधनमन्तरेण संपादयितुं न शक्यत इति साध्यसाधनभेदेनोभे हि यस्मादेते एषणे एव भवत स्तस्माद्ब्रह्मविदो नास्ति कर्म्म कर्म्मसाधनं वा । अतो येऽतिक्रान्ताः ब्राह्मणाः सर्व्वं कर्म्म कर्म्मसाधनञ्च सर्व्वं देव-पितृमानुषनिमित्तं यज्ञोपवीतादि । तेन हि दैवं पित्र्यं मा-नुषञ्च कर्म्म क्रियते ॥

निवीतं मनुष्याणामित्यादिश्रुते स्तस्मात् पूर्व्वं ब्राह्मणा ब्रह्मविदो व्युत्थाय कर्म्मभ्यः कर्म्मसाधनेभ्यश्च यज्ञोपवीता-दिभ्यः परमहंसपारिव्राज्यं प्रतिपाद्य भिक्षाचर्य्यं चरन्ति । भिक्षार्थं चरणं भिक्षाचर्य्यं चरन्ति त्यक्त्वा स्मार्त्तं लिंगं केवला-श्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकं विद्वां ल्लिंगवर्ज्जितः ॥ तस्मादलिंगो धर्म्मज्ञो ऽव्यक्तलिंगो ऽव्यक्ता-चार इति स्मृतिभ्यः । अथ परिव्राड् विवर्णवासा मुण्डोऽपरि-ग्रह इत्यादिश्रुतेः । सशिखान् केशान् निकृत्य विसृज्य यज्ञो पवीतमिति च ॥ ननु व्युत्थाय भिक्षाचर्य्यं चरतीति वर्त्तमा नोपदेशादर्थवादोऽयं न विधायकः प्रत्ययः कश्चिच्छ्रूयते लिङ् लोट् तव्यानामन्यतमो ऽपि तस्मादर्थवादमात्रण

श्रुतिस्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यः परित्यागः कारयितुम् । यज्ञोपवीत्येवाधीयीतयाजयेद्यजेत वा ॥ पारिव्राज्ये तावदध्ययनं विहितं वेदसंन्यसनाच्च स्तस्माद्वेदं न संन्यसेदिति स्वाध्याय एवोत् सृजमानो मिति चापस्तम्बः ॥

ब्रह्मोज्झं वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः ।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षडिति ॥

वेदपरित्यागे दोषश्रवणादुपासने गुरुणां वृद्धानामतिथीनां होमे जप्यकर्म्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यादिति परिव्राजकधर्म्मेषु गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्म्मणां श्रुतिस्मृतिषु कर्त्तव्यतया विहितत्वात् । गुर्व्वाद्युपासनांगत्वेन यज्ञोपवीतस्य विहितत्वात् परित्यागो नैवावगन्तुंशक्यते । यद्यप्येषणाभ्यो व्युत्थानं धीयत एव तथापि पुत्राद्येषणाभ्य स्तिसृभ्य एवव्युत्थानं सर्व्वस्मात् कर्म्मणः कर्म्मसाधनाच्च व्युत्थानं सर्व्वपरित्यागश्चाश्रुतं कृतं स्याच्छ्रुतं च यज्ञोपवीतादि हापितंस्यात् ॥ च महानपराधो विहिताकरण प्रतिषिद्धाचारण निमित्तः स्यात्तस्माद् यज्ञोपवीतादिलिंगपरित्यागो ऽन्धपरंपरैव यज्ञोपवीतं वेदांश्च सर्व्वं तद्वर्ज्जयेद्यतिरिति श्रुतेरपि ज्ञानपरत्वात् सर्व्वस्याउपनिषद आत्माद्रष्टव्यः श्रोतव्यो मन्तव्य इति हि प्रस्तुतं ॥ स चात्मैव साक्षाद परोक्षात् सर्वान्तरोऽशनायादिसंसारधर्म्मवर्ज्जित इत्येवं विज्ञेय इति प्रसिद्धं ॥ सर्व्वा हीयमुपनिषदेवंपरेति विध्यन्तरश्रो

तावन्नास्त्यतो नार्थवादः । आत्मज्ञानस्य कर्तव्यत्वादात्मा चाशनायादिधर्म्मवान् न भवतीति साधनफले विलक्षणे ज्ञातव्ये । अतो व्यतिरेकेणात्मनो ऽज्ञानमविद्या ऽन्यो ऽसाव न्यो ऽहमस्मीति न स वेद मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यत्येकधैवा नुद्रष्टव्यमेकमेवा द्वितीयं तत्त्वमसीत्यादि श्रुतिभ्यः क्रियाफलं साधन श्चाशनायादि संसारधर्म्मातीतादात्मनो ऽन्यदविद्याविषयं । यत्र हि द्वैतमिव भवत्यन्यो ऽसावन्योऽहमस्मि न स वेद । अथ ये ऽन्यथाऽतो विदुरित्यादिवाक्यशतेभ्यः । न च विद्या विद्येएकस्य सह भवतो विरोधात् तमः प्रकाशाविव । तस्मादात्मविदो ऽविद्याविषयो ऽधिकारो न द्रष्टव्यः क्रियाकारकफलभेदरूपः । मृत्योः समृत्युमाप्नोतीत्यादिनिन्दितत्वात् । सर्व्वक्रियासाधन फलानाञ्चाविद्याविषयाणां तद्विपरीतात्म विद्यया हातव्यत्वेनेष्टत्वात् । यज्ञोपवीतादिसाधनानां च तद्विषयत्वात् । तस्मादसाधनफलस्वभावात् आत्मनोऽन्यविषया विलक्षणा एषणा । उभे ह्येते साधनफले एषणे एव भवतः । यज्ञोपवीतादे स्तत्साध्यकर्म्मणांश्च साधनत्वात् । उभे ह्येते एषणे एवेति हेतुवचनेनावधारणात् । यज्ञोपवीतादिसाधनात् तत्साध्येभ्यश्च कर्म्मभ्यो ऽविद्या विषयत्वात् एषणारूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थानं विधिवत् स्थितमेव । न तूपानिषदः । आत्मज्ञानपरत्वात् । व्युत्थानश्रुतिस्तु स्तुत्यर्था न विधिर्न विधित्सितं विज्ञानेन समान कर्त्तृत्व श्रवणात् । नह्यकर्त्तव्येन कर्त्तव्यस्य समान कर्त्तृकत्वेन कदा-

चिदपि वेदश्रवणं संभवति । कर्त्तव्यानामेव ह्यभिषुवहोम-
क्षाणां यथा श्रवण मभिषुत्य हुत्वा भक्षयन्तीति तद्वदात्म-
नेषणाव्युत्थानभिक्षाचर्य्याणां कर्त्तव्यानामेव समान-
कत्वश्रवणं भवेत् । अविद्याविषयवदेषणात्वाज्ञार्थ
एव आत्मज्ञान विधेरेव यज्ञोपवीतादि परित्यागो न तु
धातव्य इतिचेन्न ॥ सुतरामात्मज्ञाने विधिनैव विहि-
समानकर्त्तृकत्वश्रवणेन दाढर्योत्पत्ति स्तथा भिक्षाचर्य-
यत् पुनरुक्तं वर्त्तमानोपदेशादर्थवादमात्रमिति । औदुम्ब
यूपादिविधिसमानत्वाददोषः ॥ व्युत्थाय भिक्षाचर्य्यं चर-
त्यनेन पारिव्राज्याश्रमे च यज्ञोपवीतादिसाधनानि वि-
तानि लिंगश्च श्रुतिभिः स्मृतिभिश्च अतस्तद्वर्जि-
ऽन्यस्माद् व्युत्थानमेषणात्वे ऽपीतिचेन्न ॥ विज्ञानस-
कर्त्तृकात् पारिव्राज्यादेषणा व्युत्थानलक्षणा पारिव्राज्या-
पपत्तेः । यद्धितदेषणाभ्यो व्युत्थायलक्षणं पारिव्राज्यं
त्मज्ञानांगमात्मज्ञानविरोध्येषणापरित्यागरूपत्वाद विधा-
षयत्वाच्चैषणाया स्तद्वयतिरेकेण चास्त्याश्रमरूपं पारि-
ब्रह्मलोकादिफलप्राप्तिसाधनं ॥ यद्विषयं यज्ञोपवीतादि-
धनविधानं लिङ्गविधानञ्च । न चैषणारूपसाधनोपाद-
स्याश्रमधर्म्ममात्रे पारिव्राज्यान्तरविषये सम्भवति
सर्व्वोपनिषद्विहितस्यात्मज्ञानस्य बाधनं युक्तं । यज्ञो-
ताद्यविद्याविषयैषणारूपसाधनोपादित्सायां चावश्यमस-
नफलरूपस्याशनायादिसंसारधर्म्मवर्जितस्याहंब्रह्मास्मी-
विज्ञानं बाध्यते । न च तद्बाधनं सर्व्वोपनिषदां तद-

रत्वाद्भिक्षाचर्य्यं चरन्तीत्येषणां ग्राहयन्तीतिश्रुतिः। स्वयमेव वाधत इतिचेत् । अथापि स्यादेषणाभ्यो व्युत्थानंविधाय पुनरेषणैकदेशं भिक्षाचर्य्यं ग्राहयन्तीति तत्सम्बद्धमन्यद पि ग्राहयन्तीतिचेन्न ॥ भिक्षाचर्य्यस्याप्रयोजकत्वा द्धुत्वोत्तरकालभक्षण वच्छेषप्रतिपत्तिकर्म्मत्वादप्रयोजकं हि तदसंस्कारकत्वाच्च । भक्षणंपुरुषसंस्कारकमपि स्यान्नतु भिक्षाचर्य्यं नियमादृष्टस्यापि ब्रह्मविदोऽनिष्टत्वात् । नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्य्येणेतिचेन्न ॥ अन्यसाधनाद्व्युत्थानस्य विहितत्वात् । तथापि किंतेनेतिचेत् । यदिस्याद्बाढं अभ्युपगम्यते हितत् । यानि पारिव्राज्येऽभिहितानि वचनानि यज्ञोपवीत्येवाधीयीते त्यादीनि तान्य विद्वत् पारिव्राज्यमात्रविषयाणीति परिहृतानि । इतरथात्मज्ञानवाधः स्यादितिह्युक्तं ॥ निराशिषमनारंभं निर्नमस्कारमस्तुतिं । अक्षीणं क्षीणकर्म्माणं तं देवाब्राह्मणं विदुरिति सर्व्वकर्म्माभवं दर्शयति स्मृतिर्विदुषः विद्वांल्लिङ्ग विवर्जितस्तस्माद लिङ्गोधर्म्मज्ञ इतिच । तस्मात् परमहंस पारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येतात्मवित् सर्व्वकर्म्मसाधनपरित्यागरूपमिति श्रुतिः ॥—

॥ वृहदारण्यके पञ्चमे पञ्चम ब्राह्मणे ॥

तस्माद् ब्राह्मणः पाण्डित्यं निर्व्विद्य वाल्येन तिष्ठासेत् । वाल्यञ्च पाण्डित्यञ्च निर्व्विद्याथ मुनिरमौनञ्चमौनञ्च निर्व्विद्याथ ब्राह्मणः स ब्राह्मणः केनस्याद्येनस्यात्तेनेद शएवातोऽन्यदार्त्तंततो ह कहोलः कौषीत केयउपरराम ॥ १ ॥

( अथभाष्यार्थः ) यस्मात् पूर्व्वे ब्राह्मणा एतमात्मानम
धन फल स्वभावं विदित्वा सर्व्वस्मात् साधन स्वरूपा
णालक्षणाद्व्युत्थाय भिक्षाचर्य्यं चरन्ति स्म । दृष्टा
कर्म्म न तत् साधनं च हित्वा । तस्मादद्यत्वेऽपि ब्राह्म
ब्रह्मवित् पाण्डित्यं पण्डितभावमेतदात्मविज्ञानं पारि
तान्निर्व्विद्य निःशेषं विदित्वा आत्मविज्ञानं निरविशेषं
र्थः । एतत् भाष्यकारेणोक्तं ग्रन्थबाहुल्यभयात् मयानोक्त
( अथेदानीं छान्दोग्योपनिषदि प्रमाणमाह )

॥ द्वितीय अध्याये २३ प्रपाठके ॥

॥ त्रयोधर्म्म स्कन्धा यज्ञो ऽध्ययनं दानमिति ॥
प्रथम स्तप एव द्वितीयो ब्रह्मचर्य्याचार्य्यकुलवासी ।
तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादन्न सर्व्व एते
लोकाभवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥ २ ॥

[ भाष्यार्थः ] ॐकारस्योपासनविध्यर्थंत्रयोधर्म स्क
इत्याद्यारभ्यते । नैवमन्तव्यं सामावयवभूतस्यैवोदगीथ
लक्षणस्य ॐकारस्योपासनात् फलंप्राप्यत इति । किं त
यत् सर्व्वैरपि सामोपासनैः कर्म्मभिश्चाप्राप्यं तत् अ
मृतत्वं केवलादोङ्कारोपासनात् प्राप्यतइति तत्
सामप्रकरणे तदुपन्यासःत्रयस्त्रिंशसंख्याका धर्म्मस्य स्क
धर्म्मस्कन्धा धर्म्मप्रविभागा इत्यर्थः । के त इत्याह
ऽग्निहोत्रादिः । अध्ययनं सनियमस्य ऋगादेरभ्यासः
वाहिर्व्वेदियथाशक्तिद्रव्यसंविभागो ऽभिक्षमाणेभ्यः

प्रथमोधर्म्मस्कन्धः । गृहस्थसमवेतत्वात्तन्निवर्त्तकेन गृहस्थेन निर्दिश्यते प्रथम एकइत्यर्थो द्वितीय तृतीय श्रवणात् । नाद्यर्थस्तपएव ॥ द्वितीयस्तपइति ॥ कृच्छ्रचान्द्रायणादि तद्वांस्तापसः परिव्राड् वा न ब्रह्मसंस्थः आश्रमधर्म्म-मात्रसंस्थे ब्रह्मसंस्थस्य त्वमृतत्वश्रवणात् । द्वितीयोधर्म्म स्कन्धः ॥ ब्रह्मचर्य्याचार्य्य कुलेवस्तुं शीलमस्ये स्याचार्य्य कुलवासी । अत्यन्तं यावज्जीवमात्मानं नियमैराचार्य्य कुले ऽवसादयन् क्षपयन्देहं तृतीयोधर्म्मस्कन्धः । अत्यन्तमित्या-दि विशेषणान्नैष्ठिक इतिगम्यते । उपकुर्व्वाणस्य स्वाध्याय-ग्रहणार्थत्वान्नपुण्यलोकत्वं ब्रह्मचर्य्येण । सर्व्वे एते त्रयो ऽप्याश्रमिणो यथोक्तै र्धर्म्मैः पुण्यलोका भवन्ति । पुण्योलो-कोयेषांत इमेपुण्यलोका आश्रमिणो भवन्ति । अवशिष्ट-स्त्वनुक्तः परिव्राट् ब्रह्मसंस्थो ब्रह्मणि सम्यगवस्थितः सो-ऽमृतत्वं पुण्यलोक विलक्षणममरणभावमात्यन्तिकमेति नापेक्षिकं देवाद्यमृतत्ववत् ॥ पुण्यलोकात् पृथगमृतत्वस्य विभागकरणात् । यदि च पुण्यलोकातिशयमात्रममृतत्वमभ विष्यत्ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत् । विभक्तोपदेशात्वा दात्यन्तिकममृतत्वमिति गम्यते । अत्र चाश्रमधर्म्मफलो-पन्यासः प्रणवसेवास्तुत्यर्थं न तत् फलविध्यर्थं ।

स्तुतये च प्रणवसेवाया आश्रमधर्म्मफलाविधये चेति हि भिद्यते वाक्यं ॥ तस्मात् स्मृति प्रसिद्धाश्रमफलानुवादे प्रणव सेवाफलममृतत्वं ब्रुवन् प्रणव सेवां स्तौति ॥

यथा पूर्णवर्म्मणः सेवा भक्तपरिधानमात्रफला राज-

वर्म्मणस्तु सेवा राज्यतुल्यफलेति तद्वत् । प्रणवश्च तत्
त्वं परंब्रह्म तत् प्रतीकत्वात् । एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवा
परमित्याद्याम्नायात् । काठकेऽप्युक्तं तत् सेवातोऽमृतं
अत्राहुः केचिच्चतुर्णामाश्रमिणामविशेषेण स्वकर्म्मानुष्ठा
पुण्यलोकतेहोक्ता ज्ञानवर्ज्जितानां सर्व्वे एते पुण्यलो
भवन्तीति । नात्रपरिव्राड वशेषितः । परिव्राजकस्यापि
नं मया नियमाश्च तप एवेति । तप एव द्वितीय इत्यत्र
शब्देन परिव्राट् तापसौ गृहितौ ॥ अतस्तेषामेव चतुर्णा
ब्रह्मसंस्थः प्रणवस्यैकः सो ऽमृतत्वमेतीति । चतुर्णामवि
त्वाविशेषात् । ब्रह्मसंस्थत्वेऽप्रतिषेधाच्च ।

स्वकर्म्म च्छिद्रे च ब्रह्मसंस्थतायाः सामर्थ्योपपत्तेः
यत्त्वराहादि शब्दवद्ब्रह्म संस्थशब्दः परिव्राजकेरूढः । ब्र
संस्थितिनिमित्तमुपादाय प्रवृत्तत्वात् न हि रूढिशब्दे
मित्तमुपाददते । सर्व्वेषाञ्च ब्रह्मणि स्थितिरुपपद्यते ।
यत्र निमित्तमस्ति ब्रह्मणि संस्थिति स्तस्य तस्य निमि
तो वाचकं सन्तं ब्रह्मसंस्थशब्दं परिव्राडेकविषये संको
रणाभावान्निरोद्धमयुक्तं ॥ न च परिव्राज्याश्रम धर्म्ममा
मृतत्वं । ज्ञानानर्थक्यप्रसंगात् पारिव्राज्यधर्म्मयुक्तमेव
नममृतत्वसाधनमिति चेन्न ॥

आश्रमधर्म्मत्वाविशेषात् । धर्म्मी वा ज्ञानविशिष्टो
त्वसाधनमित्येतदपि सर्व्वाश्रमधर्म्माणामविशिष्टं ।
वचनमास्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षो नान्य
ति । ज्ञानान्मोक्ष इति च सर्व्वोपनिषदः सिद्धान्त

तस्माद्य एव ब्रह्मसंस्थः स्वाश्रमविहितकर्म्मवतां सो ऽमृतत्वमेतीति न कर्म्मनिमित्तविद्याप्रत्यययो र्विरोधात् ॥ कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादायेदं कुर्व्विदं मा कार्षीरिति कर्म्मविधयः प्रवृत्ताः । तच्च निमित्तं न शास्त्रकृतं । सर्व्वप्राणिषु दर्शनात् । सदेकमेवाद्वितीयमात्मैवेदं सर्व्वं ब्रह्मैवेदं सर्व्वमिति शास्त्रजन्यः प्रत्ययोविद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्म्म विधिनिमित्त मनुपमृद्य न जायते । भेदाभेदप्रत्यययो र्विरोधात् । न हि तैमिरिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते । विद्याविद्याप्रत्यययो र्विरोधात् । तत्रैवं सति यं भेदप्रत्यय मुपादाय कर्म्मविधयः प्रवृत्ताः स यस्योपमर्द्दितः सदेकमेवाद्वितीयं तत् सत्यंविकारभेदो ऽनृतमित्येतद्वाक्यप्रमाणजनितेनैकत्वप्रत्ययेन यः सर्व्वकर्म्मभ्योनिवृत्तो निमित्तनिवृत्ते स च निवृत्तकर्म्मा ब्रह्मसंस्थ उच्यते स च परिव्राडेवान्यस्यासंभवात् ॥ अन्यो हि अनिवृत्तभेदप्रत्ययः सोऽन्यत् पश्यन् शृण्वन्मन्वानो विजाननिदं कृत्वेदं प्राप्नुयामिति हि मन्यते । तस्यैवं कुर्व्वतो न ब्रह्मसंस्थता वाचारंभणमात्र विकारानृताभिसन्धिप्रत्ययवत्त्वात् न चासत्यामिति । उपमर्द्दिते भेदप्रत्यये सत्यमिदमनेन कर्त्तव्यं मयेति । प्रमाणप्रमेयवुद्धिरुत्पद्यते । आकाशे इव तलमल वुद्धिविवेकिन उपमर्द्दितेऽपिभेदप्रत्यये कर्म्मभ्यो न निवर्त्तते चेत्प्रागिव भेदप्रत्ययोपमर्द्दनादेकत्वप्रत्ययविधायकं वाक्यम प्रमाणीकृतं स्यादभक्ष्य भक्षणादिप्रतिशेधवाक्यानां प्रामाण्य

वदुक्तमेकत्ववाक्यस्यापि प्रामाण्यं । सर्व्वोपनिषदां करत्वात् कर्म्मविधीनामप्रामाण्य प्रसंग इतिचेत् । न पमर्द्दितभेदपत्यय वत्पुरुषविषये प्रामाण्योपपत्तेः स्व प्रत्यय इव प्राक् प्रबोधाद्विवेकिनाम करणात् कर्म्मवि माण्योच्छेद इति चेन्न । काम्यविध्यनुच्छेददर्शनात् । न कामात्मन न प्रशस्तेत्येवं विज्ञानवद्भिः काम्यानि कर्म्मा नानुष्ठीयन्त इति काम्य कर्म्मविधय उच्छिद्यन्ते ऽनुष्ठी एव कामिभिरिति । तथा ब्रह्मसंस्थै ब्रह्मविद्भिर्नानुष्ठी कर्म्माणीति न तद्विधय उच्छिद्यन्ते ऽब्रह्मविद्भिरनुष्ठी एवेति । परिब्राजकानां भिक्षाचरणादि वदुत्पन्नैकत्व यानामपि गृहस्थादीनामग्निहोत्रादि कर्म्माणि वृत्तिरिति प्रामाण्य चिन्तायां पुरुष प्रवृत्तेरदृष्टान्तत्वात् । न हि नाभि दिति प्रतिषिद्धमप्यभिचरणं कश्चित् कुर्व्वन् दृष्ट इति द्वेषरहितेनापि विवेकेनाभिचरणं क्रियते । न च कर्म्मवि वृत्ति निमित्तेभेदप्रत्यये वाधितोऽग्निहोत्रादौ प्रवर्त्तकं नि मस्ति । परिब्राजकस्येव भिक्षाचरणादौ बुभुक्षादिप्र इहाप्यकरणे प्रत्यवाय भयं प्रवर्त्तकमितिचेत् न भेदप्र तोऽधिकृतत्वात् । भेदप्रत्ययवाननुपमर्द्दित भेदबुद्धि यःस कर्मण्यधिकृत इत्यवोचाम । यो ह्य विद्याकृतः क तस्य तदकरणे प्रत्यवायो न निवृत्ताधिकारस्य गृहस्थ ब्रह्मचारिणो विशेषधर्म्मानुष्ठाने । एवंतर्हिसर्व्वः स्वा स्थ उत्पन्नैकप्रत्ययः परिब्राडिति चेत् । न ॥ स्वस्वामि दबुद्ध्यनिवृत्तेः । कर्म्मार्थत्वाच्चेतराश्रमाणां । अथकर्म्म

येतिश्रुतेः । तस्माच्च स्वस्वामित्वाभावाद्भिक्षुरेक एव परिव्राट् न गृहस्थादिः । एकत्वप्रत्यय विधिजनितेन प्रत्ययेन विधिनिमित्तभेदप्रत्ययस्योपमर्द्दितत्वाद्यमनियमाद्यनुपपत्तिः परिव्राजकस्येति चेत् । न बुभुक्षादि नैकत्वप्रत्ययात् । प्रच्यावितस्योपपत्ते निर्वृत्त्यर्थत्वात् । नच प्रतिषिद्धसेवाप्राप्तिः । एकत्व प्रत्ययोत्पत्तेः प्रागेव प्रतिषिद्धत्वात् । न हि रात्रौकूपेकण्टके वा पतिते उदितेऽपि सवितरि पतति तस्मिन्नेव तस्मात् सिद्धं निवृत्तकर्म्मा भिक्षुक एव ब्रह्मसंस्थ इति । यत् पुनरुक्तं सर्व्वेषां ज्ञानवर्ज्जितानां पुण्यलोकतेति । सत्यमेतत् । यच्चोक्तंतपः शब्देन परिव्राडप्युक्त इत्येतत् । तदसत् ॥ कस्मात् परिव्राजकस्यैव ब्रह्मसंस्थतासंभवात् । स एव ह्यवशेषित इत्यवोचाम ॥

एकत्व विज्ञानवतोऽग्निहोत्रादिवत्तपो निवृत्तेश्च । भेदबुद्धिमत एव हि तपः कर्त्तव्यता स्यात् । एतेन कर्म्मच्छिद्रे ब्रह्मसंस्थता सामर्थ्यं । अप्रतिषेधश्च प्रत्युक्तः । तथा ज्ञानवानेव निवृत्तकर्म्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तं । यतपुनरुक्तं यववराहादि शब्दवत् परिव्राजके च रूढो ब्रह्मसंस्थशब्द इति ॥ तत् परिहृतमेतत् । तस्यैव ब्रह्मसंस्थता संभवान्नान्यस्येति । यत् पुनरुक्तं रूढशब्दानिमित्तं नोपाददत इति । तत्तद्गृहस्थतक्षपरिव्राजकादि शब्ददर्शनाद् गृहस्थिति पारिव्राज्यतक्षणादि निमित्तोपादानापि गृहस्थपरिव्राजका वाऽऽश्रमविशेषे विशिष्टजातिमति च गृहस्थ इति परिव्राजक इति च तक्षेति रूढाद्दृश्यन्तेशब्दाः । न यत्रयत्रतानि निमित्तानि तत्रतत्रवर्त्तन्ते सिद्ध्यभावात् । तथेहापि ब्रह्मसंस्थशब्दो

निवृत्त सर्व्वं कर्म्म तत् साधनपरिव्राडेकविषये ऽप्याश्रं
णि परमहंसाख्येवृत्त इह भवितुमर्हति । मुख्यामृतत्वफ
वणात् । अतश्चेदमेवैकं वेदोक्तं पारिव्राज्यं । न यज्ञोपं
त्रिदण्ड कमण्डल्वादि परिग्रहवान् मुण्डो ऽपरिग्रहो
इति च । श्रुतिरत्याश्रमिभ्यः परमं पवित्रमित्यादि च
ताश्वतरीये । न स्तुति न नमस्कार इत्यादि स्मृतिभ्यश्च
तस्मात्कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः । तस्मादलिं
धर्म्मज्ञः अव्यक्तालिंग इत्यादि स्मृतिभ्यश्च । यत्तुसांख्यैः
र्म्मत्यागोऽभ्युपगम्यते । क्रियाकारकफलभेदबुद्धेः सत्य
भ्युपगमात् ॥ तन्मृषा ॥ यच्चबौद्धैः शून्यताभ्युपगमात्
र्तृत्वमभ्युपगम्यते । तदप्यसत् ॥ तदभ्युपगन्तुः सत्त्वा
पगमात् । यच्चालसैरलसतया अकर्तृत्वाभ्युपगमः सोऽप्य
कारकबुद्धेरनिवर्त्तितत्वात् प्रमाणेन । तस्माद्वेदान्त प्रमा
जनितैकत्वप्रत्ययवत एतत् कर्म्मनिवृत्तिलक्षणं पारि
ब्रह्मसंस्थत्वञ्चेति सिद्धं ॥ एतेन गृहस्थस्यैकत्वविज्ञाने
परिव्राज्यमर्थं सिद्धं ॥

नन्वग्न्युत् सादनदोषभाक्स्यात् परिव्राजन् । वीरहा
एषदेवानां योऽग्निमुद्वासयत इतिश्रुतेः ॥ न दैवेनैवोत्
दितत्वादुत् सन्नएव हि स एकत्वदर्शनेजाते । अपागादे
रग्नित्वमिति श्रुतेः । अतो न दोषभाग्गृहस्थः परिव्र
न्निति ॥ गृहस्थस्यापि विवेकवतो वैराग्यद्वारायुक्तं पारि
ज्यमिति ब्रह्मसंस्थ वाक्यव्याख्यान समाप्त्यर्थः । इति
न्दोग्योपनिषदुक्तं ॥

(वाजसनेयोपनिषदि)॥ ईशावास्यमिदं सर्व्वं यत्किंच जगत्यांजगत् । तेनत्यक्तेन भुञ्जीथा मा गृधःकस्य स्विद्धनं ॥ १ ॥ (टीका)ईशा इष्टे इतीद् तेनेशा ईशिता पर मेश्वरः परमात्मा सर्व्वस्य इति । एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रय संन्यासएवाधिकारो न कर्म्मसु तेन त्यक्तेन त्यागेनेत्यर्थः । न हि त्यक्तोमृतः पुत्रोभृत्यो वा आत्मसंवन्धितयाऽभावादात्मानं पालयत्यऽत स्त्यागेनेत्यऽयमेवार्थः भुञ्जीथाः पालयेथाः । एवंत्यक्तैषण स्त्वंमागृधः गृधिमाकाङ्क्षां मा कार्षीर्धनविषयां । कस्यस्वित् कस्यचित् परस्वं धनं स्वस्य वा धनं मा काङ्क्षी रित्यर्थः । स्विदित्यनर्थको निपातः ॥ अथवा मा गृधः कस्मात् । कस्यस्विद्धनमित्याक्षेपार्थो न कस्य चिद्धनमस्ति यद्गृध्येत ॥ आत्मैव सर्व्वमितीश्वरभावनया सर्व्वंत्यक्तमत आत्मनएवेदं सर्व्वमात्मैव च सर्व्वमतोमिथ्या विषयांगृधिं मा कार्षीरित्यर्थः ॥ मुण्डकोपनिषदि ॥ वेदान्तविज्ञान सुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्व्वे ॥ ॥ इति कैवल्योपनिषद्यऽप्युक्तं ॥

॥ तदेतदृचाभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः । स्वयं जुह्वत एकर्षिंश्रद्धयन्तः तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णंधीयते ॥

॥ एतदभिप्रायमाह ॥ भाष्ये ॥ तदेतद्विद्या संप्रदान विधानमृचा मन्त्रेणाभ्युक्तमभिप्रकाशितं । क्रियावन्तो यथोक्त कर्म्मानुष्ठानयुक्ताः । श्रोत्रियाब्रह्मनिष्ठा अपरस्मिन्

ब्रह्मण्यभियुक्ताः परब्रह्मबुभुत्सवः स्वयमेकर्षिनामानं जुह्वतेजुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये तेषामेव सं तात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरो प्रसिद्धं । शिरस्यऽग्निधारणलक्षणं । यथाऽथर्व्वणानां व्रतंप्रसिद्धं । यैस्तु यैश्चतच्चीर्णं विधिवद्यथाविधानं तेषां च वदेत ॥ इति ॥ मुण्डकेद्वितीयेखण्डेऽपि ॥ परी लोकान् कर्म्मचित्तान् ब्राह्मणोनिर्व्वेद मायान्नास्त्यकृतः न । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् सामित्पाणिः श्रो ब्रह्मनिष्ठं ॥ इति ॥ तस्मै स विद्वानुपसन्नाय सम्यक्प्र चित्ताय शमान्विताय । येनाक्षरं पुरुषं वेदसत्यंप्रोवाच तत्त्वतोब्रह्मविद्यां ॥ इति ॥ स्मृतेश्च ॥ वैराग्यं परमे मोक्षस्य परमोऽवधिरिति ॥ श्रुतिरपि ॥ प्रव्राजिनो मिच्छन्तः प्रव्रजन्तीति श्रुत्यासंन्यासस्य मोक्षाङ्गत्व मि संन्यासादेव मोक्षो भविष्यति ॥ इति ॥

श्रुतिस्मृति पुराणैः संन्यासग्रहणं प्रसिद्धमेवात्म पुत्राद्येषणात्रय संन्यासेनात्मज्ञान निष्ठतयात्मा रक्षित त्येषवेदार्थः ॥ अथेतरस्यानात्मज्ञतयात्मग्रहणा शक पदिशातिमन्त्रः ॥ कुर्व्वन्नेवेह कर्म्माणीत्येत द्विधीयते भावः ॥ स्मृतौ च ॥ वनवासात् परिश्रान्तः प्रव्रजे र्व्वकं । व्याध्याविष्टो विरक्तो वा ब्रह्मवित् संन्यसेद्गृहि ॥ १ ॥ इति ॥ संन्यसेद्ब्रह्मचर्य्येण संन्यसेद्वागृहादपि द्वासंन्यसेद्विद्वान् आतुरो वाथ दुःखितः ॥ २ ॥ आतु विशेषोऽस्ति न विधिर्नैव च क्रिया । प्रेषमात्र स्तु सं आतुराणां विधीयते ॥ ३ ॥ इति ॥

( मनु ) अधीत वेद जपकृत् पुत्रवान् अन्नादोऽग्निमान् ॥
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तुनान्यथा ॥ इति ॥४॥
दशभिर्जन्मभिर्वेदा वेदार्थाः शत जन्मभिः ॥
सहस्रजन्मभिः सोमः संन्यासः कोटि जन्मभिः ॥ ५ ॥
संन्यासे दशजन्मा च परंहंसो विधीयते ॥
अति वर्णाश्रमीभवेत् गुरूणां गुरुरुच्यते ॥
काषायं पाचयित्वातु श्रेणीस्थानेषु च त्रिषु ॥
प्रव्रजेत्तु परंस्थानं परिव्रज्य मनुत्तमं ॥ ७ ॥

इत्यादि श्रुतिस्मृति पुराणेषु सर्व्ववाक्येषु पर्य्यालोचनया अयमर्थउपगम्यते । अध्ययन् नियोग निवृत्युत्तरकालं यस्य पुरुषस्य यथावस्थायां वैराग्यं जायते । तस्यततएव संन्यासेऽधिकार एव । न तु युगभेदः कालभेदश्च विधिनिषेधौ प्रतीयेते । यदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुतिः प्रसिद्धमेव ॥ ( ननु ब्राह्मणस्य संन्यास ग्रहणेऽधिकारत्वादित्युक्तं ) जावाल श्रुतेः ॥ ब्राह्मणाः प्रव्रजन्तीति ॥ दत्तात्रेयोऽपि ॥ ब्राह्मणः प्रव्रजेद्गृहादिति ॥ यम संवर्त्तबौधायन प्रभृतयो ऽप्युक्ताः ॥ ननु के ब्राह्मणा इत्याशंका ॥ अथ विचार सापेक्षत्वात् ॥ ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणइति ।

॥ ब्राह्मण्यां ब्राह्मणेनैवोत्पन्नो ब्राह्मणः स्मृतः ॥ इति हारीतोक्तेः ॥ आत्रि संहितायां दशविधब्राह्मणलक्षणान्युक्तानीति तदाह

देवोमुनि र्द्विजो राजा वैश्यः शूद्रो निषादकः ॥
पशुम्लेच्छोऽथ चाण्डालो विप्रादशविधास्मृताः ॥ १ ॥

॥ कानिलक्षणानि दशविधानीति ॥ यथात्रिः ॥
सन्ध्या स्नानं जपं होमं देवता नित्यपूजनम् ॥
अतिथिं वैश्वदेवञ्च देवब्राह्मण उच्यते ॥ २ ॥
शाके पत्रे फले मूले वनवासे सदारतः ॥
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥ ३ ॥
वेदान्तं पठते नित्यं सर्व्वसंगं परित्यजेत् ॥
सांख्ययोग विचारस्थः स विप्रो द्विजउच्यते ॥ ४ ॥
अस्त्राहताश्चधन्वानः संग्रामे सर्व्वसन्मुखे ॥
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥ ५ ॥
कृषिकर्म्मरतो नित्यं गवाश्च प्रतिपालकः ॥
वाणिज्य व्यवसायश्च स विप्रो वैश्य उच्यते ॥ ६ ॥
लाक्ष्यालवण संमिश्रं कुसुंभं क्षीर सर्पिषः ॥
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥ ७ ॥
चौरश्चतस्करश्चैव सूचको दंशकस्तथा ॥
मत्स्यमांसे सदालुब्धो विप्रो निषाद उच्यते ॥ ८ ॥
ब्रह्मतत्वं न जानाति ब्रह्मसूत्रेण गर्व्वितः ॥
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥ ९ ॥
वापीकूपतडागानामारामस्य सरः सुच ॥
निःशङ्करोधकश्चैव विप्रः सम्लेच्छ उच्यते ॥ १० ॥
क्रियाहीनश्च मूर्खश्च सर्व्वधर्म्म विवर्जितः ॥
निर्दयः सर्व्वभूतेषु विप्रश्चाण्डाल उच्यते ॥ ११ ॥
॥ इति दशविध ब्राह्मणा उक्ताः ॥
॥ एवं पद्मपुराणेऽपि विप्रस्य लक्षण माह ॥

॥ नारद उवाच ॥ कश्च पूज्यतमो विप्रो ह्यपूज्यो वाथ को भवेत् ॥ विप्रस्य लक्षणं ब्रूहि यथातथ्यं गुरोरपि ॥१॥

॥ ब्रह्मोवाच ॥ पूज्यः श्रोत्रियको नित्यं सदाचारसमन्वितः॥ सद्व्रतः कलुषैर्म्मुक्तस्तीर्थभूतो जनोऽनघ ॥ २ ॥

॥ नारद उवाच ॥ ज्ञातःकः श्रोत्रियस्तात सत्कुले वाप्यसत्-कुले ॥ सदसत्कर्म्मकर्त्ता वा कः पूज्यो भूमिवाड्वः ॥ ३ ॥

॥ ब्रह्मोवाच ॥ सच्छ्रोत्रियकुलेजातः अक्रियो नैव पूजितः ॥ असत् क्षेत्रकुले पूज्यो व्यासवैभाण्डकौ यथा ॥ ४ ॥

क्षत्रियाणां कुलेजातो विश्वामित्रोऽस्ति मत्समः ॥
वेश्यापुत्रो वसिष्ठश्च अन्ये सिद्धाद्विजातयः ॥ ५ ॥
तस्मात् सच्छ्रोत्रियादीनां शृणु पुत्रक लक्षणं ॥
धरायां तीर्थभूतानां सर्व्वपापहरायच ॥ ६ ॥
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ॥
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणमिति ॥ ७ ॥

॥ व्याससंहितायां ॥ ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारव-र्जितः ॥ जातिमात्रोपजीवीच स भवेद् ब्राह्मणः समः ॥८॥
गर्भाधानादिभिर्म्मन्त्रै र्वेदोपनयनेन च ॥
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः ॥ ९ ॥ इति ॥

॥ अत्रिसंहितायां ॥ जन्मना ब्राह्मणो ज्ञेयः संस्कारै र्द्विज उच्यते ॥ विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेवच ॥ १० ॥
वेदशास्त्राण्यधीते यः शास्त्रार्थञ्च निषेवते ॥
तदासौ वेदवित् प्रोक्तो वचनन्तस्य पावनमिति ॥ ११ ॥

॥ अस्य विचारः ॥ ननु पूर्व्वोक्ताऽत्रिवचने दशविधब्रा-

ह्मणस्य लक्षणमुक्तं ॥ तेषां ब्राह्मणानां मध्ये कः संन्या
ग्रहणे अधिकारी स्यात् । इति । तेषां मध्ये त्रिषु देवमुनि
द्विजब्राह्मणलक्षणेषु संन्यासग्रहणे ऽवश्यमेवाऽधिकारोऽस्ति
अन्येषु सप्तसु राजन्यचाण्डालपर्य्यन्तेषु ब्राह्मणलक्षणेषु यानि
ब्राह्मणलक्षणानि उक्तानि तेषां संन्यासग्रहणमयुक्तमेव
यतः पातित्यदर्शनात् स्वधर्म्मपरित्यागाद्विरूद्धत्वात् ॥ पतितस्य
तस्य संन्यासग्रहणे निषेधं दर्शयति ॥ नारद परिव्राजको
पनिषदि ॥

पतितस्य परद्वारि वैखानसहरद्विजाविति ॥ १ ॥
॥ संन्यासोपनिषदि च ॥ आरूढ पतितापत्यं ॥ २ ॥
संप्रत्यवसिनाश्च महापातकिनां तथा ॥ इति ॥ ३ ॥
जानीयादन्त्यजं विप्रं नैव संन्यास मर्हति ॥ इति ॥ ४ ॥
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ॥ इति ॥ ५ ॥

( स्मृतिश्च ) ( स्वधर्म्म च्युतत्वात् पातित्यं दर्शयति
॥ यः स्वधर्म्मपरित्यागी पाषण्डी त्युच्यते बुधैः ॥ इति ॥
असिजीवी मसिजीवी देवलो ग्राम्ययाजकः ॥
धावकः पाचकश्चैव षडेते पतिता द्विजाः ॥ ७ ॥
बालकश्चापि पातकी ॥ इति श्रुतेः ॥ ८

( शंखसंहितायां ) विप्राः शूद्रसमा स्तावद्विज्ञेया
विचक्षणैः ॥ यावद्वेदे न जायन्ते द्विजाज्ञेयास्तु तत् परम् ।

( इत्यादिवचनैः प्रमाणैः पतितब्राह्मणस्य संन्यासग्रहणं
निषिद्धं प्रतीयते ॥ ( एवं पद्मपुराणे ऽपि )

( श्रोत्रियस्य संन्यासग्रहणं प्रसिद्धमस्ति यद्यक्रियः स्यात् तदा संन्यासग्रहणेऽनर्हस्तद्दर्शयति ॥ )

त्रिधया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षण मिति ॥१०॥

जन्मना जायते विप्रः । इत्यादि पूर्व्वेणोक्तं ॥

सच्छ्रोत्रिये कुलेजातः अक्रियो नैव पूजितः । इति

( मनुः ) ॥ पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥ ११ ॥

( पराशरसंहितायां ) सेतुबन्धपथे भिक्षां चातुर्व्वर्ण्यात् समाचरेत् । वर्ज्जयित्वा विकर्म्मस्थां श्छत्रोपानद्विवर्ज्जितः १२

( भगवद्गीतायां ) स्वभावनियतंकर्म्म कुर्व्वन्नाप्नोति किल्बिषम् ॥ १३ ॥

( ३ अध्याये ) ततःस्वधर्म्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ।

( २ अध्याये ) श्रेयान्न स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् । स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥ १४ ॥

अधर्म्मं धर्म्ममिति या मन्यते तमसा वृता ॥

सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ इति ॥

## ( याज्ञवल्क्य संहितायां पातित्यं दर्शयति )

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥

अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ १ ॥

मातृपितृगुरुत्यागी कुण्डाशी वृषलात्मजः ॥

परपूर्व्वापतिः स्तेनः कर्म्मदुष्टाश्च निन्दिताः ॥ २ ॥

भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥

मित्रध्रुक् पिशुनः सोमविक्रयी च विनिन्दकः ॥ ३ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियारतं ॥
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ४ ॥

(इत्यादि वचनेन पतितस्य अक्रियस्य च संन्यासप्र
ऽनर्हत्वात् ॥ इति पूर्व्वमुक्तं ॥ पतितसंबन्धे वहूतरं प्र
मस्ति किंतु ग्रन्थबाहुल्यभयान्नोक्तमिति ॥)

(ननु पूर्व्वोक्त व्यासवचने निर्द्दिष्टं ब्रह्मबीज समुत्
ब्राह्मग इति ॥ अत्रि संहितायामपि)
॥ जन्मना ब्राह्मणोज्ञेयः ॥ इति ॥ पद्मपुराणे ऽपि जन्म
जायते विप्रः ॥ अन्ये ऽपि ॥ जन्मनाजायते विप्रः ॥ कर्
जन्मनाजायते शूद्रः संस्काराद् द्विज उच्यते । वेदपा
भवेद्विप्रः ब्रह्मजानाति ब्राह्मणः ॥ इत्यादि वचनेन पर
विरोधः प्रतीयते अतएव एतद्विषये विचारसापेक्षत्व म
यद्यपि जन्मनाजायते शूद्र इति पाठः प्रसिद्धः स्यात्
भागवते यदुक्तं प्रसिद्धमेव तत्प्रमाणविरोधः स्यात् । भा
यदुक्तं तदाह ॥ परीक्षितराजानं प्रति समिक ऋषिपुत्र
गोगर्भजातो बालको ऽपि यत् शापं दत्तवान् तद् ब्रह्मश
परिक्षितो राजाहतः (बालकः शृङ्गी तत् प्रमाणमाह)
ऋषेस्तस्यतु पुत्रोऽभूद्गवि जातो महायशाः । शृङ्गीनाम
तेजा स्तिग्मवीर्य्योऽतिकोपनः ॥
किंपुनर्बाल एवत्वं तपसा भावितः सदा ॥
पुत्रस्त्वं बालतां चैव तत्रावेक्ष्य च साहसं ॥ १ ॥
कस्मादिदं त्वया बाल्यात् सहसा दुष्कृतं कृतं ॥

नह्यर्हति नृपः शापमस्मत्तः पुत्र सर्व्वथा ॥ २ ॥ इति ॥

(तथाच जन्मना जायते शूद्र इति पाठे कथं गोगर्भजातेन तेन ब्रह्मशापः संभवति स्पष्टश्च ब्रह्मशापः प्रतीयते । अतएव व्यासादिवचनेन यदुक्तं प्रसिद्धमेव तु तत् ॥ एवं महाभारतेऽपि गरुडं प्रति विनता वाक्यं ॥ किरातभक्षणे किरातानां मध्ये एको ब्राह्मणोऽस्ति । हे पुत्र तन्न भक्षय इत्यसंस्कारस्यापि ब्राह्मणत्वं प्रतीयते । एवं युधिष्टिरं प्रति ॥ अविद्यो वा सविद्योवा ब्राह्मणो मामकी तनुरिति भगवद्वचनेन ब्रह्मबीजो ब्राह्मण इति प्रसिद्धं न तु शूद्रइति ॥ ब्राह्मणानां मध्ये यद्यपि पतितः स्यात् तर्हि संन्यासग्रहणम योग्यमेव । पूर्व्वोक्त निषिद्ध वचनादिति ( अथवा ) जन्मनाजायेत शूद्रः संस्काराद्द्विज उच्यते इति पाठे पूर्व्वोक्त व्यासात्रिहारीतादिप्रभृतीनां वचनै र्विरोधः स्यात् एवं पुराणेऽपि विरूद्धं प्रतीयते ॥ जन्मनाजायते विप्र इति पाठो युक्तः ॥ किंतु जन्मनाजायते शूद्र इति वचने जातित्वं निर्द्दिष्टं नास्ति । किमत्र ब्राह्मणस्य शूद्रत्वं । किंवा क्षत्रियस्य । किंवा वैश्यस्य । किं शूद्रस्य वा जायते इति निर्द्दिष्टं नास्ति ॥

सामान्याकारेणोक्तं प्रतीयते ॥ अतएव विचार सापेक्षत्वं । कोनाम ब्राह्मणः । उत्तरमाह ॥ ब्राह्मणस्य कन्यायां ब्राह्मणेन विवाहितायां भार्य्यायां जातः पुत्रः स एव ब्राह्मणः । इति ॥

तत् प्रमाणं हारीतसंहितायां । ब्राह्मण्या ब्राह्मणेनैव मुत्पन्नो ब्राह्मणः स्मृतः । एवं व्यासादि बचनेऽप्युक्तं ॥ विष्णु-

संहितायां यदुक्तंनदाह ॥ अथ ब्राह्मणस्य वर्णानुक्रमेण च स्त्रोभार्य्या भवन्ति । तिस्रः क्षत्रियस्य । द्वे वैश्यस्य । एका शूद्रस्येति ॥ तासां सवर्णावेदने पाणिर्ग्राह्यः असवर्णावेदने शरः क्षत्रियकन्यया । प्रतोदो वैश्यकन्यया । वसनदशान्तः शूद्रकन्यया ग्राह्यः ॥ इति ॥

न सगोत्रां न समानार्षप्रवरां भार्य्यां विन्देत पृथक् पृथक् रूपेण विवाहादिकार्य्यमुक्तं । पुनरपि विष्णुः । अनुलोमे एवं प्रतिलोमे विशेषोऽस्ति । प्रतिलोमास्त्रियां यत् पुत्रः उत्पन्नं तदार्य्येण निन्दनीयमिति ॥ सवर्णाभार्य्यायां यः पुत्र उत्पन्नो ब्राह्मणवीजस्य तस्य ब्राह्मणत्वं एवं क्षत्रियस्य क्षत्रियत्वं वैश्यस्य वैश्यत्वं एवं शूद्रवीजस्य शूद्रत्वमिति शास्त्र निर्देशात् (सिद्धान्तमाह) यद्यपि जन्मना जायते शूद्र इति

निर्द्दिष्टस्यात् पूर्व्वोक्त ऋषिवचने यन्निर्द्दिष्टमस्ति तद्व्यर्थं स्यात् एव ( अपितु ) शूद्रकन्यायां ब्राह्मणविवाहितायां जातो यः पुत्रः सोऽपि शूद्रत्वेन निर्द्दिष्टः शास्त्रे । पुत्रस्य ब्रह्मसंस्काराभावात् ॥ इति ॥

यद्यपि संस्काराद्द्विज उच्यते इत्युक्तं तदपि शूद्र पुत्रस्य संस्कारेण द्विजत्वं संभवतीति चेत्तन्न ॥ सवर्ण भार्य्यायां यद्यद् वीजेनोत्पन्नं तत्तत् जातित्वमुक्तं किंतु यदि च संस्कारेण द्विजत्वं स्यात् तर्हि सर्व्वेषामन्त्यजादीना मपि संस्कारेण द्विजशब्दवाच्यत्वं ऽस्यादिति तत्र हि ब्राह्मणक्षत्रियविशां शूद्राणाञ्च सर्व्वेषां एकजातीयत्वं भवति । इतिमहान् दोषो वर्त्तते । श्रुतिस्मृतीतिहासपुरा

पृथक् पृथक् रूपेण वर्णाश्रमधर्म्मश्च यन्निर्दिष्टोऽस्ति सोऽपि व्यर्थः स्यात् ( तत् प्रमाणं श्रुतिराह )

ब्राह्मणोऽस्य मुखमासीद् वाहूराजन्यः कृतः ।
ऊरूतदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत इति

( भगवद्गीतायां ) चातुर्व्वर्ण्यं मयासृष्टं गुणकर्म्म-विभागशः । इति हारीत संहितायां ॥ २ ॥

यज्ञसिद्ध्यर्थं मघवान् ब्राह्मणान् मुखतोऽसृजत् ।
असृजत् क्षत्रियान् वाह्वो वैश्यानप्युरुदेशतः ॥ ३ ॥
शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्व्वशः ।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः ॥ ४ ॥

( मनुः ) लोकानां च विवृद्ध्यर्थं मुखवाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्त्तयत् । इत्यादि ॥ ५ ॥

श्रुतिस्मृतिपुराणेषु वहूतरं प्रमाणमस्ति पृथक् पृथक् रूपेण जाति धर्म्म कर्म्मणां च विधानात् जातिभेदो निर्दिष्ट एव भवति इतरथा वर्णसंकरत्वं जायते । संकरस्य दोषमाह ॥ भगवद्गीतायां ॥ अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ६ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ७ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः ॥ ८ ॥
उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ।
नरके नियतं वासोभवतीत्यनु शुश्रुम ॥ ९ ॥

इत्यादि वचनेन जात्यन्तर दोषदृष्टेण स्वजाती सवर्णाभार्य्यायां जातपुत्रस्य तज्जातित्वं सिद्धं। एवंपूर्वो व्यासादि वचने ब्रह्मबीजस्य ब्राह्मणत्वं सिद्ध मिति॥

(पुनरपि) यद्यपि संस्कारात् द्विजो भवति तथापि द्रस्य ब्रह्मसंस्काराभावात् । एकाश्रमैकसंस्कारविधा एवंकर्म्म द्विजातिशुश्रुषा स्वधर्म्म एव निर्द्दिष्टं ॥

॥ तत् प्रमाणमाह मनुसंहितायां ॥

एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ १ ॥

( विष्णुसंहितायां ) द्विजस्यभार्य्या शूद्रा तु धर्म्मा भवेत् क्वचित् । रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्ति
हीनजाति स्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु स सन्तानानि शूद्रतां ॥ ३ ॥
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ४ ॥

( कात्यायनसंहितायां ) नात्रशूद्रीं प्रयुञ्जीत न ब्राह्म कारिणीं । न चैवा व्रतस्थानान्यपुंसा च सहसंगतां ॥ ५

( पराशर संहितायां ) शूद्रकन्यासमुत्पन्नो ब्राह्म तु संस्कृतः । संस्कृतस्तुभवेद्दासो ह्यसंस्कारै स्तु नापितः ।

(व्यास संहितायां) विप्रवद्विप्राविन्नासु क्षत्रविन्नासु वत् । जातकर्म्माणि कुर्व्वीत ततः शूद्रासु शूद्रवत् ॥
अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः ।

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ॥ ८ ॥
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ।

( चातुर्व्वर्णोत्पत्तिं वसिष्ठ संहितायामाह )

प्रकृति विशिष्टं चातुर्व्वर्ण्यं संस्कार विशेषाच्च ॥ ९ ॥
ब्राह्मणो ऽस्यमुखमासीद्बाहू राजन्यः कृतः ॥
ऊरूतदस्य यद्वैश्यः पद्भ्यां शूद्रो ऽजायतेति ॥ १० ॥

गायत्र्या छन्दसा ब्राह्मणमसृजत् ॥ त्रिष्टुभाराजन्यं । जगत्या वैश्यं ॥ न केनाचिच्छन्दसा शूद्रमित्यसंस्कार्य्यो विज्ञायते ॥ जन्मनाजायते शूद्र इति पाठे विप्रस्य पुत्रः । असंस्कारात् शूद्रवदुक्तं वसिष्ठसंहितायामुपसंहरति ॥ )

न त्वस्य विद्यते कर्म्म किञ्चिदामौञ्जिवन्धनात् । वृत्त्या शूद्रसमो ज्ञेयो यावद्वेदे न जायते ॥ इति शूद्रस्य विधिनिषिद्धं समाप्तं ॥

एवं च पूर्व्वोक्तवचनैः ब्राह्मणस्य चतुर्थाश्रम स्वीकारस्य श्रुतिस्मृतिपुराणेषु प्रसिद्धत्वात् ॥ क्षत्रियवैश्ययोः तुर्य्याश्रमं लिंगधारणं च नास्तीतितत् प्रमाणमाह ॥ (दत्तात्रेयः)
गतिस्तुर्य्याश्रमे नास्ति बाहुजोरुजयोः क्वचित् ॥
तुर्य्याश्रमो गतिः प्रोक्ता मुखजानां स्वयंभुवा ॥ १ ॥
(वृद्धयाज्ञवल्क्योऽपि) चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुति-चोदिताः ॥ क्षत्रियस्य त्रयःप्रोक्ता द्वावेको वैश्य शूद्रयोः ॥२॥
(ब्रह्मपुराणेऽपि) चत्वारआश्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः ॥
गार्हस्थ्यं ब्रह्मचर्य्यं च वानप्रस्थं त्रयोमताः ॥ ३ ॥
क्षत्रियस्यापि कथिता आश्रमास्त्रय एवहि ॥

ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमद्वितयं विशः ॥ ४ ॥
गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणमाचरेदिति ॥

(वामनपुराणे पञ्चदशाऽध्याये)

गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयाश्रमः ॥
क्षत्रियस्यापि गदितो य आचारो द्विजस्य हि ॥ ५ ॥
दशांगो राक्षसश्रेष्ठ धर्म्मोऽसौ सार्व्ववर्णिकः ॥
ब्राह्मणस्यापि विहिता चतुराश्रम कल्पना ॥ ६ ॥

(क्षत्रिय वैश्ययो लिंगधारणे निषिद्धवचनमाह)

(शाट्यायनीयोपनिषदि ॥)

विष्णुलिंगं द्विधा प्रोक्तं व्यक्तमव्यक्तमेवच ॥
तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥ ७ ॥
त्रिदण्डं वैष्णवं लिंगं विप्राणां मुक्तिसाधनं ॥
निर्व्वाणं सर्व्वधर्म्माणामिति वेदानुशासनं ॥ ८ ॥
॥ विष्णु पुराणे ॥ मुखजानामयं धर्म्मो वैष्णवं लिंगधार
वाहुजातोरुजातानां नायं धर्म्मो विधीयते ॥ ९ ॥
॥ दत्तात्रेयः ॥ मुखजानामयं धर्म्मो यद्विष्णो लिंगधार
राजन्य वैश्ययो नेति दत्तात्रेय मुनेर्व्वचः ॥ १० ॥
आत्मपुराणेऽपि ॥ नाना योगाश्रमे तुर्ये लिंगधारण मि
वैष्णवं धारये ल्लिंगं विप्र एव न चापरः ॥ ११ ॥
॥ शान्ति पर्वणि ॥ ब्राह्मणस्य तु चत्वार स्त्वाश्रमा वि
प्रभो । वर्णास्तान्नानुवर्त्तन्ते त्रयो भरतसत्तम ॥ १२ ॥
त्यं धर्म्मं क्षत्रियो ब्रह्मचारी चरेद्देको ह्याश्रमं धर्म्मका

चातुराश्रम्यधर्म्माश्च वेदधर्म्माश्च पार्थिव ॥ १३ ॥
ब्राह्मणेनानुगन्तव्या नान्यो विद्यात् कदाचन ॥
त्यागं श्रेष्ठं मुनयो वै वदन्ति सर्व्वश्रेष्ठं यच्छरीरं त्यजेत ॥
नित्यं युक्ता राजधर्म्मेषु सर्व्वे प्रत्यक्षन्ते भूमिपाला यथैव १४

॥ शान्तिपर्व्वणि युधिष्ठिरवाक्यं ॥

तपसा महदाप्नोति वुद्ध्या वै विन्दते महत् ॥ १५ ॥
त्यागेन सुखमाप्नोति सदा कौन्तेय तत्त्ववित् ॥
भ्रातुरस्य हितं वाक्यं शृणु धर्म्मज्ञ सत्तम ॥
दण्ड एवहि राजेन्द्र क्षत्रधर्म्मो न मुण्डनं ॥ १६ ॥
चरितब्रह्मचर्य्यस्य ब्राह्मणस्य विशांपते ॥
भैक्षचर्य्यास्त्वधिकारः प्रशस्त इह मोक्षिणः ॥ १७ ॥
क्षत्रियस्यापि यो धर्म्म स्तन्ते वक्ष्यामि भारत ॥
दद्याद्राजन् न याचेत यजेत न च याजयेत् ॥ १८ ॥
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ॥
क्षत्रियो नास्य तत् कर्म्म प्रशंसन्ति पुराविदः ॥ १९ ॥
॥ क्षत्रियस्य भिक्षाटनं निषिद्धमाह । शान्तिपर्व्वणि भीष्मवाक्यं ॥ चातुराश्रम्य धर्म्माश्च यतिधर्म्माश्च पाण्डव ॥ लोकवेदोत्तरा श्चैव क्षात्रधर्म्मे समाहिताः ॥ २० ॥ चातुर्व्वर्ण्यं चातुराश्रम्यधर्म्माः सर्व्वे न स्यु र्ब्राह्मणानां विनाशात् ॥ भूसंस्कारं राजसंस्कारयोगमभैक्ष्यचर्य्यं पालनं च प्रजानां ॥ २१ ॥ चातुर्व्वर्ण्यस्थापनात्पालनाच्च तै स्तै र्योगै र्नियमै रौरसैश्च ॥ सर्व्वोद्युयोगैराश्रमं धर्म्म माहुः क्षत्रं श्रेष्ठं सर्व्वधर्म्मोपपन्नं ॥ २२ ॥ स्वंस्वं धर्म्म

ये न चरन्ति वर्णा स्तां स्तान् धर्म्मानन्यथार्थान् वदन्ति अन्यथा वर्त्तमानस्य नासौ वृत्तिः प्रकल्प्यते । कर्म्मणा द्वैते धर्म्मो यथा धर्म्मस्तथैवसः ॥ २३ ॥ मातापित्रो शुश्रूषा कर्त्तव्या सर्व्वदस्युभिः ॥ आचार्य्यगुरुशुश्रूषा थैवाश्रमवासिनां ॥ २४ ॥ यदा न भावं कुरुते सर्व्वभूते पापकं ॥ कर्म्मणा मनसा वाचा ब्रह्म संपद्यते तदा इति

॥ देवी भागवते हरिश्चन्द्रराजवाक्यमाह ॥

नाहं प्रतिग्रहं काङ्क्षे क्षत्रियोऽहं सुमध्यमे ॥
याचनं खलु विप्राणां क्षात्रियाणां न विद्यते ॥ २६ ॥
गुरुर्हि विप्रो वर्णानां पूजनीयोऽस्ति सर्व्वदा ॥
तस्मादगुरुर्न याच्यः स्यात् क्षत्रियाणां विशेषतः ॥ २७ ॥
यजनाध्ययनं दानं क्षत्रियस्य विधीयते ॥
शरणागतानामभयं प्रजानां प्रतिपालनम् ॥ २८ ॥
न चाप्येवं तु कर्त्तव्यं देहीति कृपणं वचः ॥

(इति क्षत्रियवैश्ययो र्भिक्षाटनं लिंगादिधारणंच निषि मुक्तं ॥) [अथेदानीं रघुनन्दन भट्टाचार्य्येण मलमासतत्त्वे पराशरभाष्यं यदुक्तं तदाह ]

(ब्रह्मपुराणे) चत्वारआश्रमाश्चैव ब्राह्मणस्य प्रकीर्तिताः
गार्हस्थ्यं ब्रह्मचर्य्यंश्च वानप्रस्थं त्रयोमताः ॥ १ ॥
क्षत्रियस्यापि कथिता आश्रमा स्त्रयएवहि ॥
ब्रह्मचर्य्यंश्च गार्हस्थ्य माश्रमद्वितयं विशः ॥ २ ॥
गार्हस्थ्य मुचित स्त्वेकं शूद्रस्य क्षणमाचरेत् ॥
क्षणमुत् सवरूपं । यत्तुप्रव्रज्यावसिता यत्र त्रयोवर्णाद्विजातयः

निर्व्वासं कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः ॥ ३ (इति का-त्यायनेनोक्तं तद्युगभेदादविरुद्धं । प्रव्रज्यावसिताः प्रव्रज्याच्च्युताः ॥ अतएव अश्वमेधं गवालंभं संन्यासंपलपैतृकं । देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत् ॥ ४ ॥

(इति कलौ संन्यास निषेधकं क्षत्रियवैश्यविषयमिति ॥ कलौ विप्रस्यैवाधिकारः। ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतिः एवञ्च आत्मन्यग्नीन् समाधाय ब्राह्मणः प्रव्रजेद्गृहात् । मनूक्तेश्चेति विज्ञानेश्वरादयः । वृद्धयाज्ञवल्क्योपि ॥ ) चत्वारोब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥ ५ ॥ इति । माधवस्तु मनु वचनस्य ब्राह्मणः क्षत्रियो वाथ वैश्योऽपि प्रव्रजेद्गृहात् । इति विश्वरूपलिखितस्य च युगभेदादविरोधः संभवति ।

शूलपाणे याज्ञवल्क्य टीकायां शेषवचनानामनाकरत्वाभिधानं हेयं ॥ तत् कृत प्रायश्चित्तविवेकधृतपूर्व्वोक्त कात्यायनवचनाविरोधः स्यात् । मिताक्षरायान्तु ब्राह्मणाः प्रव्रजन्तीति श्रुतेः । अग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्येतु त्रैवर्णिकानां प्रकृतत्वात् । त्रयाणां वर्णानां वेदानधीत्यचत्वार आश्रमा इति सूत्रकारवचनात् । द्विजातिमात्रस्यावृत्तिरितिलिखितं । कौर्म्माद्युक्तेः । वर्णत्रयस्याप्यधिकारः ॥ पूर्व्ववाक्यन्तु काषायवस्त्र दण्डादिनिषेधार्थं ब्राह्मणपरं वेति ॥

॥ इति रघुनन्दन भट्टाचार्य्येण यदुक्तं तत् समाप्तं ॥

अथ निर्णयसिन्धौ संन्यासविधौ यदुक्तं तदाह ।

(याज्ञवल्क्यः) वनाद्गृहाद्वा कृत्वेष्टिं सार्व्ववेद सदक्षिणां ॥
प्राजापत्यां तदन्तेतानग्नीनारोप्य चात्मनि ॥ १ ॥
अधीतवेदो जयकृत् पुत्रवानन्नादो ऽग्निमान् ॥
शक्त्याच यज्ञकृत् मोक्षेमनः कुर्य्यात्तु नान्यथा ॥ २ ॥

(एतदाश्रम समुच्चयपक्षे) जावालश्रुतौ त्वन्ये ऽपि पक्षा उक्ताः ॥ यदि चेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वनाद्वा अथ पुनरव्रती वा स्नातको वा ऽस्नातको वोत् सन्नाग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदिति ॥ अंगिराः ॥
प्रव्रजेद्ब्रह्मचर्य्याद्वा प्रव्रजेद्वा गृहादपि ॥
वनाद्वा प्रव्रजे द्विद्वानातुरो वाथ दुःखितः ॥ ३ ॥
आतुरो मुमूर्षुः दुःखितश्चौरव्याघ्रादिभीतः ॥
(महाभारते) आतुराणाञ्च संन्यासे न विधिर्नैव च क्रिया ।
प्रेषमात्रं समुच्चार्य्य संन्यासं तत्र पूरयेत् ॥ ४ ॥

(जावाल श्रुतिरपि) यद्यातुरः स्यात् मनसा वाचा संन्यसेदिति ॥ अत्र विप्रस्यैवाधिकारः ॥ ब्राह्मणाः प्रव्रजन्तीति जावाल श्रुतेः । आत्मन्यग्नीन् समारोप्य इति पूर्व्वमुक्त मनूक्तेश्चेति विज्ञानेश्वरादयः । वृद्धयाज्ञवल्क्योऽपि चतुर्थः ब्राह्मणस्योक्ता इत्युक्तवान् । (माधवस्तु) ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहादिति कौर्म्माद्युक्ते वर्णत्रयस्याधिकारः । पूर्व्वं वाक्यन्तु काषायवस्त्र दण्डादिनिषेधार्थं ॥
कृत्वाकन्थां बहिर्वासो धारयेद्धातु रञ्जितं ॥
काषायं ब्राह्मणस्योक्तं धातुरक्तन्तु योगिनां ॥ १ ॥
इति मुखजानामयंधर्म्म इति पूर्व्वोक्तेः ॥

तत्त्वन्तु कुटीचकादि परमेतदिति । योऽपि संन्यासं पलपैतृक मिति कलौनिषेधः सोऽपि दण्डादि पर इत्युक्तं प्राक् ।

( निर्णयसिन्धौ यदुक्तं तत्समाप्तम् )

( आत्मपुराणेऽपि यदुक्तं तदाह )

क्षत्रियो वा पि वैश्यो वा संन्यसेत्तु यदातदा ॥
अनावृत्तिं व्रजेदेष दण्डादि परिवर्जितः ॥ १ ॥
कौपीनादीन्न गृह्णीयाद ध्वर्य्यु प्रार्थनां विना ॥
संन्यासे तत एवस्याद नावृत्ति र्द्वयोरपि ॥ २ ॥
क्षत्रियो वापि वैश्यो वा संन्यासी ऋषभादिवत् ॥
वीरमार्गेण देहं स्वं त्यजेदेवाऽविचारयन् ॥ ३ ॥

इति ॥ अस्यार्थमाह ॥ ( जावालादौ वीराध्वना देहत्यागो य उक्तः स क्षत्रियादि संन्यासाभिप्रायेणैव । इति दर्शयति ॥ यदि क्षत्रियो वैश्यो वा यदा संन्यास लिंगवर्ज्जितः सन्ननावृत्तिं पुनरावृत्तिहीनमध्वानं गच्छेदित्यर्थः ॥ यद्यपि तुर्य्ये पारिव्राज्य-रूपे योगप्रधाने आश्रमे नानाविधलिंगानां धारणमिष्टं प्रच्छन्न-त्वाय तथापि वैष्णवस्य लिंगस्य धारणेविप्र एवाधिकारी-त्यर्थः । (तदुक्तं) मुखजानामयं धर्म्म इत्यादि । यति लिंगं दण्ड कौपीनादि पार्थिव लिंगं छत्रचामरादि उक्तम् तयोरना-वृत्ति पथगतौ हेतुमाह । ततोद्वयोः क्षत्रिय वैश्ययो रनावृत्तिः फलिते त्यर्थः । तथा च क्षत्रियादिः संन्यास ऋषभदेवादि वद्वीरमार्गेणशीघ्रं देहंत्यजेदित्याह ॥ क्षत्रियादि पदेन पाण्ड-वादिग्रहः ॥ वीरमार्गंलक्षयति । अभीत इति शब्दः सिंहनादादि दंष्ट्रिणो व्याघ्रादय स्तेभ्यो भयरहितस्य शरीरप-

तनपर्य्यंतं यद्गमनमेतद्वीरमार्गपदेनोक्तमित्यर्थः ॥ ( एते मभिप्रायमाह ) पूर्व्वोक्त श्रुतिस्मृतिमते क्षत्रियवैश्ययोः तुर्य्याश्रमेगतिर्नास्ती त्युक्तं ॥ पौराणिकमतेऽपि विधिनिषेधे प्रतीयेते परन्तु स्मार्त्तभट्टमते अश्वमेधंगवालम्भमित्यादि वचनेन कलौ क्षत्रियवैश्ययो र्निषेध उक्तएव ॥ किन्तु नि- र्णयसिन्धु मते क्षत्रियवैश्ययोः संन्यासग्रहणमस्ति त- कुटीचकपरं ॥ नतु बहूदक हंसपरमहंस परं ॥ पुत्रादिना कुटींकारयित्वा तत्रगृहे वा वसन् वन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेदिति ॥ संन्यासोपनिषदि कुटीचकलक्षणमाह। शिखा यज्ञोपवीति दण्डकमण्डलुधरः कौपीन शाटी कन्था धरः पितृमातृ गुर्व्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्र साधनपर एकत्रान्नादपरः श्वेतोर्ध्वपुण्ड्रधारीत्रिदण्डः ॥ इति कुटीचक लक्षणमुक्तं ब्राह्मणस्य पक्षे न तु क्षत्रियवैश्ययोः पक्षे यतो लिंगधारण निषेधात् एतत् पूर्व्वोक्त मिति।

## ( स्कंदपुराणे )

कुटीचकश्च संन्यस्य स संयततिनित्यशः ॥
भिक्षामादाय भुञ्जीत स्ववंधूनां गृहेऽथवा ॥ १ ॥

शिखायज्ञोपवीती स्यात् त्रिदण्डी सकमण्डलुः ॥ इति एव मात्मपुराण मते क्षत्रिय वैश्ययोः तुर्य्या श्रमग्रहणं ध्यानपरं । ऋषभादिवत् इति पूर्व्वोक्तम् ॥ महानिर्व्वाणतन्त्रे अवधूताश्रमधारणं लिंग दण्डादि धारणं पृथक् पृथक् निर्दिष्टं इति पूर्व्वमुक्तम् ॥

## ॥ लिंगधारणे दोषमाह । मनुसंहितायां ॥

अलिंगी लिंगिवेषेण यो वृत्तिमुपजीवति ॥
स लिंगिनां हरत्येन स्तिर्यग् योनौ घजायते ॥ २ ॥

## ( विष्णु संहितायां त्रिनवतितमाऽध्याये )

अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति
सालिङ्गिनां हरत्येन स्तिर्य्यग् योनौ प्रजायते
इति लिङ्गादिधारणं निषिद्धमुक्तम् ननु पूर्वोक्तवृद्धयाज्ञवल्क्य मते क्षत्रियस्याश्रमास्त्रयः ब्रह्मचारी गृहस्थः वानप्रस्थइति कथिता वैश्यस्याश्रमद्वितयम् ब्रह्मचर्य्यगार्हस्थं च शूद्रस्यैको गार्हस्थाश्रमइति एवं ब्रह्मपुराणेपि क्षत्रियस्यत्रयो वैश्यस्यद्वौ शूद्रस्यैकआश्रमइति महाभारतेपि शान्तिपर्वण्यपि त्रयो-द्वावेकआश्रमइति दत्तात्रेयोपि गतिस्तुर्य्याश्रमेनाऽस्तिबाहुजो रुजयोः क्वचिदिति ।

क्षत्रियवैश्ययोर्लिंगधारणेपिनिषेधउक्तः तदाह विष्णुपुराणे मुखजानामयंधर्म्मइति दत्तात्रेयेपि मुखजानामयंधर्म्म इति शाट्यायनीयोपनिषदि त्रिदण्डंवैष्णवं लिंगं विप्राणां मुक्ति साधनमिति आत्मपुराणेपि नानायोगाश्रमेतुर्य्ये लिंग-धारणमिष्यते इति त्रिदण्डग्रहणादेवप्रेतत्वंनैवजायते इत्यादि प्रमाणेषु पूर्वोक्त लिखितवचनेषु क्षत्रियवैश्ययोश्चतुर्षुयुगे-ष्वपि युगान्तरेच एवंयुगभेदेष्वपि परिव्राजकधर्मो नास्ति इति पूर्वोक्तवचनेश्रुतिस्मृतीतिहासपुराणेपि निषिद्धंप्रतीयते कुत्र-क्षत्रियवैश्ययोः संन्यासग्रहणमस्ति इतितदाह माधवेन तु व-

र्णत्रयस्याप्यधिकारउक्तो ब्राह्मणःक्षत्रियोवाथवैश्योवाप्रव्रजे
गृहात् इतिवचनेन क्षत्रियवैश्ययोः संन्यासग्रहणविधानात्
ति एतद्वचनस्यसार्थकताकुत्र स्यात् यतः पूर्वोक्तनिषेधकवच
गातिस्तुर्य्याश्रमेनास्तीत्युक्तत्वात् सत्यम् यद्यपितीव्रवैराग्
स्यात्तदाद्यकुटीचकसंन्यासग्रहणपरत्वमेव नतुबहूदकहं
संन्यासपरत्वम् यतः पूर्वोक्तवचनेलिंगधारणादेर्निषिद्धत्व
यद्यप्याद्यकुटीचकस्य संन्यासेऽधिकारोऽस्ति तथापि अ
मेधं गवालम्भमित्यादिवचनेन कलौसंन्यासग्रहणंनिषिद्धं
तीयते एतद्विषये स्मार्त्तभट्टाचार्य्योपिक्षत्रियवैश्ययोः
निषेधमुक्तवान् एवं निर्णयसिन्धुकारोपि काषायवस्त्रदण्ड
लिंगधारणं निषिद्धमित्युक्तवान् परन्तु आत्मपुराणेपि वी
मार्गगमनं यत्क्षत्रियवैश्ययोः पक्षेसंन्यासग्रहणमुक्तम् तत्
क्षत्रियोवापि वैश्योवा संन्यासीऋषभादिवत् वीरमार्गेणदेहं
त्यजेदेवाविचारयन् इतिवचनेन क्षत्रियवैश्ययोर्वीरमार्ग
संन्यासलक्षणंप्रसिद्धमेव इतिवीरमार्गश्चपूर्वमुक्तः स्मृत्यन्तर
जड़भरताद्युपाख्यानाच्चक्षत्रादेर्विरक्तस्यसंन्यासोभवत्येव
न्तु दण्डादिलिंगंनास्ति प्रागुक्तवचने तस्यैव निषेधा
पुनरपिक्षत्रियवैश्ययोर्वीरमार्गेगमनंयदुक्तं तदपि निषिद्धं
यति। वृहन्नारदीयपुराणे समुद्रयात्रास्वीकारो महाप्रस्था
गमनपर्य्यन्तामिमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः इ
द्युक्तेः कलौ वीरमार्गादिगमनंप्रतिषिद्धं प्रतीयतइति
द्व्यम्। यस्मात्तुर्य्याश्रमेगतिर्नास्तीतिनिषेधवचनात् एवं
यस्य त्रयः प्रोक्ताद्वावेकोवैश्यशूद्रयोरितिवचनाच्च श्रुति

तिहासपुराणेषु क्षत्रियवैश्ययोः संन्यासग्रहणे कलौनिषेधः प्रतीयतइत्यभिप्रायः । अथवा श्रुतिस्मृत्योर्विरोधेतु श्रुतिरेव गरीयसीतिप्रासिद्धम् तथापि व्यासंहितायां प्रथमाध्याये श्रुतिस्मृतिपुराणानां विरोधोयत्रदृश्यते तत्र श्रौतं प्रमाणं तु तयोर्द्वैधेस्मृतिर्वरा ।

अतएव श्रुतिस्मृतिप्रमाणेन तुर्य्याश्रमेगतौ क्षत्रिय वैश्ययो रनधिकारः सिद्ध एव । यद्यपि पौराणिकोक्तवचनेऽधिकारो ऽस्ति तदपि आद्य कुटीचकसंन्यासपरं । इति निर्णयसिन्धावप्युक्तं न तु बहूदक हंस परमहंसपरं ॥ तदपि कलौ निषिद्धमेव ॥ अश्वमेधं गवालम्भ मित्यादिवचनेन । वीरमार्गे यः संन्यासउक्तःसोऽपि कलौ निषिद्धः स्पष्टएव वृहन्नारदीय पुराणे । इति भावः ॥

(ननु क्षत्रियवैश्ययोः संन्यासग्रहणे ऽनधिकारोऽस्तु । कथंस्त्रीशूद्रयोः संन्यासग्रहणं न स्यात् । इति न च वाच्यं ॥ असंस्कारत्वात् एवं वेदमार्गे कर्म्मणि अनधिकारत्वाच्च ॥ एवमपि पुराणादिकर्म्ममार्गे प्रणवादे रुच्चारणेऽनर्हत्वात्

## ( तदुक्तं व्यासंहितायां )

शूद्रोवर्णश्चतुर्थो ऽपि वर्णत्वाद्धर्म्म मर्हति ॥
वेदमंत्रस्वधास्वाहावषट् कारादिभि र्विना ॥ १ ॥
ब्राह्मण क्षत्रिय विश स्त्रयोवर्णा द्विजातयः ॥
श्रुतिस्मृति पुराणोक्त धर्म्मयोग्यास्तु नेतर ॥ २ ॥

(एतद्वचनेन संन्यासग्रहणे ऽयोग्यो भवति)

यद्यपि स्त्रीशूद्रयो स्तीव्रवैराग्यं स्यात् तदाद्यकुटीच संन्यासः । किंवा वीरमार्गोविधीयते । यथा मैत्रेयी गा प्रभृतीनां यथाविदुरादीनां च तत्त्वविदां श्रुतिस्मृतीतिहा पुराणेषूपलंभात् ॥ किन्तु स्त्रीशूद्रयोः संन्यासादि ग्रह कुत्रापि शास्त्रे न दृष्टं एवं लिंगादिधारणं च निषिद्धमेव शा प्रतीयते । तत् प्रमाणमाह ॥

(अत्रिसंहितायां) जपस्तप स्तीर्थयात्रा प्रव्रज्या मं साधनं । देवताराधनं चैव स्त्रीशूद्रपतनानिषट् ।)

(नृसिंह पूर्व्वतापिन्युपनिषदि)

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्राय नेच्छन्ति । द्वा शदक्षरं साम जानीयाद् योजानीते सो ऽमृतत्वं च गच्छ सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः स ऽधोगच्छाति ॥ इति ॥ तस्मात् सर्व्वदा नाचष्टे यद्याचष्टे आचार्य्य स्तेनैव मृतो ऽधोगच्छति ॥ इति ॥ (छान्दो ग्योपनिषदि चतुर्थाध्याये शूद्रशब्दो यउक्तः स शूद्र वाच न ॥ तत् दर्शयति ॥)

तमुह परः प्रत्युवाचाह हारेत्वा शूद्र इति ॥ (अस्यार्थ हारेत्वा हारेण युक्ता इत्वा गंत्रीसेयं हारेत्वा गोभिः सह त स्तु तवैव तिष्ठतु न ममापर्य्याप्तेन कर्म्मार्थमनेन प्रयो मित्य भिप्रायो हेशूद्र इति ॥ ननु राजा ऽसौक्षत्तृसंवत्व

सह क्षत्तारमुवाचयुक्तं । विद्याग्रहणाय च ब्राह्मणसमीपो पगमात् । शूद्रस्य चानधिकारात् । कथमिदमननुरूपं रैक्कणो च्यते हे शूद्रेति । तत्राहुराचार्य्याः ॥ हंसवनश्रवणात् शुगेन माविवेश । तेनासौ शुचाश्रुत्वा रैक्कस्य महिमानं वा द्रवती ति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्र इत्याहेति । शूद्र वद्वा धनेनैवेनं विद्याग्रहणायोपजगाम न च शुश्रूषया । न तु जात्यैव शूद्र इति अपरे पुनराहुरल्पं धनमाहृतमिति रुषैवेन मुक्तवाञ्छूद्र इति । आजहारे माः शूद्र इति श्रुतेः ॥ शूद्रेति पूर्व्वो क्तानुकृतिमात्रं न तु कारणान्तरापेक्षया इति ॥ एवं शारीरक सूत्रे प्रमाणमाह ॥ (शुगस्य तदनादर श्रवणात्तदाद्रवणात् सूच्यतेहि) अस्यार्थः । शारीरक भाष्यं तदभिप्राय माह ॥ यथामनुष्याधिकार नियम मपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्य धिकार नियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशंकां निवर्त्तयितुं इदमाधिकरण मारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तं । अर्थित्वसामर्थ्ययोः संभवात् तस्मा-च्छूद्रो यज्ञे ऽनवक्लृप्त इतिवत् शूद्रो विद्यायामनवक्लृप्तइति निषेध श्रवणात् । यच्चकर्म्मस्वनधिकारकरणं शूद्रस्यानग्नित्वं न तद्विद्यास्व धिकारस्यापवादकं । न ह्यावहनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिंगं शूद्राधिकारस्योपोद्ब-लकं संवर्ग विद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्दे-न परामृशति । आजहारेत्वाशूद्र तवैव सहगोभिरस्तु इति श्रुतिः । विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्ट वि-ज्ञान संपन्नाः स्मर्य्यन्ते तस्मादधिक्रियते शूद्रो विद्यास्वित्येवं

प्राप्तेब्रूमः । न शूद्रस्याधिकारो वेदाध्ययनाभावात् । अधीतवेदो हि विदित वेदार्थो वेदार्थेष्व धिक्रियते न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्व्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात् । यत्त्वऽर्थित्वं न तद सति सामर्थ्ये ऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकरणं भवति शास्त्रीये ऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् । शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेननिराकृतत्वात् । यच्चेदं शूद्रो यज्ञे ऽनवक्लृप्त इति तत् न्यायपूर्व्वकत्वाद्विद्यायामप्यनवक्लृप्तं द्योतयति न्यायस्य साधारणत्वात् यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिंगमन्यसे न तल्लिंगं न्यायाभावात् न्यायोक्तेर्हि लिंगदर्शनं द्योतकं भवति, न चात्रन्यायो ऽस्ति कामंचायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्य्यात् तद्विषयत्वात् न सर्व्वासुविद्यासु, अर्थवादस्थत्वात् न तु क्वचिदप्ययं शूद्रमधिकर्त्तुमुत्सहते शक्यतेचायं शूद्रशब्दो ऽधिकृतविषये योजयितुं । कथमित्युच्यते । कंवर एनमेतत्सन्तं स युग्वानमिव रैक्कमात्थेत्यस्माद्धंसवाक्यादात्मनो ऽनादरंश्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत् पेदेताम्मृषी रैक्कः शूद्रशब्देनानेनसूचयांबभूवात्मनः परोक्षज्ञानस्य ख्यापनायेति गम्यते । जातिशूद्रस्या नधिकारात् । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते इति उच्यते तदाद्रवणाच्छुचमभिदुद्राव शुचावाभिदुद्रुवे शुचावा रैक्कमभिदुद्रावेति शूद्रावयवार्थसंभवात् रूढार्थस्य चासंभवात् दृश्यते चायमर्थो ऽस्यामाख्यायिकायां ॥ इतश्च न जातिशूद्रो जानश्रुतिः ॥

(संस्कारपरामर्शात् तदभावा भिलापाच्च)

(टीका) इतश्च न शूद्रस्याधिकारो यद्विद्या प्रदेशेषू पन यनादयः संस्काराः परामृश्यन्ते तं होपनिन्ये अधीहि भगव इति होपससाद ब्रह्मनिष्ठाः परंब्रह्मान्वेषमाणा एष हवै तत्सर्व्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना इति च तान् हानुपनीयैवेत्यपि प्रदर्शितै वोपनयन प्राप्तिर्भवति शूद्रस्य च संस्काराभावो ऽभिलप्यते शूद्रश्चतुर्थोवर्ण एकजा-तिरित्येकजातित्व स्मरणेन, न शूद्रेपातकं किञ्चिन्न च संस्कार मर्हतीत्यादिभिश्च ॥

(श्रवणाध्ययनार्थ प्रतिषेधात् स्मृतेश्च ॥)

इतश्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थ प्रतिषेधोभवति वेदश्रवण प्रतिषेधो वेदाध्ययन प्रतिषेधः तदर्थ ज्ञानानुष्ठानयो श्च प्रतिषेधः शूद्रस्य स्मर्य्यते । श्रवणप्रतिषेध स्तावदथास्य वेदमुपश्रृण्वत स्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमि ति पद्यु ह वा एतत् श्मशानं यच्छूद्र स्तस्मात् शूद्रसमीपे नाध्येतव्यमितिच । अतएवाध्ययन प्रतिषेधो यस्य हि समीपे ऽपि नाध्येतव्यं भवति स कथं श्रुति मधीयीत भवति चो च्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति ॥ अतएव चार्थाद र्थज्ञानानुष्ठानयोः प्रतिषेधोभवति न शूद्रायमतिं दद्यादिति द्विजातीनामध्ययनमिज्यादान मिति च । येषांपुनः पूर्व्वकृत संस्कारवशात् विदुरधर्म्मव्याधप्रभृतीनां ज्ञानोत्पत्ति स्तेषां न शक्यते फलप्राप्तिः प्रतिबन्धुं ज्ञानस्यैकान्तिक फलत्वात् ॥

श्रावयेच्चतुरोवर्णानिति चेतिहास पुराणाधिगमे चातुर्वर्ण्या-
धिकार स्मरणात्। वेदपूर्व्वक स्तु नास्त्यधिकारः शूद्राणामिति
स्थितं ॥

स्मृत्या श्रवणादि निषेधाच्च नाधिकार इत्याह। श्रवणे
अस्य शूद्रस्य द्विजैः पठ्यमानं वेदंप्रमादाच्छृण्वतः सीसला-
क्षाभ्यां तप्ताभ्यां श्रोत्रद्वय पूरणं प्रायश्चित्तं कार्य्यमित्यर्थः।
पद्युपादयुक्तं संचरिष्णुरूपमिति यावत्भवति च स्मृतिरिति
शेषः ॥

( अधिकरणमालायां यन्निर्द्दिष्टं तदाह )

प्रथमाध्यायस्य तृतीयपादे दशमाधिकरणे ॥

शूद्रो ऽधिक्रियते वेदविद्यायामथवा नहि ॥
अत्रैवर्णिकदेवाद्या इव शूद्रो ऽधिकारवान् ॥ १ ॥
देवाः स्वयं भातवेदाः शूद्रो ऽध्ययनवर्ज्जनात् ॥

जानश्रुतिर्नाम कश्चित्शिष्यो गोसहस्रं दुहितरं मुक्ता-
हारं रथं कांश्चिद्ग्रामां श्च उपायनत्वेनानीय रैक्वनामकं गु-
मुपससाद । तत्र रैक्ववचनमेतत् हे शूद्रजानश्रुते इमा
सहस्राद्या आहृतवानासि इति । अत्र शूद्रो ऽपि वेदविद्या-
मधिकारवानिति। प्राप्तं अत्रैवर्णिक देवदृष्टान्तात् शूद्रस्या-
त्रैवर्णिकस्य तत् संभवादिति पूर्व्वपक्षः । एवंप्राप्तेब्रूमः दे-
इति अस्ति देवशूद्रयो वैधर्म्यं । उपनयनाध्ययनाभावे ऽ-
स्वयं प्रतिभातवेदा देवा स्तादृशस्य सुकृतस्य पूर्व्वमु-
र्ज्जितत्वात्, शूद्रस्तु तादृश सुकृतराहित्यात् न स्वयं प्रतिभा-
वेदः नापि तस्य वेदाध्ययनमस्ति उपनयनाभावात् । अ-

विद्वत्त्वस्याधिकारहेतो रभावान्न श्रौतविद्यायां शूद्रोऽधिकारी। कथं तर्हि उदाहृते वाक्ये जानश्रुतिविषयः शूद्रशब्दः यौगिको ऽयं न रूढ इति ब्रूमः । विद्याराहित्यजनितया शुचा गुरुं दुद्राव इति शूद्रः। नच रूढ्यायोगापहारः रूढेरत्रासंभवात् अस्मिन्नुपाख्याने क्षत्तृप्रेरणाद्यैश्वर्य्योपन्यासेन जानश्रुतेः क्षत्रियत्वावगमात् ॥

ननु शूद्रस्य वेदविद्यानधिकारे सति मुमुक्षायां सत्यामपि मुक्ति र्न सिध्येदिति चेन्न स्मृतिपुराणादिमुखेन ब्रह्मविद्योदये सति मुक्तिसिद्धेः तस्मात् न शूद्रो वेदविद्यायामधिक्रियते ॥

(मनुः) न शूद्रायमतिं दद्यात् नोच्छिष्टं न हविष्कृतं ॥
न चास्योपदिशेद्धर्म्मं न चास्य व्रतमादिशेत् ॥ १ ॥
(बृहन्नारदीयपुराणे) स्त्रीशूद्राणां समीपेतु वेदाध्ययनकृन्नरः॥
कल्पकोटिसहस्रेषु प्राप्नोति नरकान् क्रमात् ॥ २ ॥
प्रणवाद्यं न दातव्यं मंत्रं शूद्राय सर्व्वथा ॥
शूद्रो निरय माप्नोति ब्राह्मणो यात्यधोगतिम् ॥ ३ ॥
यः स्वकर्म्मपरित्यागी पाषण्डीत्युच्यते बुधैः ॥
तत् संगकृत्तत्समश्च तावुभावतिपापिनौ ॥ ४ ॥
कल्पकोटि सहस्राणि कल्पकोटि शतानि च ॥
सहस्र वंशसंयुक्तो नरके वासमश्नुते ॥ ५ ॥

(गौतमसंहितायां द्वादशाऽध्याये)

वेदमुपश्रृण्वत स्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण ॥
मुदाहरणे जिह्वाच्छेदो धारणे शरीर भेदः ॥ ६ ॥ इति
(मनुः पंचमाऽध्याये) नास्तिस्त्रीणां पृथक्यज्ञो न व्रतं नाप्यु

पोषितं ॥ पतिंशुश्रूषते येन तेन स्वर्गे महीयते ॥ ७ ॥
( ब्रह्मवैवर्तपुराणे ) ओंकारोच्चारणाद्धोमाच्छालाग्रामशिला
र्चनात् ॥ मह्यं पक्वान्नदानाच्च विप्रादन्योव्रजेदधः ॥ ८ ॥
( पराशरसंहितायां ) कपिलाक्षीरपानेन ब्राह्मणीगमनेनच ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेदिति ॥ ९ ॥
शूद्राणां द्विजशुश्रूषा परोधर्म्मः प्रकीर्त्तितः ॥
अन्यथा कुरुते किंचित् तद्भवेत् तस्य निष्फलं ॥ १० ॥
दानमध्ययनं वापि यजनंचेति वै विशः ॥
शूद्रस्य वार्त्ता शुश्रूषाद्विजानां कारुकर्म्म च ॥ ११ ॥
शूद्रान्नं शूद्रसंपर्कं शूद्रेणच सहाशनम् ॥
ते यांति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥ १२ ॥
उदासीनाद्दुराचारादन्नं न गृह्णीयात् सुधीः ॥
दैवाद्यदि च गृह्णीयाद्धनहीनो भवेद्ध्रुवम् ॥ १३ ॥
(अंगिराः) योभुंक्ते हि च शूद्रान्नं मासमेकं निरन्तरम् ॥
इहजन्मनि शूद्रत्वं मृतः श्वा चाभिजायते ॥ १४ ॥
शूद्रान्नं शूद्रसंपर्कं शूद्रेण च सहाशनं ॥
शूद्राज्ज्ञानागमः कश्चित् ज्वलन्तमपि पातयेत् ॥ १५ ॥
अप्रणामे तु शूद्रेऽपिस्वास्ति यो वदति द्विजः ॥
शूद्रोऽपि नरकं याति ब्राह्मणोऽपि तथैवच ॥ १६ ॥
अग्निहोत्री च यो विप्रः शूद्रान्नं चैव भोजयेत् ॥
पञ्चतस्य प्रणश्यन्ति आत्मवेदास्त्रयोऽग्नयः ॥ १७ ॥
शूद्रान्नेन तु भुक्तेन योद्विजो जनयेत् सुतान् ॥
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते ॥ १८ ॥

शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पापिना ॥
तद्द्विजेभ्यो न दातव्यमापस्तंवोऽब्रवीन्मुनिः ॥ १९ ॥
ब्राह्मणस्य सदा भुंक्ते क्षत्रियस्य च पर्व्वसु ॥
वैश्येष्वापत्सु भुञ्जीत न शूद्रेऽपि कदाचन ॥ २० ॥
ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुस्तथा ॥
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवं ॥ २१ ॥
(मनुसंहितायां) एक मेवतु शूद्रस्य प्रभुः कर्म्म समादिशत् ॥
एतेषा मेव वर्णानां शुश्रूषा मनुसूयया ॥ २२ ॥
श्वचर्मणि यथा क्षीरमपेयं धर्म्मवादिभिः ॥
तथा शूद्रमुखाद्वाक्यं न श्रोतव्यं कदाचन ॥ २३ ॥
पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य वै ॥
वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ॥ २४ ॥
(भविष्यत् पुराणे) विदुषा ब्राह्मणेनेद मध्येतव्यं प्रयत्नतः ॥
शिष्येभ्य श्चैव वक्तव्यं चातुर्व्वर्णेभ्य एवहि ॥ २५ ॥
अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ॥
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन ॥ २६ ॥
(शिव पुराणे) शूश्रूषा मात्रसारा हि शूद्राः श्रुतिवहिष्कृताः॥

## ( अत्रिसंहितायां १ अध्याये )

वध्योराज्ञः सवै शूद्रो जपहोमपरश्चयः ॥
ततो राष्ट्रस्यहन्तासौ यथा वह्ने श्च वै जलं ॥ २७ ॥
( विष्णुसंहितायां ५ अध्याये ) शूद्रप्रव्रजतानां दैवे पित्र्ये भोजकश्च ॥ इति ॥ (टीका) यदैवपित्र्ये काय्ये शूद्रः परि-

व्राजकश्च भोजनं कारयति स्वकीयं अयोग्यंकर्म्म करोति शूद्रवेदाध्ययन वत् इति ॥

अयोग्यं कर्म्मचारीच इति विष्णूक्तं ॥ (पुनरपिविष्णुः)॥७१ अध्याये ) न शूद्राय मतिंदद्यात् ॥ नोच्छिष्टहविषी ॥ तिलान् ॥ न चास्योपदिशेत्कर्म्म ॥ न व्रतं ॥ न संहताभ्यां पाणिभ्यां शिर उदरञ्च कण्डूयेत् ॥ न दधिसुमनसी प्रत्यचक्षीत इति ॥ १४ ॥

( मनु ११ अध्याये ) न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित् । यजमानो हि भिक्षित्वा चण्डालं प्रेत्यजायते॥

(यम१अध्याये ) अन्नंशूद्रस्य भोज्यं वा ये भुञ्जन्त्यवुधानराः प्रायश्चित्तं तथाप्राप्तं चरेच्चान्द्रयणव्रतं ॥ २ ॥

आपस्तम्ब ९ अध्याये ) ब्राह्मणस्य सदाकालं शूद्रप्रेषणकारिणः । भूमावन्नं प्रदातव्यं यथैव श्वा तथैव सः ॥ ३ ॥

(संवर्त्त १ अध्याये) शूद्रहस्तेन यो ऽश्नीयात् पानीयं वा पिवेत्क्वचित् । अहोरात्रोषितोभूत्वा पञ्चगव्येनशुध्यति ॥ ४ ॥

शूद्राणां भाजनेभुक्त्वा भुक्त्वावा भिन्नभाजने । अहोरात्रोषितोभूत्वा पञ्चगव्येनशुद्ध्यति ॥ ५ ॥

(विष्णुः) न धर्म्मस्योपदेशेन पापं कृत्वा व्रतंचरेत् ॥ व्रतेन पापं प्रच्छाद्य कुर्व्वंस्त्रीशूद्रदंभनं ॥ ६ ॥

(व्यासः) शूद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः ॥ जपतो जुह्वतो वापि गतिरुक्ता न विद्यते ॥ ७ ॥

शूद्रान्नेनोदरस्थेन यदि कश्चिन्म्रियेत यः ॥ स भवेत् शूकरो नुनं तस्य वा जायते कुले ॥ ८ ॥

मृतसूतकपुष्टांगो द्विजः शूद्रान्नभोजने ॥
अहमेव नजानामि कां योनिं स गमिष्यति ॥ ९ ॥
गृध्रोद्वादशजन्मानि सप्तजन्मानि शूकरः ॥
श्वानश्च सप्तजन्मानि इत्येवं मनुरब्रवीत् ॥ १० ॥
( वसिष्ठः ) ६ अध्याये ॥ किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयं । पात्राणामपितत् पात्रं शूद्रान्नं यस्यनोदरे ॥११॥
( अष्टादशाऽध्याये ) (टीका) शूद्रायां पारशवः पारायन्नेव जीवन्नेव शवो भवती त्याहुः॥ शव इति मृताख्या एतच्छवं यच्छूद्रं स्तस्माच्छूद्रसमीप तु नाध्येतव्यं । तथापि यम-गीतान् श्लोकानुदाहरन्ति ॥ श्मशान मेतत् प्रत्यक्षं येशूद्राः पापचारिणः तस्माच्छूद्रसमीपे च नाध्येतव्यं कदाचन ॥१२॥
न शूद्राय मतिं दद्यात् इति पूर्व्वोक्तं ॥
यश्चास्योपदिशेद्धर्म्मं यश्चास्य व्रतमादिशेत् ॥
सोऽसंव्रतं तमो घोरं सहतेन प्रपद्यते ॥ इति ॥ १३ ॥
व्रणद्वारे कृमिर्यस्य संभवेत कदाचन ॥
प्राजापत्येन शुध्येत हिरण्यं गौर्व्वासो दक्षिणेति ॥ १४ ॥
( यमसंहितायां अंगहीनस्या नधिकारित्वं दर्शयति )
श्वित्रीकुष्टी तथाचैव कुनखी श्यावदन्तकः ॥
रोग हीनातिरिक्तांगः पिशुनो मत्सरस्तथा ॥ १५ ॥
दुर्भगो हि तथाषण्ढः पाषण्डीवेदनिन्दकः ॥
हैतकः शूद्रयाजी च अयाज्यानांचयाजकः ॥ १६ ॥
नित्यं प्रतिग्रहे लुब्धो याचको विषयात्मकः ॥
श्यावदन्तोऽथ वैद्यश्च असदालापकस्तथा ॥ १७ ॥

एतेश्राद्धे च दाने च वर्ज्जनीयाःप्रयत्नतः ॥
ततो देवलकश्चैव भृतको वेदविक्रयी ॥ १८ ॥
एते वर्ज्याः प्रयत्नेभ एतद्व्रास्वति रब्रवीत् ॥

(संन्यासोपनिषदि ) न शूद्रस्त्रीपतितोदक्या संभाषणं
( इति श्रुतिस्मृतिपुराणेषु प्रमाणेषु पतितस्त्रीशूद्रादीनां
वादिकर्म्माणि अनर्हत्वादित्युक्तं । एवं वाचाभिरपिसंभाष
निषिद्धं प्रतीयते कथं संन्यासग्रहणं संभवति न च वा
मिति वाक्यशेषः ॥

(यथोक्तसाधनसंपन्नस्य सन्यासाधिकारो भवति ॥ त
दर्शयति मुण्डकोपनिषदि ॥)

परीक्ष्यलोकान् कर्म्मचितान् ब्राह्मणो निर्व्वेदमाया
कृतःकृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पा
श्रोत्रियं ब्रह्मनिष्ठमिति ॥

तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमा
य येनाक्षरं पुरुषं वेदसत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्यां
कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृतचक्षु रमृतत्त्वमिच्छ
शान्तोदान्त उपरतास्तितिक्षुः समाहितोभूत्वा आत्मन्या
पश्यतीत्यादि श्रुतिभ्यः॥विहितानां कर्म्मणां विधिनापरि
संन्यासइति ॥ सचवैराग्यहेतुः । वैराग्यं परमेतस्येति श्रु
स्मृतेश्च । ससंन्यासो वैराग्यन्यूनाधिक्येन चतु
। कुटीचक बहूदक हंम परमहंसाः । इतिभेदात् । वै
द्विविधं परमपरश्चेति तच्चापरं चतुर्विधं यतमान
केन्द्रियत्ववशीकारभेदात् । अस्मिन् संसारे इदंसारं इदं

रमिति सारासारविवेको यतमानवैराग्यं ॥ चित्तगतदोषाणां मध्ये एतावन्तः पक्षाइति विविच्यापक्षदोष निरोधयत्नोऽव्यतिरेकवैराग्यं । विषयेच्छासत्वेपि मनसीन्द्रियनिरोधावस्थानं एकेन्द्रियत्ववैराग्यं वशीकारवैराग्यं ॥ ऐहिकामुष्मिकविषयजिहासा तदुक्तं । दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यमिति ॥ तत् त्रिविधं मन्दं तीव्रं तीव्रतरंचेति । पुत्रदारादि वियोगेधिक् संसार मिति बुद्ध्याविषयजिहासा मन्दवैराग्यं । अस्मिन् मन्दवैराग्ये संन्यासाधिकार एवनास्ति ॥ तीव्रवैराग्यमाह । अस्मिन् जन्मनि पुत्रदारादिमास्त्विति स्थिरवुद्ध्या विषय जिहासातीव्रं । तीव्रवैराग्येसति यदा मनसि वैराग्यं जायते सर्व्वं वस्तुषु । तदैव संन्यसेद्विद्वानन्यथा पतितो भवेदिति स्मरणात् । यात्राद्यशक्तौ चेत् कुटीचकादि संन्यासाधिकारः । तीव्रवैराग्ये हंससंन्यासाधिकारः । तीव्रतरस्तु पुनरावृत्ति सहित ब्रह्मलोकादिपर्य्यन्तं मास्त्वितिस्थिरवुद्ध्याविषयजिहासा तीव्रतरं वैराग्यं ॥

तीव्रतरवैराग्येसति मुमुक्षोः परमहंससंन्यासो विद्वत् संन्यासश्चेति परमहंससंन्यासाधिकारः । सच परमहंसो द्विविधः । विविदिषा संन्यासो विद्वत् संन्यासश्चेति ॥ तत्वज्ञानमुद्दिश्य साधनसंपन्नेन क्रियमाणः संन्यासः स विविदिषा संन्यासः । इति ।

एवमेव प्रव्राजिनो लोकमिच्छन्तः ॥ इति प्रमाणं ॥

॥ विद्वत् संन्यासलक्षणमाह ॥ गृहस्थाश्रमादौ कृतश्रवणा

दिभि रुत्पन्नब्रह्मसाक्षात्कारेण गृहस्थादिना चित्तवि॰ न्तिलक्षणजीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासो विद्व॰ संन्यासः । तत्रप्रमाणमाह ॥ एतमेव विदित्वा मुनिर्भवति अथ योगिनां परमहंसानामित्यादि परमहंसोपनिषत् ॥ य॰ दातु विदितं तत्त्वं परब्रह्मसनातनं । तदैकदण्डंसंगृह्य सो॰ वीतां शिखांत्यजेदित्यादि श्रुतिस्मृतिवचनानि प्रमाणा॰ । सच संन्यासो द्विविधः । जन्मापादककर्म्मत्यागात्म॰ प्रेषोच्चारणपूर्व्वकं दण्डधारणाद्याश्रमरूपश्चेति । न कर्म॰ णा न प्रजया धनेन त्यागेनैकेन अमृतत्व मानशुरित्या॰ श्रुतिराद्ये मानं विरक्तस्य गृहस्थादेः प्रवलनिमित्तव॰ संन्यास प्रतिवन्धे आद्यसंन्यासकुटीचकाधिकारः । अ॰ प्रथममधिकारः । द्वितीये तुदण्डमाच्छादनं कौपीनं कमण्ड॰ लुं परिग्रहेच्छेषं विसृजेत् ॥ संसारमेव निःसारं दृष्ट्वा॰ दिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परंवैराग्यमाश्रिता इत्या॰ वचनानि प्रमाणानि । तत्राद्य कुटीचकसंन्यासो जन्मा॰ रीयोऽपिविज्ञान उपकरोति जनकादीनां तत्वज्ञानो॰ भात् श्रुत्यादिषु यद्यातुरः स्यान्मनसा वाचा वा सन्यसे॰ त्यातुरसंन्यासविधानाच्च । आतुरेऽपिविरक्तस्यैवाधिका॰ न संन्यासान्तरं अन्यथा प्रकरणविरोधप्रसंगात् । इतिभा॰

॥ लिखितसंहितायां ॥ त्रिदण्डग्रहणादेव प्रेतत्वं नैवजाय॰ अहन्येकादशे प्राप्ते पार्व्वणं तु विधीयते ॥ १ ॥

॥ शिवपुराणे ८ अध्याये ॥ त्रैवर्णिकानां सर्व्वेषां स्वस्व॰ श्रमरतानां । श्रुतिस्मृत्युदितोधर्म्मोऽनुष्ठेयो नापरः क्वचि॰

श्रुतिस्मृत्युदितं कर्म्म कुर्व्वन् सिद्धिमवाप्स्यति ॥
वर्णाश्रमाचारपुष्पैरभ्यर्च्य परमेश्वरं ॥ ३ ॥
तत्सायुज्यंगताः सर्व्वे वहवो मुनिसत्तमाः ॥

॥ अथनारदपरिव्राजकोपनिषदि प्रमाणमाह । अधिकारविषयं दर्शयति ॥ अथकदाचित् परिव्राजकाभरणोनारदः । सर्व्वलोकसंचारं कुर्व्वन्नपूर्व्वपुण्यस्थलानि । पुण्यतीर्थानि तीर्थीकुर्व्वन्नवलोक्य चित्तशुद्धिं प्राप्य निर्व्वेदः शान्तोदान्तः सर्व्वतो निर्व्वेदमासाद्य स्वरूपानुसन्धानमनुसन्धाय नियमानन्दविशेषगण्यं मुनिजनैरुपसंकीर्णं नैमिषारण्यं पुण्यस्थलमवलोक्य सरिगमपधनिससंज्ञै र्वैराग्यबोधकरैः स्वरविशेषैः प्रपंचिकपराङ्मुखै र्हरिकथालापैःस्थावरजंगमनामकै र्भगवद्भक्तिविशेषै र्नरमृगकिंपुरुषामरकिंन्नराप्सरोगणान् संमोहयन्नागतं ब्रह्मात्मजं भगवद्भक्तं नारदमवलोक्य द्वादश वर्षसत्रयागोपस्थिताः । श्रुत्यध्ययनसंपन्नाः सर्वज्ञा स्तपोनिष्ठापराश्च ज्ञानवैराग्यसंपन्नाः शौनकादिमहर्षयः प्रत्युत्थानं कृत्वा नत्वा यथोचितातिथ्यपूर्व्वकमुपवेशयित्वा स्वयं सर्व्वेऽप्युपविष्टा भो भगवन् ब्रह्मपुत्र कथं मुक्त्युपायो ऽस्माकं वक्तव्यमित्युक्त स्तान् स होवाच नारदः । सत्कुलभवोपनीतः सम्यगुपनयनपूर्व्वकंचतुश्चत्वारिंशत् संस्कारसंपन्नः स्वाभिमतैकगुरुसमीपे स्वशाखाध्ययनपूर्व्वकं सर्व्वविद्याभ्यासं कृत्वा द्वादशवर्षशुश्रूषापूर्व्वकं ब्रह्मचर्य्यं । पंचविंशतिवत्सरं गार्हस्थ्यं पंचविंशतिवत्सरं वानप्रस्थाश्रमं । तद्विधिवत् क्रमान्निवर्त्य चतुर्व्विधंब्रह्मचर्य्यं । षड्विधंगार्हस्थ्यं । चातुर्विध्यवा-

नप्रस्थधर्म्मं सम्यगभ्यस्य तदुचितंकर्म्म सर्व्वंनिर्वृत्यसाधन-
चतुष्टयसपन्नः सर्व्वसंसारोपरिमनोवाक्कायकर्म्मभिर्यथाशा-
निवृत्त स्तथावासनैषणोपर्य पि निर्व्वैरः शान्तोदान्तः सं-
न्यासी परमहंसाश्रमेणास्खलितस्वस्वरूपध्यानेन देहत्यागं
करोति । समुक्तोभवति समुक्तोभवतीत्युपनिषत् । प्रथमो-
पदेशः ॥ अथ हैनं भगवन्तं नारदं सर्व्वे शौनकादयः पप्रच्छुः
भो भगवन् संन्यासविधिं नो ब्रूहीति । तानवलोक्य नारद
स्तत् स्वरूपं सर्व्वं पितामहमुखेनैव ज्ञातुमुचितमित्यु-
क्त्वा सत्रयागपूर्त्यनन्तरं तैः सह सत्यलोकं गत्वा विधि-
वद्ब्रह्मनिष्ठापरं परमेष्ठिनं नत्वा स्तुत्वा यथोचितं तदाज्ञया
तैः सहोपविश्य नारदः पितामह मुवाच गुरुस्त्वं जनकस्त्वं
सर्व्वविद्यारहस्यज्ञः सर्व्वज्ञस्त्वमतो मत्तो मदिष्टं रहस्यमेकं
वक्तव्यं त्वाद्विना मदभिमतरहस्यं वक्तुं कः समर्थः कि-
मितिचेत् परिव्राज्यस्वरूपक्रमं नो ब्रूहीति । नारदेन प्रार्थितः
परमेष्ठी सर्व्वतः सर्व्वानवलोक्य मुहूर्तमात्रं समाधिनिष्ठो
भूत्वा संसारार्तिनिवृत्त्यन्वेषण इति निश्चित्य नारदमवलोक्य
तमाह पितामहः । पुरामत्पुत्र पुरुषसूक्तोपनिषद्रहस्य-
प्रकारं निरतिशयाकारावलंबिनाविराट्पुरुषेणोपदिष्टं रहस्यं
ते विविच्योच्यते ॥ तत्क्रममतिरहस्यं वाढमवहितो भूत्वा
श्रूयतां भो नारद विधिवदादावनुपनीतोपनयनानन्तरं तत्
सत्कुलप्रसूतः । पितृमातृविधेयः पितृसमीपादन्यत्र स-
संप्रदायस्थं श्रद्धावंतं सत्कुलोद्भवं श्रोत्रियं शास्त्रवात्सल्यं
गुणवंतमकुटिलं सद्गुरुमासाद्य नत्वा यथोपयोगशुश्रू-

पूर्व्वकं स्वाभिमतं विज्ञाप्य द्वादशवर्षसेवापुरःसरं सर्व्वं विद्याभ्यासं कृत्वा तदनुज्ञया स्वकुलानुरूपामभिमतकन्यां विवाह्य पंचविंशतिवत्सरं गुरुकुलवासं कृत्वाथगुर्व्वनुज्ञया गृहस्थोचितकर्म्म कुर्व्वन् दौर्ब्राह्मण्यनिवृत्तिमेत्य स्ववंश वृद्धिकामः पुत्रमेकमासाद्य गार्हस्थोचित पंचविंशतिवत्सरं तीर्त्वा ततः पंचविंशतिवत्सरपर्यंतं त्रिषवणमुदकस्पर्शन पूर्व्वकं चतुर्थकालमेकवारमाहारमाहरन्नयमेक एवं वनस्थो भूत्वा पुरग्रामप्राक्तनसंचारं विहायनिकिरविरहिततदाश्रित कर्म्मोचितकृत्यं निर्व्वर्त्यदृष्टश्रवणविषयवैतृष्ण्यामेत्य चत्वारिंशत्संस्कारसंपन्नः । सर्व्वतो विरक्तश्चित्तशुद्धिमेत्याशासूयेर्ष्याहंकारंदग्ध्वा साधनचतुष्टयसंपन्नः संन्यस्तुमर्हतीत्युपनिषत् ॥ द्वितीयोपदेशः ॥

॥ अथ संन्यासाधिकारी निरूप्यते इत्याह ॥

## ॥ नारदपरिव्राजके तृतीयोपदेशः ॥

अथहैनं नारदः पितामहं पप्रच्छ भगवन् केन संन्यासः संन्यासाधिकारी वेत्येवमादौ संन्यासाधिकारिणं निरूप्य पश्चात् संन्यासविधिरुच्यते । अवहितः शृणु ॥ अथ षण्डः पतितो गविकल स्त्रैणोबधिरो र्भकोमूकः पाषण्डश्चक्री लिंगीवैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको । वैराग्यवंतोऽप्येते न संन्यासार्हाः संन्यास्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥

पूर्व्वसंन्यासी परमहंसाधिकारी ॥

परेणैवात्मनश्चापि परस्यैवात्मनातथा ।
अभयं समवाप्नोति स परिव्राडिति स्मृतिः ॥ १ ॥
षण्डोऽथ विकलोऽप्यंधो बालकश्चापि पातकी ॥
पतितश्च परद्वारी वैखानसहरद्विजौ ॥ २ ॥
चक्रीलिंगी च पाषण्डी शिपिविष्टोऽप्यनाग्निकः ॥
द्वित्रिवारेण संन्यस्तो भृतकाध्यापकोऽपि च ॥
एतेनार्हंति संन्यास मातुरेण विनाक्रमम् ॥ ३ ॥

॥ अथ संन्यासोपनिषदि प्रमाणमाह ॥

( संन्यासानधिकारी निरूप्यते )

अथषण्डः पतितोऽङ्गविकल स्त्रैणोवधिरोऽर्भकोमूकः पाषण्डश्चक्री लिंगीकुष्ठी वैखानसहरद्विजौ भृतकाऽध्यापकः शिपिविष्टोऽनग्निको वैराग्यवंतोऽप्येते न संन्यासार्हाः। संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥ ४ ॥
आरूढपतिताऽपत्यं कुनखीश्यावदन्तकः ॥
क्षीवस्तथाङ्गविकलो नैव संन्यस्तुमर्हति ॥ ५ ॥
संप्रत्यवसितानां च महापातकिनां तथा ॥
व्रात्यानामभिशस्तानां संन्यासं नैवकारयेत् ॥ ६ ॥
व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ॥
सत्यशौचपरिभ्रष्टं संन्यासं नैवकारयेत् ॥ ७ ॥
एतेनार्हन्ति संन्यास मातुरेण विनाक्रमम् ॥ इति ॥

( विश्वेश्वर पद्धतौ संन्यासनिषेधमाह )

पितृमातृ गुरुद्वेषी निन्दको यतिनिन्दकः ॥

जानीयादन्त्यजं विप्रो नैव संन्यास मर्हति ॥ १ ॥
( वृहस्पतिः ) अतीतान्न स्मरेद्भोगां स्तथैवनागतानपि ॥
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमेवसेत् ॥ २ ॥
श्रद्धाध्यानं तपः शौचं यस्य वित्तंचतुष्टयं ॥
रमणं चाद्वितीयस्य स कैवल्याश्रमेवसेत् ॥ ३ ॥
अन्तस्थानीन्द्रियाण्यन्त र्वहिस्थान् विषयान् बहिः ॥
सक्नोति यः सदाकर्त्तु स कैवल्याश्रमेभवेत् ॥ ४ ॥
( व्यासः ) यावन्तो यानिजन्मानि तेषु नूनं कृतं भवेत् ॥
यत्कृतं पुरुषेणेह नान्यथा ब्रह्मणः स्थितिः ॥ ५ ॥
तामासाद्यतु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥
त्रिष्वाश्रमेषुकोऽन्यर्थो भवेत् परमभीप्सितः ॥ ६ ॥
( इत्यादिना विदुषो ब्रह्मस्थितस्य पारिव्राज्यंधर्म्म दर्शितं )

( वह्वृचपरिशिष्टे )

यथोक्तचारिणंभिक्षुं गुरुमेकं परिग्रहेत् ॥
यतिवृन्दैरनुज्ञातो मोक्षाश्रममुपाश्रयेदिति ॥ ७ ॥

( कूर्म्मपुराणे तृतीयाऽध्याये ) ( कूर्म्म उवाच )

ब्रह्मचारीगृहस्थश्च वानप्रस्थो यतिस्तथा ॥
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथाभवेत् ॥ १ ॥
उत्पन्नज्ञानविज्ञानो वैराग्यं परमंगतः ॥
प्रव्रजेद्ब्रह्मचर्य्यात्तु यदीच्छेत् परमांगतिं ॥ २ ॥
दारानाहृत्य विधिवदन्यथा त्रिविधै र्मखैः ॥
यजेदुत्पादयेत् पुत्रान् विरक्तो यदि संन्यसेत् ॥ ३ ॥
अनिष्ट्वात्रिभिवद्यज्ञैरनुत्पाद्य तथात्मजान् ॥

न गार्हस्थ्यं गृहीत्यक्ता संन्यसेद्बुद्धिमान् द्विजः ॥ ४ ॥
अथ वैराग्यवेगेन स्थातुंनोत्सहतेगृहे ॥
तत्रैव संन्यसेद्विद्वानिष्ट्वापिच द्विजोत्तमः ॥ ५ ॥
तथापि विविधैर्यज्ञै रिष्ट्वा वनमथाश्रयन् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः संन्यसेद्बहिः ॥ ६ ॥
वानप्रस्थाश्रमंगत्वा न गृहं प्रविशेत् पुनः ॥
न संन्यासी वनञ्चाथ ब्रह्मचर्य्यश्च साधकः ॥ ७ ॥
प्राजापत्या न्निरूप्येष्टि माग्नेयी मथवाद्विजः ॥
प्रव्रजेत्तु गृहीविद्वान् वनाद्वा श्रुतिचोदनात् ॥ ८ ॥
प्रकर्त्तु मसमर्थो ऽपि जुहोति यजतिक्रियाः ॥
अंधः पंगुर्दरिद्रोवा विरक्तः संन्यसेद्द्विजः ॥ ९ ॥
सर्व्वेषामेव वैराग्यं संन्यासेतु विधीयते ॥

ननु नारदपरिव्राजकसंन्यासोपनिषद्दि च अन्धपंगुप्रभृतीनां संन्यासग्रहणस्य निषेध्यत्वमुक्तं एते वैराग्यवंतो अपि संन्यासें ऽनर्हाः। इति कथं संन्यासग्रहणे ऽधिकारीति सत्यमेव यद्यपि एतत् पौराणिकवचने विध्युक्तं ।

तदपि संन्यासोपनिषदि यदुक्तं तदाह । एते संन्यस्त यद्यपि महावाक्योपदेशे नाधिकारिणः ॥ इति ॥
पतत्येवाविरक्तो वा यःसंन्यासं कर्त्तुमिच्छति ॥ १० ॥
एकस्मिन्नथवा सम्यग् वर्तेतामरणान्तिकं ॥
श्रद्धावानाश्रमे युक्तः सो ऽमृतत्वाय कल्पते ॥ ११ ॥

(अथ एतत् वचनाभिप्राय माह)

मरणान्तिकमिति शब्देन देहपरित्यागरूपः स संन्यास

वीरमार्गे विधीयते वीरमार्गादि संन्यास अन्धपंगुप्रमृतीनां कर्त्तव्यता किंवा कुटीचकपरः । यतःपूर्व्वोक्तसंन्यासोपनिषदि नारदपरिव्राजके ऽपि निषेध्यता प्रतीयते किंतु एतेसंन्यस्ता यद्यपि महावाक्योपदेशेनाधिकारिणः । अतएव वीरमार्गादि कुटीचकसंन्यासः प्रतीयते नतु एते बहूदकहंसपरमहंसादि संन्यासे ऽधिकारिणः । इति सिद्धान्तः ॥

न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ॥

## ( पुनरपि कूर्म्मपुराणे दर्शयति )

स्वधर्म्मपालको नित्यं ब्रह्मभूयाय कल्पते ॥ १२ ॥
ब्रह्मण्याध्याय कर्म्माणि निःसंगः कामवर्ज्जितः ॥
प्रसन्नेनैव मनसा कुर्व्वाणो यातितत्परं ॥ १३ ॥
ब्रह्मणादीयतेदेयं ब्रह्मणेसंप्रदीयते ॥
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥ १४ ॥
नाहंकर्त्ता सर्व्वमेतद्ब्रह्मैव कुरुते तथा ॥
एतद्ब्रह्मार्पणं प्रोक्त मृषिभिस्तत्वदर्शिभिः ॥ १५ ॥
प्रीणातु भगवानीशः कर्म्मणानेन शाश्वतः ॥
करोतिसततं वुद्ध्या ब्रह्मार्पणमिदंपरं ॥ १६ ॥
यद्वाफलानां संन्यासं प्रकुर्य्यात् परमेश्वरे ॥
कर्म्मणामेतदप्याहु र्ब्रह्मार्पण मनुत्तमम् ॥ १७ ॥
कार्य्यमित्येव यत्कर्म्म नियतं संगवर्ज्जितम् ॥
क्रियते विदुषाकर्म्म तद्भवेदपि मोक्षदम् ॥ १८ ॥
अथवायदि कर्म्माणि कुर्य्यान्नित्यान्यपि द्विजः ॥
अकृत्वा फलसंन्यासं वध्यते तत्फलेनतु ॥ १९ ॥

तस्मात् सर्व्वप्रयत्नेन त्यक्त्वा कर्म्माश्रितंफलम् ॥
अविद्वानपि कुर्व्वीत कर्म्माप्नोति चिरात्पदम् ॥ २० ॥
कर्म्मणाक्षीयते पापमैहिकं पौर्व्विकं तथा ॥
मनः प्रसादमन्वेति ब्रह्मविज्ञायते नरः ॥ २१ ॥
कर्म्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते ॥
ज्ञानश्चकर्म्मसहितं जायते दोषवर्ज्जितम् ॥ २२ ॥
तस्मात् सर्व्वप्रयत्नेन यत्र तत्राश्रमेरतः ॥
कर्म्माणीश्वरतुष्ट्यर्थं कुर्य्यान्नैष्कर्म्यमाप्नुयात् ॥ २३ ॥
सं प्राप्यपरमं ज्ञानं नैष्कर्म्यं तत् प्रसादतः ॥
एकाकी निर्म्ममः शान्तो जीवन्नेव विमुच्यते ॥ २४ ॥
वीक्षते परमात्मानं परंब्रह्म महेश्वरम् ॥
नित्यानन्दी निराभासःस्तस्मिन्नेव लयंव्रजेत् ॥ २५ ॥
तस्मात् सेवेत सततं कर्म्मयोगं प्रसन्नधीः ॥
तृप्तये परमेशस्य तत्पदं याति शाश्वतम् ॥ २६ ॥
एतद्वः कथितंसर्व्वं चातुराश्रम्य मुत्तमम् ॥
न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः ॥ २७ ॥

॥ इति कूर्म्मपुराणे चातुराश्रम्ये तृतीयोऽध्यायः ॥

( मनुसंहितायां षष्ठाऽध्याये संन्यासधर्म्ममाह )

चतुर्थमायुषो भागं त्यक्त्वासंगान् परिव्रजेत् ॥
आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ॥ १ ॥
भिक्षावलि परिश्रान्तः प्रव्रजन् प्रेत्यवर्द्धते ॥
ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् ॥ २ ॥

अनपाकृतमोक्षन्तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्म्मतः ॥ ३ ॥
इष्ट्वा च शक्तितोयज्ञैर्मनोमोक्षे निवेशयेत् ॥
अनधीत्य द्विजोवेदाननुत्पाद्य तथा सुतान् ॥ ४ ॥
अनिष्ट्वाचैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥
प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणां ॥ ५ ॥
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥
यो दत्त्वा सर्व्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ॥ ६ ॥
तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥
यस्मादण्वपि भूतानां द्विजान्नोत् पद्यते भयम् ॥ ७ ॥
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥
आगाराद भिनिष्क्रान्तः पवित्रोपचितोमुनिः ॥ ८ ॥
सामुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥
एकएव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ॥ ९ ॥
सिद्धिमेकस्य संपश्यन् नजहाति नहीयते ॥
अनग्निरनिकेतः स्याद्ग्राममन्नार्थं माश्रयेत् ॥ १० ॥
उपेक्षको ऽसंकसुको मुनिर्भावसमाहितः ॥
कपालं वृक्षमूलानि कुचेल मसहायता ॥ ११ ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितं ॥
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥ १२ ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिवेत् ॥
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ १३ ॥
अतिवादां स्तितिक्षेत नावमन्येत कञ्चन ॥

नचेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ १४ ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ॥
सप्तद्वारावकीर्णाच न वाचमनृतां वदेत् ॥ १५ ॥
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ १६ ॥
नचोत्पातनिमित्ताभ्यां न नक्षत्रांगविद्यया ॥
नानु शासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ १७ ॥
न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ॥
आकीर्णं भिक्षुकै र्वान्यैरागारमुपसंव्रजेत् ॥ १८ ॥
कॢप्तकेशनखश्मश्रुः पात्रीदण्डी कुसुम्भवान् ॥
विचरेन्नियतो नित्यं सर्व्वभूतान्यपीड़यन् ॥ १९ ॥
अतैजसानि पात्राणि तस्य स्यु र्निर्व्रणानि च ॥
तेषामद्भिः स्मृतंशौचं चमसानामिवाध्वरे ॥ २० ॥
अलावुदारुपात्रंच मृण्मयं वैदलं तथा ॥
एतानि यतिपात्राणि मनुः स्वायंभुवो ऽब्रवीत् ॥ २१ ॥

## ( विष्णुसंहितायां यतिधर्म्मः ९६ अध्याये )

अथ त्रिष्वाश्रमेषु पक्वकषायःप्राजापत्यामिष्टिं ॥
कृत्वा सर्व्ववेद सदक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात् ॥ १ ॥
आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥
सत्यपूतं वदेत्वाक्यं मनःपूतं समाचरेत् ॥ २ ॥
मरणं नाभिकामयेत् जीवितंच ॥ ४ ॥ अतिवादां स्तितिक्षेत
न कञ्चनावमन्येत ॥ इति ॥

## ( हारीतसंहितायां ६ अध्याये )

अतःपरं प्रवक्ष्यामि चतुर्थाश्रम मुत्तमम् ॥
श्रद्धया तदनुष्ठाय तिष्ठन् मुच्येत बन्धनात् ॥ १ ॥
एवं वनाश्रमे तिष्ठन् पातयं श्चैव किल्बिषम् ॥
चतुर्थमाश्रमं गच्छेत् संन्यासविधिना द्विजः ॥ २ ॥
दत्त्वा पितृभ्यो देवेभ्यो मानुषेभ्यश्च यत्नतः ॥
दत्त्वाश्राद्धं पितृभ्यश्च मानुषेभ्य स्तथाश्रमः ॥ ३ ॥
इष्टिं वैश्वानरीं कृत्वा प्राङ्मुखोदङ्मुखो ऽपिवा ॥
अग्निं स्वात्मनि संरोप्य मन्त्रवित् प्रव्रजेत् पुनः ॥ ४ ॥
ततःप्रभृति पुत्रादौ स्नेहालापादि वर्ज्जयेत् ॥
बन्धूनामभयं दद्यात् सर्व्वभूताभयं तथा ॥ ५ ॥
त्रिदण्डं वैणवं सम्यक्सन्ततं समपर्व्वकम् ॥
वेष्टितं कृष्णगोवालरज्जुमच्चतुरङ्गुलम् ॥ ६ ॥
शौचार्थं मानसार्थश्च मुनिभिः समुदाहृतं ॥
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम् ॥ ७ ॥
पादुकेचापि गृह्णीयात् कुर्य्यान्नान्यस्य संग्रहं ॥
एतानि तस्य लिङ्गानि यतेः प्रोक्तानि सर्व्वदा ॥ ८ ॥
संगृह्य कृतसंन्यासो गत्वा तीर्थमनुत्तमम् ॥
स्नात्वाचम्य च विधिवद्वस्त्रपूतेन वारिणा ॥ ६
तर्पयित्वा तु देवांश्च मन्त्रवद्भास्करं नमेत् ॥
आत्मनः प्राङ्मुखोमौनी प्राणायामत्रयं चरेत् ॥ १० ॥
गायत्रीं च यथाशक्तिजप्त्वाध्यायेत् परंपदम् ॥
स्थित्यर्थमात्मनो नित्यं भिक्षाटन मथाचरेत् ॥ ११ ॥

सायंकाले तु विप्राणां गृहाण्यभ्यन्वपद्यतु ॥
सम्यग् याचेच्च कवलं दक्षिणेन करेण वै ॥ १२ ॥
पात्रंवामकरेस्थाप्य दक्षिणेन तु शेषयेत् ॥
यावतान्नेन तृप्तिःस्यात्तावद्भैक्षं समाचरेत् इति ॥ १३ ॥
( संवर्त्तः ) चतुर्थमाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः ॥
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ॥ १४ ॥
वेदाभ्यासरतो नित्यमात्मविद्या परायणः ॥ इति ॥

## ( शङ्ख सहितायां १७ अध्याये )

कृत्वेष्टिं विधिवत् पश्चात् सर्व्ववेदसदक्षिणाम् ॥
आत्मन्यग्नीन् समारोप्य द्विजो ब्रह्माश्रमी भवेत् ॥ १ ॥
विधूमे न्यस्तमुशले व्यङ्गारे भुक्तवर्ज्जने ॥
अतीतपादसंपाते नित्यं भिक्षां यति श्चरेत् ॥ २ ॥
न व्यथेत तथालाभे यथालब्धेन वर्त्तयेत् ॥
न पाचयेत्तथैवान्नं नाश्नीयात् कस्यचिद्गृहे ॥ ३ ॥
मृण्मयालावुपात्राणि यतीनां तु विनिर्द्दिशेत् ॥
तेषां संमार्ज्जनाच्छुद्धि रद्भिश्चैव प्रकीर्त्तिता ॥ ४ ॥
कौपीनाच्छादनं वासो विभृयादसखश्चरन् ॥
शून्यागारनिकेतः स्याद्यत्रसायं गृहोमुनिः ॥ ५ ॥
दृष्टिपूतंन्यसेत् पादं वस्त्रपूतं जलंपिबेत् ॥
सत्यपूतं वदेद्वाक्यं मनः पूतं समाचरेत् ॥ ६ ॥
चन्दनै र्लिप्यतेऽङ्गं वा भस्मचूर्णै र्विगर्हितैः ॥
कल्याण मप्यकल्याणं तयोरेव न संश्रयेत् ॥ ७ ॥

सर्व्वभूतहितो मैत्रः समलोष्टाश्मकाञ्चनः ॥
ध्यानयोगरतो नित्यं भिक्षुर्यायात् परागतिं ॥ ८ ॥
जन्मना यस्तु निर्व्विण्णो मन्यते च तथैवच ॥
आधिभि र्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ॥ ९ ॥
अशुचित्वं शरीरस्य प्रियस्य च विपर्य्ययः ॥
गर्भवासे च वसति स्तस्मान्मुच्येत नान्यथा ॥ १० ॥
जगदेतन्निराक्रन्दं न तु सारमनर्थकम् ॥
भोक्तव्यमिति निर्व्विण्णो मुच्यते नात्रसंशयः ॥ ११ ॥
प्राणायामै र्द्देहदोषान् धारणाभिश्च किल्बिषान् ॥
प्रत्याहारैरसत् संगान् ध्यानेनेश्वरान् गुणान् ॥ १२ ॥
सव्याहृतिं सप्रणवान् गायत्रीं शिरसा सह ॥
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १३ ॥
मनसः संयमस्तज्ज्ञै र्धारणेति निगद्यते ॥
संहारश्चेन्द्रियाणाञ्च प्रत्याहारः प्रकीर्त्तितः ॥ १४ ॥
हृदयस्थस्य योगेन देव देवस्य दर्शनम् ॥
ध्यानं प्रोक्तं प्रवक्ष्यामि सर्व्वस्माद्योगतः शुभम् ॥ १५ ॥
हृदिस्थादेवताः सर्व्वा हृदिप्राणाः प्रतिष्ठिताः ॥
हृदिज्योतींषि भूयश्च हृदिसर्व्वं प्रतिष्ठितम् ॥ १६ ॥
स्वदेहमरणिं कृत्वा प्रणवंचोत्तरारणिम् ॥
ध्याननिर्म्मथनाभ्यां तु विष्णुं पश्येद्धृदिस्थितम् ॥ १७ ॥
हृद्यर्कश्चन्द्रमाः सूर्य्यः सोमोमध्ये हुताशनः ॥
तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्येस्थितोऽच्युतः ॥ १८ ॥
अणोरणीयान् महतो महीयानात्मास्य जन्तो र्निहितो गुहा-

यां । तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ १९ ॥

वासुदेव स्तमोऽन्धानां प्रत्यक्षं नैवजायते ॥
अज्ञानपटसंवीतै रिन्द्रियै र्विषये प्सुभिः ॥ २० ॥
एष वै पुरुषो विष्णु र्व्यक्ताव्यक्तःसनातनः ॥
एष धाता विधाता च पुराणो निष्कलः शिवः ॥ २१ ॥
विदेहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात् ॥
मन्त्रैर्विदित्वा न बिभेति मृत्योर्नान्यःपन्थाविद्यतेऽयनाय ॥२२॥

## ( दक्षसंहितायां ७ अध्याये )

सत्त्वोत्कटाः सुराश्चापि विषयेण वशीकृताः ॥
प्रमादिभिः क्षुद्रसत्त्वै र्म्मानुषैरत्रका कथा ॥ १ ॥

### ( यतीनां योगसाधनविधिः )

लोकोवशीकृतो येन येन चात्मावशी कृतः ॥
इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहम् ॥ २ ॥
प्राणायाम स्तथाध्यानं प्रत्याहार स्तु धारणा ॥ ३ ॥
तर्कश्चैव समाधिश्च षडंगो योगउच्यते ॥ ३ ॥
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ॥
व्रतैर्यज्ञै स्तपोभिश्च नयोगः कस्यचिद्भवेत् ॥ ४ ॥
न च पथ्याशनाद्योगो न नासाग्रनिरीक्षणात् ॥
नच शास्त्रातिरिक्तेन शौचेन स भवेत् क्वचित् ॥ ५ ॥
अभियोगात्तथाभ्यासात्तस्मिन्नेव तु निश्चयात् ॥
पुनः पुनश्च निर्व्वेदाद्योगः सिध्यति नान्यथा ॥ ६ ॥

न मौनमन्त्रकुहकै रनेकैः सुकृतै स्तथा ॥
लोकयात्रा वियुक्तस्य योगो भवति कस्यचित् ॥ ७ ॥
आत्मचिन्ता विनोदेन शौचक्रीडनकेनच ॥
सर्व्वभूतसमत्वेन योगः सिद्ध्यति नान्यथा ॥ ८ ॥
यश्चात्मनिरतो नित्यमात्म क्रीडस्तथैवच ॥
आत्मनिष्ठश्च सतत मात्मन्येव स्वभावतः ॥ ९ ॥
रतश्चैव स्वयंतुष्टः सन्तुष्टो नान्यमानसः ॥
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति ॥ १० ॥
सुप्तोऽपि योगयुक्तः स्यज्जाग्रच्चापि विशेषतः ॥
ईदृक् चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम् ॥ ११ ॥
य आत्मव्यतिरेकेण द्वितीयं नैवपश्यति ॥
ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः ॥ १२ ॥
विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति ॥
यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत् ॥ १३ ॥
विषयेन्द्रियसंयोगं केचिद्योगं वदन्ति हि ॥
अधर्म्मो धर्म्मरूपेण गृहीत स्तै रपण्डितैः ॥ १४ ॥
मनसश्चात्मनश्चैव संयोगं च तथापरे ॥
उक्तानामधिकाह्येते केवलं योगवञ्चिताः ॥ १५ ॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ॥
एकी कृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥ १६ ॥
कषायमोहविक्षेप लज्जाशंकादि चेतसः ॥
व्यापारा स्तु समाख्याता स्तान् जित्वा वशमानयेत् ॥ १७ ॥
कुटुंबैः पंचभिर्ग्राम्यैः षष्ठस्तत्र महत्तरः ॥

देवासुर मनुष्यै स्तु स जेतुं नैव शक्यते ॥ १८ ॥
बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते ॥
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥ १६ ॥
बहिर्मुखानि सर्व्वाणि कृत्वा चाभिमुखानिवै ॥
सर्व्वञ्चैवेन्द्रियग्रामं मनश्चात्मनि योजयेत् ॥ २० ॥
सर्व्वभावविनिर्मुक्तः क्षेत्रज्ञं ब्रह्मणिन्यसेत् ॥
एतद्ध्यानञ्च योगश्च शेषाः स्यु र्ग्रन्थविस्तराः ॥ २१ ॥
त्यक्त्वा विषय भोगांश्च मनोनिश्चलतां गतम् ॥
आत्मशक्तिस्वरूपेण समाधिः परिकीर्त्तितः ॥ २२ ॥
चतुर्णां सान्निकर्षेण पदं यत्तदशाश्वतम् ॥
द्वयो स्तु सन्निकर्षेण शाश्वतं ध्रुवमक्षयम् ॥ २३ ॥
यन्नास्ति सर्व्वलोकस्य तदस्तीति विरुध्यते ॥
कथ्यमानं तथान्यस्य हृदये नावतिष्ठते ॥ २४ ॥
स्वयं वेद्यं हि तद्ब्रह्म कुमारी मैथुनं यथा ॥
अयोगी नैव जानाति जातान्धो हि यथा घटम् ॥ २५ ॥
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत् ॥
तत् सूक्ष्मत्वादनिर्देश्यं परब्रह्म सनातनम् ॥ २६ ॥
बुधस्त्वाभरणं भावं मनसालोचनं यथा ॥
मन्यते स्त्री च मूर्खश्च तदेव बहुमन्यते ॥ २७ ॥
तस्मात् त्यक्तकषायेण कर्त्तव्यं दण्डधारणम् ॥
इतरस्तु न शक्नोति विषयै रभिभूयते ॥ २८ ॥
न स्थिरं क्षणमप्येक मुदकं हि यथोर्म्मिभिः ॥
वाताहतं तथाचित्तं तस्मात् तस्य न विश्वसेत् ॥ २६ ॥

त्रिदण्डव्यपदेशेन जीवन्ति वहवो नराः ॥
यो हि ब्रह्म न जामाति न त्रिदण्डार्ह एव सः ॥ ३० ॥
ब्रह्मचर्य्यं सदा रक्षेदष्टधा मैथुनं पृथक् ॥
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ ३१ ॥
संकल्पो ऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः ॥ ३२ ॥
न ध्यातव्यं न वक्तव्यं न कर्त्तव्यं कदाचन ॥
एतैः सर्व्वैः सुसपन्नो यतिर्भवति नेतरः ॥ ३३ ॥
पारिव्राज्यं गृहीत्वा च यो धर्म्मे नावतिष्ठते ॥
श्वपदेनांकयित्वा तं राजा शीघ्रं प्रवासयेत् ॥ ३४ ॥
एकोभिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ॥
त्रयोग्राम स्तथाख्यात ऊर्द्ध्वन्तु नगरायते ॥ ३५ ॥
नगरं हि न कर्त्तव्यं ग्रामो वा मिथुनं तथा ॥
एतत्त्रयं प्रकुर्व्वाणः स्वधर्माच्च्यवते यतिः ॥ ३६ ॥
राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम् ॥
स्नेहपैशुन्य मात्सर्य्यं सन्निकर्षादसंशयम् ॥ ३७ ॥
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ॥
एते चान्ये च वहवः प्रपञ्चाः कुतपस्विनाम् ॥ ३८ ॥
ध्यानं शौचं तथाभिक्षा नित्यमेकान्तशीलता ॥
भिक्षोश्चत्वारि कर्म्माणि पंचमो नोपपद्यते ॥ ३९ ॥
तपोजपैः कृशीभूतो व्याधितो ऽवसथावहः ॥
वृद्धो ग्रहगृहीतश्च यश्चान्यो विकलेन्द्रियः ॥ ४० ॥
नीरुजश्च युवाचैव भिक्षुर्नावसथावहः ॥

स दूषयति तत् स्थानं बुधान् पीड़यतीति च ॥ ४१ ॥
नीरुजश्च युवाचैव ब्रह्मचर्य्याद्विनश्यति ॥
ब्रह्मचर्य्याद्विनष्टस्तु कुलञ्चैवतु नाशयेत् ॥ ४२ ॥
वसन्नावसथे भिक्षु मैथुनं यदि सेवते ॥
तस्यावसथनाथस्य मूलान्यपि निकृन्तति ॥ ४३ ॥
आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत् ॥
किंतस्यान्येन धर्म्मेण कृतकृत्यो ऽभिजायते ॥ ४४ ॥
सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम् ॥
स निर्दहति तत्सर्व्वमेकरात्रोषितो यतिः ॥ ४५ ॥
योगाश्रमपरिश्रान्तं यस्तु भोजयते यतिम् ॥
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम् ॥ ४६ ॥
यस्मिन्देशे वसेद्योगी ध्यानयोगाविचक्षणः ॥
सोऽपिदेशो भवेत्पूतः किंपुनस्तस्य बान्धवाः ॥ ४७ ॥
द्वैतंचैव तथाद्वैतं द्वैताद्वैतं तथैवच ॥
न द्वैतं नापि चाद्वैतमितो तत् परमार्थिकम् ॥ ४८ ॥
नाहं नैवान्यसंबन्धो ब्रह्मभावेन भावितः ॥
ईदृशायामवस्थायामवाप्यं परमं पदम् ॥ ४९ ॥
द्वैतपक्षे समास्था ये अद्वैते तु व्यवस्थिताः ॥
अद्वैतिनां प्रवक्ष्यामि यथा धर्म्मः सुनिश्चितः ॥ ५० ॥
तत्रात्मव्यतिरेकेण द्वितीयं यदि पश्यति ॥
ततः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थसंचयाः ॥ ५१ ॥
दक्षशास्त्रं यथाप्रोक्त मशेषाश्रममुत्तमम् ॥
अधीयन्ते तु ये विप्रा स्ते यान्त्यमरलोकताम् ॥ ५२ ॥

इदंतु यः पठेद्भक्त्या शृणुयाद्धमो ऽपिवा ॥
स पुत्रपौत्रपशुमान् कीर्तिञ्च समवाप्नुयात् ॥ ५३ ॥
श्रावयित्वात्विदं शास्त्रं श्राद्धकाले ऽपि वा द्विजः ॥
अक्षयंभवतिश्राद्धं पितृभ्यश्चोपजायते इति ॥ ५४ ॥

## दाक्षे धर्म्मशास्त्रे सप्तमोऽध्यायः समाप्तः ।

## ( गौतमसंहितायां तृतीयाऽध्याये )

उत्तरेषांचैतदविरोधी अनिचयो भिक्षुरूर्द्ध्वरेताः ॥
ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममियात् ॥ १ ॥
जघन्यमनिवृत्तं चरेत् निवृत्ताशी वाक्चक्षुःकर्म्मसंयतः ॥
कौपीनाच्छादनार्थं वासो विभृयात् ॥ २ ॥
प्रहीणमेके निर्णेजनाविप्रयुक्तं । ओषधिवनस्पतीनामङ्गमु-
पाददीत ॥ न द्वितीयामुपहर्त्तुं रात्रिं ग्रामे वसेत् ॥ ३ ॥
मुण्डः शिखीवा वर्ज्जयेज्जीववधं । समो भूतेषु हिंसानुग्रहयो-
रनारंभी ॥ इति ॥

## ( वसिष्ठसंहितायां दशमाऽध्याये )

( परिव्राजकधर्म्मः ) परिव्राजकः सर्व्वभूताभयदक्षिणां
दत्त्वा प्रतिष्ठेत् ॥ १ ॥ अथाप्युदाहरन्ति ॥
अभयं सर्व्वभूतेभ्यो दत्त्वा चरति यो द्विजः ॥
तस्यापि सर्व्वभूतेभ्यो न भयं जातु विद्यते ॥ २ ॥
अभयं सर्व्वभूतेभ्यो दत्त्वा यश्चुवि वर्त्तते ॥
हन्ति जातानजातांश्च प्रतिगृह्णाति यस्य च ॥ ३ ॥
संन्यसेत् सर्व्वकर्म्माणि वेदमेकं न संन्यसेत् ॥

वेदसंन्यासतः शूद्र स्तस्माद्वेदं न संन्यसेत् ॥ ४ ॥
एकाक्षरं परंब्रह्म प्राणायामः परन्तपः ॥
उपवासात् परंभैक्षं दया दानाद्विशिष्यते ॥ ५ ॥
मुण्डोऽममत्व परिग्रहः सप्तागाराण्यसंकल्पि-
तानि चरेद्भैक्षं विधूमे सन्नमुषले एकशाटीपरि-
वृतोऽजिनेन वा गोप्र लूनै स्तृणैर्वेष्टितशरीरः ।
स्थण्डिलशाय्यनित्यां वसतिं वसेत् ॥ ६ ॥
ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा मनसाज्ञानमधीयानः
अरण्यनित्यो न ग्राम्यपशूनां संदर्शनेविहरेत् ॥ ७ ॥

[ अथाप्युदाहरन्ति ]

अरण्यनित्यस्य जितेन्द्रियस्य सर्व्वेन्द्रियप्रीतिनिवर्त्तकस्य।
अध्यात्मचिन्ता गतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥८॥
अव्यक्तलिङ्गोऽव्यक्ताचारोऽनुन्मत्त उन्मत्तवेशः ॥ ९ ॥

[ अथाप्युदाहरन्ति ]

न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोके ग्रहणेरतस्य
नभोजनाच्छादन तत्परस्य न चापिरम्यावसथप्रियस्य॥१०॥
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ॥
अनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ ११ ॥
अलाभेन विषादी स्याल्लाभे चैव न हर्षयेत् ॥
प्राणयात्रिकमात्रःस्यात् मात्रासंगाद्विनिर्गतः ॥ १२ ॥
न कुट्यां नोदके संगे नचैले न त्रिपुष्करे ॥
नागारे नासने नान्ते यस्य वै मोक्षवित्तमः ॥ १३ ॥

ब्राह्मणकुले वा यल्लभेत् तद्भुञ्जीत सायं मधुमांससर्पिर्वर्ज्जम् ॥ यतीन् साधून् वा गृहस्थान् सायं प्रातश्चतृप्येत् । ग्रामेवसेद जिह्मो ऽशरणो ऽसंकसुकः । नचेन्द्रियसंयोगं कुर्व्वीत केनचित् उपेक्षकः सर्व्वभूतानां हिंसानुग्रहपरिहाणपैशुन्यमत्सराभिमानाहंकाराश्रद्धानार्ज्जवात्मस्तवपरगर्हादंभलोभमोहक्रोधासूयाविवर्ज्जितः सर्व्वाश्रमिणां धर्म्मिष्ठो यज्ञोपवीत्युदककमण्डलुहस्तः शुचिर्व्राह्मणो वृषलान्नपानवर्ज्जी नहीयते ब्रह्मलोकात् ब्रह्मलोकात् ॥ १४ ॥

## ( वसिष्ठसंहितायां दशमो ऽध्यायः समाप्तः )

## [ इति ऊनविंशति संहितायामुक्तम्॥ ]

## (अथेदानीं पौराणिकमतं यतिधर्म्ममाह)

ब्रह्मपुराणं प्रथमं पद्मं वैष्णवमेवच ॥
शैवं भागवतं चैव भविष्यं नारदादिकम् ॥ १ ॥
मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्त्त मेवच ॥
लैङ्गंतथाचवाराहं स्कन्दं वामनमेवच ॥ २ ॥
कौर्म्मं मत्स्यं गारुडंच वायवीयमनन्तरम् ॥
अष्टादशं समुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥ ३ ॥

## इति अष्टादश महापुराणान्युक्तानि

## ( अथाष्टादशोप पुराणान्याह )

सनत्कुमारं प्रथमं नारसिंहं नारदीयम् ॥
शिवंचैव दौर्वाससं कापिलं मानवं ॥
चौशनसं वारुणं कालिकाख्यंच साम्बं ॥

नन्दिकृतं सौरं पाराशरंआदित्यं माहेश्वरं ॥
भागवतं वाशिष्ठञ्च शौनकं ॥
एतान्युपपुराणानि कथितानि महात्मभिः ॥ इति ॥

॥ ब्रह्मपुराणे १० अध्याये ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥
नालमेकस्य तत्सर्व्वमिति कृत्वा नमुह्यति ॥ १ ॥
यदा भावं न कुरुते सर्व्वभूतेषु पापजम् ॥
कर्म्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ २ ॥
यदान्येभ्यो न विभेति यदाचास्मान्न विभ्याति ॥
यदानेच्छाति न द्वेष्टि ब्रह्मसंपद्यते तदा ॥ ३ ॥

[ ब्रह्मपुराणे १८ अध्याये ]

वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥
गृहस्थाजनकाद्याश्च राज्यन्ते योगधर्म्मिणः ॥ ४ ॥
वालखिल्यादयश्चैव ऋषयो ब्रह्मवादिनः ॥
वानप्रस्थाश्च व्यासाद्या भिक्षुः पंचाशिखस्तथा ॥ ५ ॥
योगमास्थाय सर्व्वे ते प्रविष्टाः सूर्य्यमण्डलम् ॥
शुको व्याससुतः श्रीमान् योगधर्म्ममवाप्य सः ॥ ६ ॥
आदित्यकिरणान्गत्वा ह्यपुनर्योगमास्थिताः ॥
शब्दमात्रे श्रुतिसुखा ब्रह्मविष्णुशिवादयः ॥ ७ ॥
प्रत्यक्षोयं परोदेवः सूर्य्यास्तिमिरनाशनः ॥
तस्मादन्यत्र भक्तिर्हि न कार्य्या शुभमिच्छता ॥ ८ ॥

( ब्रह्मपुराणे १११ अध्याये चतुर्थाश्रमधर्म्मं दर्शयति ॥)

चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते च मनीषिभिः ॥

तस्य स्वरूपं वदतो बुध्यध्वं मुनिसत्तमाः ॥ ९ ॥
पुत्रद्रव्यकलत्रेषु त्यजेत् स्नेहं द्विजोत्तमाः ॥
चतुर्थमाश्रमस्थानं गच्छेन्निर्द्धूतमत्सरः ॥ १० ॥
त्रैवर्णिकां स्त्यजेत् सर्व्वानारंभान् द्विजसत्तमाः ॥
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ॥ ११ ॥
जरायुजाण्डजादीनां वाङ्मनः कर्म्मभिः क्वचित् ।
युक्तः कुर्व्वीत नद्रोहं सर्व्वसंगांश्च वर्ज्जयेत् ॥ १२ ॥
एकरात्रिस्थिति र्ग्रामे पञ्चरात्रिस्थितिःपुरे ॥
तथातिष्ठेद्यथा प्रीतिर्दोषोवास्य न जायते ॥ १३ ॥
प्राणयात्रानिमित्तंच व्यङ्गारे भुक्तिवर्ज्जने ॥
काले प्रशस्तग्रामेषु भिक्षार्थं पर्य्यटेद्गृहान् ॥ १४ ॥
अलाभेन विषादः स्याल्लाभत्वे न तु हर्षयेत् ॥
प्राणयात्रिकमात्रं स्यान्मात्रासङ्गाद्विनिर्गतः ॥ १५ ॥
अभिपूजितलाभश्च यतिर्मुक्तोपि बध्यते ॥
कामः क्रोध स्तथादर्पो लोभमोहादयश्च ये ॥ १६ ॥
तांस्तुदोषान् परित्यज्य परब्रह्ममना भवेत् ॥
अभयं सर्व्वसत्वेभ्यो भयमुत्पद्यते क्वचित् ॥ १७ ॥
कृत्वाग्निहोत्रं स्वशरीरसंस्थं शरीरमग्निं स्वमुखेजुहोति ॥
विप्रास्तुभैक्ष्योपगतैर्हविर्भि श्चिताग्निनासव्रजतिस्मलोकान् ॥
मोक्षाश्रमं यश्चरते यथोक्तं शुचिश्च संकल्पितबुद्धियुक्तः ॥
अनिन्धनंज्योतिरिव प्रशान्तं सब्रह्मलोकं जयति द्विजातिः १९

इतिश्री ब्रह्मपुराणे व्यासर्षि संवादे वर्णाश्रम धर्म्मवर्णनंनाम
द्वादशोत्तरशततमोऽध्यायः ॥

[पद्मपुराणेस्वर्गखण्डे३१अध्याये] संन्यासधर्म्ममाह

( व्यासउवाच )

एवं वनाश्रमोस्थित्वा तृतीयं भागमायुषः ।
चतुर्थं चायुषोभागं संन्यासेन नयेत्क्रमात् ॥ १ ॥
ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोपरे ॥
कर्म्मसंन्यासिनस्त्वन्ये त्रिविधाः परिकीर्त्तिताः ॥ २ ॥
यः सर्व्वत्र विनिर्म्मुक्तो निर्द्वन्द्वश्चैव निर्भयः ॥
प्रोच्यते ज्ञानसंन्यासी आत्मन्येव व्यवस्थितः ॥ ३ ॥
वेदमेवाभ्यसेन्नित्यं निराशी र्निष्परिग्रहः ॥
प्रोच्यते वेदसंन्यासी मुमुक्षु र्व्विजितेन्द्रियः ॥ ४ ॥
यस्त्वग्निमात्मसात्कृत्वा ब्रह्मार्पणपरोद्विजः ॥
ज्ञेयः स कर्म्मसंन्यासी महायज्ञपरायणः ॥ ५ ॥
त्रयाणामपि चैतेषां ज्ञानीत्वभ्यधिकोमतः ॥
न तस्य विद्यतेकार्य्यं न लिङ्गं वा विपश्चितः ॥ ६ ॥
निर्म्ममो निर्भयः शान्तो निर्द्वन्द्वः पर्णभोजनः ॥
जीर्णकौपीनवासाःस्यान्नग्नो वा ज्ञानतत्परः ॥ ७ ॥
ब्रह्मचारी जिताहारो ग्रामादन्नं समाहरेत् ॥
अध्यात्मरतिरासीत निरपेक्षो निरामिषः ॥ ८ ॥
आत्मनैव सहायेन सुखार्थं विचरेदिह ॥
नाभिनन्देत मरणं नाभिनन्देत जीवनम् ॥ ९ ॥
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥
नाध्येतव्यं नवक्तव्यं श्रोतव्यं न कदाचन ॥ १० ॥

एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ॥
एकवासो ऽथवा विद्वान्कौपीनाच्छादनोऽपि वा ॥ ११ ॥
मुण्डी शिखी वाथ भवेत् त्रिदण्डी निष्परिग्रहः ॥
कषायवासाः सततं ध्यान योगपरायणः ॥ १२ ॥
ग्रामान्ते वृक्षमूले वा वसेद्देवालये ऽपिवा ॥
समः शत्रौ तथामित्रे तथा मानापमानयोः ॥ १३ ॥
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेत् क्वचित् ॥
य स्तु मोहेन वान्यस्मादेकान्नादी भवेद् यतिः ॥ १४ ॥
न तस्य निष्कृतिः काचिद्धर्म्मशास्त्रेषु दृश्यते ॥
रागद्वेष वियुक्तात्मा समलोष्टाश्मकाञ्चनः ॥ १५ ॥
प्राणिहिंसानिवृत्तश्च मौनीस्यात् सर्व्वनिस्पृहः ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ १६ ॥
सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः ॥ १७ ॥
स्नात्वा शौचवृतो नित्यं कमण्डलुकरःशुचिः ॥
ब्रह्मचर्य्यरतो नित्यं वनवासरतो भवेत् ॥ १८ ॥
मोक्षशास्त्रेषु निरतो ब्रह्मसूत्री जितेन्द्रियः ॥
दम्भाहङ्कारनिर्मुक्तो निर्द्दोषोसत्यऽवर्ज्जितः ॥ १९ ॥
आत्मज्ञानगुणोपेतो यति र्मोक्षमवाप्नुयात् ॥
अभ्यसेत् सततं देवं प्रणवाख्यं सनातनम् ॥ ॥ २० ॥
स्नात्वाचम्य विधानेन शुचिर्द्देवालयादिषु ॥
यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः ॥ २१ ॥
धौतकाषायवसनो भस्माच्छन्न तनुरुहः ॥

अधियज्ञं ब्रह्मजपेदाधिदैविकमेवच ।। २२ ।।
आध्यात्मिकंच सततं वेदान्ताभिहितं च यत् ।।
पुत्रेषु वाथ निवसन् ब्रह्मचारी यतिर्म्मुनिः ।। २३ ।।
वेदमेवाभ्यसेन्नित्यं स याति परमांगतिम् ।।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं तपः परम् ।। २४ ।।
क्षमादया च सन्तोषो व्रतान्यस्य विशेषतः ।।
वेदान्तज्ञाननिष्ठो वा पञ्चयज्ञान् समाहितः ।। २५ ।।
कुर्य्यादहरहः स्नात्वा भिक्षार्थेनैव तेन हि ।।
होममन्त्राञ्जपेन्नित्यं काले काले समाहितः ।। २६ ।।
स्वाध्यायं चान्वहं कुर्य्यात् सावित्रीः सन्ध्ययोर्ज्जपेत् ।।
ध्यायीत सततं देवमेकान्ते परमेश्वरम् ।। २७ ।।
एकान्नं वर्ज्जयेन्नित्यं कामक्रोधं परिग्रहम् ।।
एकवासा द्विवासाऽथ शिखीयज्ञोपवीतवान् ।। २८ ।।
कमण्डलुकरोविद्वां स्त्रिदण्डो याति तत्परम् ।।
एवं त्वाश्रमनिष्ठाना यतीनां नियतात्मनाम् ।। २९ ।।
अलावुदारुपात्रं च मृण्मयं वैणवं तथा ।।
चत्वारि यतिपात्राणि मनुराह प्रजापतिः ।। ३० ।।
प्राग्रात्रे मध्यरात्रे च पररात्रे तथैव च ।।
सन्ध्यासूक्ति विशेषेण चिन्तये न्नित्यमीश्वरम् ।। ३१ ।।
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसम्भवम् ।।
आत्मानं सर्व्वभूतानां परस्तात्तमसः स्थितम् ।। ३२ ।।
सर्व्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम् ।।
प्रधानपुरुषातीत माकाशं दहनं शिवम् ।। ३३ ।।

तदन्तं सर्व्वभावानामीश्वरं ब्रह्मरूपिणम् ॥
ओँकारान्तेऽथ चात्मानं समाप्य परमात्मनि ॥ ३४ ॥
आकाशे देवमीशानं ध्यायेदाकाशमध्यगम् ॥
कारणं सर्व्वभावानामानन्दैक समाश्रयम् ॥ ३५ ॥
पुराणपुरुषं विष्णुं ध्यायेन्मुच्येतवन्धनात् ॥
यद्वा गुहादौ प्रकृतौ जगत् सन्मोहनालये ॥ ३६ ॥
विचिन्त्यं परमंव्योम सर्व्वभूतैककारणम् ॥
जीवनं सर्व्वभूतानां यत्र लोकः प्रलीयते ॥ ३७ ॥
आनन्दं ब्रह्मणः सूक्ष्मं यत्पश्यंति मुमुक्षवः ॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ॥ ३८ ॥
अनन्तं सत्यमीशानं विचिन्त्यासीत वाग्यतः ॥
गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीरितम् ॥ ३९ ॥
योऽत्र तिष्ठेत् सदानेन सोऽश्नुते योगमैश्वरम् ॥
तस्माज्ज्ञानरतो नित्यमात्मविद्यापरायणः ॥ ४० ॥
ज्ञानं समभ्यस्येद्ब्रह्म येन मुच्यते बन्धनात् ॥
मत्वा पृथक्कमात्मानं सर्व्वस्मादेव केवलम् ॥ ४१ ॥
आनन्दमक्षरं ज्ञानं ध्यायेत च ततः परम् ॥
यस्माद्भवन्ति भूतानि यज्ज्ञात्वा नेहजायते ॥ ४२ ॥
स तस्मादीश्वरो देवः परस्ताद्योऽधितिष्ठति ॥
यदन्तरेतद्गमनं शाश्वतं शिवमव्ययम् ॥ ४३ ॥
य इदं स्वपरोक्ष स्तु सदेवःस्यान्महेश्वरः ॥
व्रतानि यानि भिक्षूणां तथैवायं व्रतानि च ॥ ४४ ॥
एकैका तिक्रमेतेषां प्रायश्चित्तं विधीयते ॥

अथ ब्रह्मध्यानमाह पद्मपुराणे ॥

यद्ब्रह्मपरमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् ॥ ४५ ॥
यो ऽन्तरात्मा परंब्रह्म स विज्ञेयो महेश्वरः ॥
एष देवो महादेवः केवलः परमः शिवः ॥ ४६ ॥
तदेवाक्षरमद्वैतं तन्नित्यं परमं पदम् ॥
तस्मान्महीयतेदेव स्वधाम्नि ज्ञानसंज्ञिते ॥ ४७ ॥
आत्मयोगात्मके तत्त्वे महादेव स्ततः स्मृतः ॥
नान्यं देवं महादेवाद् व्यतिरिक्तं प्रपश्यति ॥ ४८ ॥
तमेवात्मानमन्वेति यः स याति परंपदम् ॥
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ॥ ४९ ॥
न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥
एकमेव परंब्रह्म विज्ञेयं तत्त्वमव्ययम् ॥ ५० ॥
स देवस्तु महादेवो नैतद्विज्ञाय वध्यते ॥
तस्माद्यतेत नियतं यतिः संयतमानसः ॥ ५१ ॥
ज्ञान योगरतः शान्तो महादेवपरायणः ॥
एषवः कथितो विप्रा यतीनामाश्रमः शुभः ॥ ५२ ॥
पितामहेन मुनिना विभुना पूर्व्वमीरितः ॥
नापुत्र शिष्ययोगीभ्यो दद्यादिदमनुत्तमम् ॥ ५३ ॥
ज्ञानं स्वयम्भुवा प्रोक्तं याति धर्म्माश्रयं शिवम् ॥

इति यति नियमानामेतदुक्तं विधानं सुरवरपरितोषे यद्भवेदेकहेतुः ॥ न भवति पुनरेषामुद्भवो वा विनाशः । प्रणिहित मनसो ये नित्यमेवा चरन्ति ॥ ५४ ॥
(इतिपद्मे स्वर्गखण्डे यतिनियमवर्णनं नाम एकत्रिंशो ऽध्यायः

## विष्णुपुराणे यतिधर्म्ममाह ९ अध्याये

यस्त्वेतां निहितश्चर्य्यां वानप्रस्थश्चरेन्मुनिः ॥
स दहत्यग्निवद्दोषान् जयेल्लोकां श्च शाश्वतान् ॥ १ ॥
चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनिषीभिः ॥
तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि ॥ २ ॥
पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप ॥
चतुर्थमाश्रमं स्थानं गच्छेन्निर्धूत मत्सरः ॥ ३ ॥
त्रैवर्गिकां स्त्यजेत् सर्व्वानारम्भान वनीपते ॥
मित्रादिषु समोमैत्रः समस्तेष्वेव जन्तुषु ॥ ४ ॥
जरायुजाण्डजादीनां वाङ्मनः कर्म्मभिः क्वचित् ॥
युक्तः कुर्व्वीत न द्रोहं सर्व्वसङ्गां श्च वर्ज्जयेत् ॥ ५ ॥
एकरात्रस्थितिर्ग्रामे पञ्चरात्र स्थितिःपुरे ॥
तथातिष्ठद्यथा प्रीतिर्द्वेषो वास्य न जायते ॥ ६ ॥
कामःक्रोधस्तथादर्प मोहलोभादयश्च ये ॥
तां स्तु दोषान् परित्यज्य परिव्राट् निर्म्ममो भवेत् ॥ ७ ॥
अभयं सर्व्वसत्त्वेभ्यो दत्वा यश्चरते मुनिः ॥
न तस्य सर्व्व सत्त्वेभ्यो भयमुत् पद्यते क्वचित् ॥ ८ ॥
कृत्वाग्निहोत्रं स्वशरीर संस्थं शारीरमग्निं स्वमुखेजुहोति ॥
विप्रस्तु भिक्षोपगतैर्हविर्भि श्चिताग्निना स व्रजति स्म लोकान् ॥
मोक्षाश्रमं यश्चरते यथोक्तं शुचिः स्व संकल्पित बुद्धियुक्तः ॥
अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं जयति द्विजातिः ॥१०॥

इतिश्री विष्णुपुराणे तृतीयांशे यतिधर्म्मो नाम नवमो ऽध्यायः ॥

## श्रीशिवमहापुराणे कैलाससंहितायामुत्तरभागे ऽष्टमाध्याये सन्यासप्रकरणमाह

### ( श्रीसुब्रह्मण्य उवाच )

साधुसाधु महाभाग वामदेव मुनीश्वर ॥
त्वमतीव शिवभक्तः शिवज्ञानवतांवर ॥ १ ॥
मन्त्रादि षड्विधार्थानामर्थोपन्यासमार्गतः ॥
समष्टिव्यष्टि भावार्थं वक्ष्यामि प्रणवात्मकम् ॥ २ ॥
उपदेशक्रमो ह्यादौ वक्तव्यः श्रूयतामयम् ॥
चातुर्व्वर्ण्यं हि लोकेऽस्मिन् प्रसिद्धं मानुषे मुने ॥ ३ ॥
त्रैवर्णिकानामेवात्र श्रुत्याचार संमन्वयः ॥
शुश्रूषामात्रसाराहि शूद्राः श्रुतिवहिष्कृताः ॥ ४ ॥
त्रैवर्णिकानां सर्व्वेषां स्वस्वाश्रमरतात्मनाम् ॥
श्रुतिस्मृत्युदिताधर्म्मोऽनुष्ठेयो नापरः क्वचित् ॥ ५ ॥
श्रुतिस्मृत्युदितं कर्म्म कुर्व्वन् सिद्धिमवाप्स्यति ॥
वर्णाश्रमाचार पुष्पैरभ्यर्च्य परमेश्वरम् ॥
तत् सायुज्यंगताःसर्व्वे वहवो मुनिसत्तमाः ॥
ब्रह्मचर्य्येण ऋषयो देवयज्ञक्रियाध्वना ॥ ७ ॥
पितरः स्वधयातृप्ता इति हि श्रुतिरब्रवीत् ॥
एवं ऋणत्रयान्मुक्तो वानप्रस्थाश्रमं गतः ॥ ८ ॥
शीतोष्णसुखदुःखादि सहिष्णु र्विजितेन्द्रियः ॥
तपस्वी र्विजिताहारो यमाद्यं योगमभ्यसेत् ॥ ९ ॥
यथा दृढतराबुद्धिरविचाल्या भवेत्तथा ॥

एवं क्रमेणशुद्धात्मा सर्व्वकर्म्माणि विन्यसेत् ॥ १० ॥
संन्यस्य सर्व्वकर्म्माणि ज्ञानपूजापरो भवेत् ॥
सा हि साक्षाच्छिवैक्येन जीवन्मुक्तिफलप्रदा ॥ ११ ॥
सर्व्वशास्त्रार्थतत्वज्ञं वेदान्तज्ञानपारगम् ॥
आचार्य्यमुपसंगम्य यतिं र्मतिमतां वरम् ॥ १२ ॥
दीर्घदण्डप्रणामाद्यैः स्तोषयेद्यत्नतः सुधीः ॥
यो गुरुः स शिवः प्रोक्तोयः शिवः स गुरुः स्मृतः ॥ १३ ॥
इतिनिश्चित्यमनसा स्वविचारं निवेद्य च ॥
लब्धानुज्ञस्तु गुरुणा द्वादशाहं पयोव्रती ॥ १४ ॥
शुक्लपक्षे चतुर्थ्यां वा दशम्यां वा विधानतः ॥
प्रातःस्नात्वा विशुद्धात्मा कृतनित्यक्रियः सुधीः ॥१५॥ इति

( भागवते एकादशस्कन्धेऽष्टादशाध्याये )

[ यतिधर्म्मनिरूपणमाह ]

॥ श्रीभगवानुवाच ॥

अग्निहोत्रञ्च दर्शश्च पूर्णमासश्च पूर्व्ववत् ॥
चातुर्म्मास्यानि च मुनेराम्नातानि च नैगमैः ॥ १ ॥
एवं चीर्णनतपसा मुनिर्धर्म्मनि संयतः ॥
मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ २ ॥
यदासौ नियमे कल्पो जरया जातवेपथुः ॥
आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्निंसमाविशेत् ॥ ३ ॥
यदा कर्म्मविपाकेषु लोकेषु निरयात्मसु ॥
विरागो जायते सम्यक् न्यस्ताग्निः प्रव्रजेत्ततः ॥४॥

इष्ट्वायथोपदेशं मां दत्वा सर्व्वस्वमृत्विजे ॥
अग्नीन् स्वप्राणआवेश्य निरपेक्षः परिव्रजेत् ॥ ५ ॥
विप्रस्य वै संन्यसतो देवा दारादि रूपिणः ॥
विघ्नान् कुर्व्वत्ययं ह्यस्मान्नाक्रम्य समियात् परम् ॥ ६ ॥
विभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥
त्यक्तं न दण्डपात्राभ्यामन्यत् किञ्चिदनापदि ॥ ७ ॥
दृष्टिपूतंन्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ८ ॥
मौनानीहानिलायामा दण्डावाग्देहचेतसाम् ॥
न ह्येते यस्य संत्याग वेणुभिर्नभवेद् यतिः ॥ ९ ॥
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ॥
आत्मक्रीड़ आत्मरत आत्मवान् समदर्शनः ॥ १० ॥
विविक्तक्षेम शरणो मद्भाव विमलाशयः ॥
आत्मानं चिन्तयेदेक मभेदेन मया मुनिः ॥ ११ ॥
अन्वीक्षेतात्मनो बन्धं मोक्षञ्च ज्ञाननिष्ठया ॥
बन्धइन्द्रिय विक्षेपो मोक्ष एषां च संयमः ॥ १२ ॥
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥
विरक्तः क्षुल्लकामेभ्यो लब्धात्मानि सुखं महत् ॥ १३ ॥
पुरग्राम व्रजान् सार्थान् भिक्षार्थं प्रविशं श्चरेत् ॥
पुण्यदेश सरिच्छैल वनाश्रमवतीं महीम् ॥ १४ ॥
वानप्रस्थाश्रमपदेष्व भीक्षणं भैक्ष्यमाचरेत् ॥
संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ १५ ॥
नैतद्वस्तु तयापश्येद् दृश्यमानं विनश्यति ॥

असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥
यदेतदात्मनि जगन्मनो वाक्प्राणसंहतम् ॥
सर्व्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ॥१७॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वा नपेक्षकः ॥
स लिङ्गानाश्रमां स्त्यक्त्वा चरेदविधिगोचरः ॥ १८ ॥
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ॥
वदेदुन्मत्तवद्विद्वान् गोचर्य्यां नैगमश्चरेत् ॥ १९ ॥
वेदवादरतो न स्यान्न पाषण्डी न हैतुकः ॥
शुष्कवादविवादे न कञ्चित् पक्षं समाश्रयेत् ॥ २० ॥
नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्नतु ॥
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥ २१ ॥
देहमुद्दिश्य पशुवद्वैरं कुर्य्यान्न केनचित् ॥
एक एव परोह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ २२ ॥
यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥
अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ॥ २३ ॥
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥
आहारार्थं समीहेत युक्तं तत् प्राणधारणम् ॥ २४ ॥
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ २५ ॥
तथा वास स्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥
शौचमाचमनं स्नानं न तु चोदनया चरेत् ॥ २६ ॥
अन्यांश्च नियमान्ज्ञानी यथाहं लीलयेश्वरः ॥
न हि तस्य विकल्पाख्या याचमद्वीक्षया हता ॥ २७ ॥

आदेहान्तात् क्वचित् ख्याति स्ततः संपद्यते मया ॥
दुःखोदर्केषु कामेषु जातनिर्व्वेद आत्मवान् ॥ २८ ॥
अजिज्ञासित मद्धर्म्मो गुरुं मुनिमुपाव्रजेत् ॥
तावत् परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ २९ ॥
यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ॥ ३० ॥
ज्ञानवैराग्यरहित स्त्रिदण्ड मुपजीवति ॥
सुरानात्मनामात्मस्थं निह्नुत माञ्चधर्महा ॥ ३१ ॥
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ।
भिक्षोर्धर्म्मः शमोऽहिंसा तप ईक्षा वनौकसः ॥ ३२ ॥
गृहिणो भूतरक्षेज्या द्विजस्याचार्य्यसेवनम् ॥
ब्रह्मचर्य्यं तपः शौचं सन्तोषो भूतसौहृदम् ॥ ३३ ॥
गृहस्थस्या प्यृतौगन्तुः सर्व्वेषां मदुपासनम् ॥
इति मां यः स्वधर्म्मेण भजन्नित्य मनन्यभाक् ॥ ३४ ॥
सर्व्वभूतेषु मद्भावो मद्भक्तिं विन्दते ऽचिरात् ॥
भक्त्योद्धवानपायिन्या सर्व्वलोकमहेश्वरम् ॥ ३५ ॥
सर्व्वोत्पत्त्यप्ययं ब्रह्म कारण मुपयाति सः ॥
इति स्वधर्म्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ॥ ३६ ॥
ज्ञानविज्ञानसंपन्नो न चिरात् समुपैति माम् ॥
वर्णाश्रमरतां धर्म्म एष आचारलक्षणः ॥ ३७ ॥
स एव मद्भक्ति युतो निःश्रेयसकरः परः ॥
एतत्तेऽभिहितं साधो भवान् पृच्छति यच्च माम् ॥ ३८ ॥
यथा स्वधर्म्मसंयुक्तो भक्तो मां समियात् परम् ॥
इति श्रीभागवते महापुराणेऽष्टादशाध्याये यतिधर्म्मो वर्णितः

## अथ बृहन्नारदीयपुराणे यत्याश्रम निर्णयमाह पञ्चविंशाध्याये ।

यदा मनसि वैराग्यं जातं सर्व्वेषु जन्तुषु ॥
तदैव संन्यसे द्विद्वान् अन्यथा पतितो भवेत् ॥ १ ॥
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ॥
निर्द्वन्द्वो निरहंकारो निर्म्ममः सर्व्वदा भवेत् ॥ २ ॥
समादिगुणनिर्युक्तः कामक्रोधविवर्जितः ॥
नग्नो वा जीर्णकौपीनो भवेन्मुण्डी यती द्विजः ॥ ३ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
एकरात्रं वसेद्ग्रामे त्रिरात्रं नगरे वसेत् ॥ ४ ॥
भैक्ष्येण वर्त्तयेन्नित्य न्नैकान्नाशी भवेद् यतिः ॥
अनिन्दित द्विजगृहे व्यङ्गारे भुक्तिवर्ज्जिते ॥ ५ ॥
विवादरहिते चैव भिक्षार्थं पर्य्यटेद्यतिः ॥
भवेत्त्रिषवणस्नायी नारायणपरायणः ॥ ६ ॥
जपेच्च प्रणवं नित्यं यतात्मा विजितेन्द्रियः ॥
एकान्नाशी भवेद्यस्तु कदाचिल्लम्पटो यतिः ॥ ७ ॥
तस्य वै निष्कृति र्नास्ति प्रायश्चित्तशतैरपि ॥
विप्रा यदि यतिर्लिप्सुः प्रवृत्तदम्भको भवेत् ॥ ८ ॥
स चण्डालसमोज्ञेयो वर्णाश्रमविगर्हितः ॥
आत्मानं चिन्तयेद्देवं नारायणमनामयम् ॥ ९ ॥
निर्द्वन्द्वं निर्म्ममं शान्तं मायातीतममत्सरम् ॥
अव्ययं परिपूर्णञ्च सदानन्दैकविग्रहम् ॥ १० ॥

ज्ञानस्वरूपममलं परञ्ज्योतिः सनातनम् ॥
अविकारमनाद्यन्तं जगच्चैतन्यकारणम् ॥ ११ ॥
निर्गुणं परमं ध्यायेदात्मानं परमात् परम् ॥
पठेदुपनिषद्वाक्यं वेदार्थांश्चैव चिन्तयेत् ॥ १२ ॥
सहस्रशीर्षं देवेशं सदाध्याये जितेन्द्रियः ॥
एवं ध्यानपरो यस्तु यतिर्विगतमत्सरः ॥ १३ ॥
स याति परमानन्दं परंब्रह्मसनातनम् ॥
इत्येव माश्रमाचारान् यः करोति द्विजः क्रमात् ॥ १४ ॥
स याति परमं स्थानं यत्र गत्वा न शोचति ॥
वर्णाश्रमाचाररताः सर्व्वपापविमोचिताः ॥ १५ ॥
नारायणपरा यान्ति तद्विष्णोः परमं पदम् ॥
इति बृहन्नारदीये पुराणे सदाचार वर्णनं नाम पञ्चविंशो ऽध्यायः समाप्तः ॥

[ अथ मार्कण्डेयपुराणे ऽष्टाविंशाध्याये ]
यतिधर्म्म कथनम् ॥

वानप्रस्थाश्रम स्तस्माद्भिक्षो स्तु चरमोऽपरः ॥
चतुर्थस्य स्वरूपन्तु श्रूयतामाश्रमस्य मे ॥ १ ॥
यः स्वधर्म्मो ऽस्य धर्म्मज्ञैः प्रोक्तस्तात महात्मभिः ॥
सर्व्वसंगपरित्यागो ब्रह्मचर्य्य मकोपिता ॥ २ ॥
यतेन्द्रियत्वमावासे नैकस्मिन् वसति श्चिरम् ॥
अनारम्भ स्तथाहारो भैक्ष्यान्नेनैककालिना ॥ ३ ॥
आत्मज्ञानाववोधेच्छा तथा चात्मावलोकनम् ॥
चतुर्थे त्वाश्रमोधर्म्मो मयायं ते निवेदितः ॥ ४ ॥

सामान्य मन्यत्रवर्णाना माश्रमाणाञ्च मे शृणु ॥
सत्यं शौचमहिंसाच अनसूया तथा क्षमा ॥ ५ ॥
आनृशंस्यमकार्पण्यं सन्तोषश्चाष्टमोगुणः ॥
एते संक्षेपतः प्रोक्ता धर्म्मावर्णाश्रमेषु ते ॥ ६ ॥
एतेषु च स्वधर्म्मेषु स्वेषु तिष्ठेत् समन्ततः ॥
यश्चोल्लङ्घ्यस्वकं धर्म्मं स्ववर्णाश्रमसंज्ञितम् ॥ ७ ॥
नरोऽन्यथा प्रवर्त्तेत सदण्ड्यो भूभृतो भवेत् ॥
ये च स्वधर्म्मं संत्यागात् पापं कुर्वन्ति मानवाः ॥ ८ ॥
उपेक्षत स्तान् नृपते रिष्टापूर्त्तं प्रणश्यति ॥
तस्माद्राज्ञा प्रयत्नेन सर्व्वेवर्णाः स्वधर्म्मतः ॥ ६ ॥
प्रवर्त्तन्तोऽन्यथा दण्ड्याः स्थाप्याश्चैव स्वकर्म्मषु ।

इति मार्कण्डेय महापुराणे अष्टाविंशोऽध्यायः ।

## अग्नि पुराणे एकषष्ठ्यधिकशत तमा ऽध्याये यतिधर्म्मं निरूपयति ।

पुष्कर उवाच ।

यति धर्म्मं प्रवक्ष्यामि ज्ञानमोक्षादिदर्शकम् ।
चतुर्थमायुषो भागं प्राप्य संगात् परिव्रजेत् ॥ १ ॥
यदह्नि विरजेद्धीर स्तदह्नि च परिव्रजेत् ।
प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणाम् ॥ २ ॥
आत्मन्यग्नीन् समारोप्य प्रव्रजेद्ब्राह्मणो गृहात् ।
एकएव चरेन्नित्यं ग्राममन्नार्थमाश्रयेत् ॥ ३ ॥
उपेक्षको ऽसञ्चयिको मुनिर्ज्ञानसमन्वितः ॥

कपालं वृक्षमूलञ्च कुचेलमसहायता ॥ ४ ॥
समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥
नाभिनन्देतमरणं नाभिनन्देत जीवनम् ॥ ५ ॥
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिवेत् ॥ ६ ॥
सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥
अलावुदारुपात्राणि मृण्मयं वैणवं यतेः ॥ ७ ॥
शुद्धभाव श्चरेद्धर्म्मं यत्र तत्राश्रमेरतः ॥
समः सर्व्वेषु भूतेषु न लिङ्गं धर्म्मकारणम् ॥ ८ ॥
फलं कतकवृक्षस्य यद्यप्यम्वु प्रसादकम् ।
न नामग्रहणादेव तस्य वारिप्रसीदति ॥ ९ ॥
अजिह्वः षण्डकः पङ्गुरन्धो वधिर एव च ॥
सद्भिश्च मुच्यते साद्धि रज्ञानात् संवृतो द्विजः ॥ १० ॥
अह्निरात्र्याञ्च यान् जन्तून् हिनस्त्य ज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडा चरेत् ॥ ११ ॥
अस्थिस्थूणं स्नायु युतं मांसशोणितलेपनम् ॥
चर्म्मावनद्धं दुर्गन्धं पूर्णं मूत्र पुरीषयोः ॥ १२ ॥
जराशोक समाविष्टं रोगाय तनुमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥ १३ ॥
यमा पञ्चाथ नियमाः शौचं सन्तोषणं तपः ।
स्वाध्यायेश्वरपूजा च पद्मकाद्यासनं यतेः ॥ १४ ॥
प्राणायाम स्तु द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानयुतो गर्भो विपरीत स्त्वगर्भकः ॥ १५ ॥

प्रत्येकं त्रिविधः सोपि पूरकुम्भकरेचकैः ।
पूरणात् पूरको वायो र्निश्चलत्वाच्च कुम्भकः ॥ १६ ॥
रेचनाद्रेचकः प्रोक्तो मात्राभेदेन च त्रिधा ।
द्वादशात् तु चतुर्व्विंशः षट्त्रिंशन्मात्रिको परः ॥ १७ ॥
तालोलध्वक्षरोमात्रा प्रणवादि चरेच्छनैः ॥
प्रत्याहारो जापकानां ध्यानमीश्वरचिन्तनम् ॥ १८ ॥
मनोधृति र्धारणा स्यात् समाधिर्ब्रह्मणि स्थितिः ।
अयमात्मा परंब्रह्म सत्यं ज्ञानमनन्तकम् ॥ १६ ॥
विज्ञानमानन्दं ब्रह्म तत्त्वमस्य हमस्मि तत् ।
परंब्रह्मज्योतिरात्मा वासुदेवो विमुक्तओँ ॥ २० ॥
देहेन्द्रियमनोबुद्धि प्राणाहङ्कारवर्ज्जितम् ॥
जाग्रत्स्वप्नसुषुप्तादि मुक्तं ब्रह्मतुरीयकम् ॥ २१ ॥
नित्यशुद्धबुद्धमुक्त सत्यमानन्दमद्वयम् ॥
अहंब्रह्मपरंज्योति रक्षरं सर्व्वगं हरिः ॥ २२ ॥
यो ऽसावादित्य पुरुषः सोऽसावहमखण्ड ओं ॥
सर्व्वारम्भ परित्यागी सम दुःखसुखःक्षमी ॥ २३ ॥
भावशुद्धश्च ब्रह्माण्डं भित्वा ब्रह्म भवेन्नरः ॥
आषाढ्यां पौर्णमास्याञ्च चातुर्म्मास्यं व्रतं चरेत् ॥ २४ ॥
ततो व्रजेन्नवम्यादौ ह्यृतुसन्धिषु वापयेत् ॥
प्रायश्चित्तं यतीनाञ्च ध्यानं वायुर्यम स्तथा ॥ २५ ॥

इत्याग्नेये महापुराणे यतिधर्म्म नामैक षष्ठ्यधिक
शततमो ऽध्यायः समाप्तः ॥

## ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ८३ अध्याये संन्यासधर्म्ममाह ॥

संन्यासिनाञ्च योधर्म्मो मन्मुखाच्च निशामय ॥
दण्डग्रहणमात्रेण नरोनारायणो भवेत् ॥ १ ॥
पूर्व्वकर्म्माणि दग्ध्वाच परकर्म्म निकृन्तनम् ॥
कुरुते चिन्तयेन्माञ्च यायात् तु मम मन्दिरम् ॥ २ ॥
संन्यासिनः पदस्पर्शात् सद्यः पूतावसुन्धरा ॥
सद्यः पूतानि तीर्थानि वैष्णवस्य यथाव्रज ॥ ३ ॥
संन्यासिनश्च स्पर्शने निष्पापो जायते नरः ॥
भुक्त्वा संन्यासिनं लोक श्चाश्वमेधफलं लभेत् ॥ ४ ॥
नत्वा च कामतो दृष्ट्वा राजसूयफलं लभेत् ॥
फलं संन्यासिनां तुल्यं यतीनां ब्रह्मचारिणाम् ॥ ५ ॥
संन्यासी यदि सायाह्ने क्षुधितो गृहिणां गृहम् ॥
सदन्नं वा कदन्नं वा तद्दत्तं नैव वर्ज्जयेत् ॥ ६ ॥
न धनग्रहणं कुर्य्यादेकवासा निरीहितः ॥
शीतग्रीष्मे समानश्च लोभमोह विवर्ज्जितः ॥ ७ ॥
तत्र स्थित्वैकरात्रञ्च प्रातरन्य स्थलं व्रजेत् ॥
यानमारोहणं कृत्वा गृहीत्वा गृहिणो धनम् ॥ ८ ॥
गृहं कृत्वा गृहीव स्यात् सधर्म्मात् पतितो भवेत् ॥
कृत्वा च कृषिवाणिज्यं कुवृत्तिं कुरुते च यः ॥ ९ ॥
स संन्यासी दुराचारः स्वधर्म्मात् पतितो भवेत् ॥
अशुभञ्च शुभंवापि अकर्म्म कुरुते यदि ॥ १० ॥

वहिष्कृतः सधर्म्मा ज्ञाप्युपहास्यश्च तद्भवेत् ॥

इति ब्रह्मवैवर्त्तपुराणे यतिधर्म्मउक्तः ॥

## स्कन्दपुराणे काशीखण्डे एकचत्वारिंशत्तमाध्याये संन्यासधर्म्मं दर्शयति ॥

### स्कन्दउवाच ।

अतिवाह्यायुषोभागं तृतीयमिति कानने ॥
आयुषस्तु तुरीयांशे त्यक्त्वा सङ्गान् परिव्रजेत् ॥ १ ॥
ऋणत्रयमसंशोध्य त्वनुत्पाद्यसुतानपि ॥
तथा यज्ञानिष्ट्वा च मोक्षमिच्छन् व्रजत्यधः ॥ २ ॥
मनागपि न भूतानां यस्मादुत्पद्यते भयम् ॥
सर्व्वभूतानि तस्येह प्रयच्छन्त्यभयंसदा ॥ ३ ॥
एकएव चरे न्नित्यं अनग्निरनिकेतनः ॥
सिद्ध्यर्थमसहायः स्याद्ग्राममन्नार्थमाश्रयेत् ॥ ४ ॥
जीवितं मरणंवाथ नाभिकाङ्क्षेत् क्वचिन्मतिः ॥
कालमेव प्रतीक्षेत निर्द्देशं भृतको यथा ॥ ५ ॥
सर्व्वत्र ममताशून्यः सर्व्वत्र समतायुतः ॥
वृक्षमूलनिकेतश्च मुमुक्षुरिह शस्यते ॥ ६ ॥
ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ॥
यतेश्चत्वारि कर्म्माणि पञ्चमं नोपपद्यते ॥ ७ ॥
वार्षिकांश्चतुरो मासान् विहरेन्न यतिः क्वचित् ॥
वीजाङ्कुराणां जन्तूनां हिंसा तत्र यतो भवेत् ॥ ८ ॥
गच्छेत् परिहरन् जन्तून् पिवेत् कं वस्त्रशोधितम् ॥

वाचं वदेदनुद्वेगां न क्रुद्धेत् केनचित् क्वचित् ॥ ९ ॥
चरेदात्मसहायश्च निरपेक्षो निराश्रयः ॥
नित्यमध्यात्मनिरतो नीचकेशनखो वशी ॥ १० ॥
कुसुम्भवासा दण्डाढ्यो भिक्षाशी ख्यातिवर्ज्जितः ॥
अलाबुदारुमृद्वेणु पात्रं शस्तं न पञ्चमम् ॥ ११ ॥
न ग्राह्यं तैजसं पात्रं भिक्षुकेन कदाचन ॥
वराटके संगृहीते तत्र तत्र दिने दिने ॥ १२ ॥
गोसहस्रवधं पापं श्रुतिरेषा सनातनी ॥
हृदि सस्नेहभावेन चेद्रक्षेत् स्त्रियमेकदा ॥ १३ ॥
कोटिद्वयं ब्राह्मकल्पं कुम्भीपाकी न संशयः ॥
एककालं चरेद्भैक्षं न कुर्य्यात्तत्र विस्तरम् ॥ १४ ॥
आश्रमे तु यतिर्यस्य मुहुर्तमपि विश्रमेत् ॥
किं तस्यानेक तन्त्रेण कृतकृत्यः स जायते ॥ १५ ॥
सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम् ॥
निर्द्धक्ष्यति हि तत् सर्व्वमेकरात्रोषितो यतिः ॥ १६ ॥
दृष्ट्वा जराभिभवनमसह्यं रोगपीडितम् ॥
देहत्यागं पुनर्गर्भं गर्भक्लेशञ्च दारुणम् ॥ १७ ॥
नानायोनिनिवासश्च वियोगश्चप्रियैः सह ॥
अप्रियैः सह संयोग मधर्म्मात् दुःखसंभवम् ॥ १८ ॥
पुनर्निरयसंवासं नाना नरकयातना ॥
कर्म्मदोष समुद्भूता नृणां गति रनेकधा ॥ १९ ॥
देहस्य नित्यतां दृष्ट्वा नित्यतां परमात्मनः ॥
कुर्व्वीत मुक्तये यत्नं यत्र यत्राश्रमेरतः ॥ २० ॥

करपात्रीति विख्याता भिक्षापात्रविवर्ज्जिताः ॥
तेषां शतगुणं पुण्यं भवत्येव दिने दिने ॥ २१ ॥
आश्रमांश्चतुरस्त्वेवं क्रमादासेव्य पण्डितः ॥
निर्द्वन्द्वस्त्यक्तसंगश्च ब्रह्मभूयाय कल्पते ॥ २२ ॥
असंयतः कुबुद्धीनामात्मबन्धाय कल्पते ॥
धीमद्भिः संयतः सोऽपि पदं दद्यादनामयम् ॥ २३ ॥
श्रुतिस्मृति पुराणंच विद्योपनिषद स्तथा ॥
श्लोकाः सूत्राणि भाष्यानि य च्चान्यद्वाङ्मयं क्वचित् ॥२४॥
वेदानुवचनं यज्ञा ब्रह्मचर्य्यं तपो दमः ॥
श्रद्धोपवासः स्वातन्त्र्य मात्मनो ज्ञानहेतवः ॥ २५ ॥
स हि सर्व्वैं र्विजिज्ञास्य आत्मैवाश्रमवर्त्तिभिः ॥
श्रोतव्यस्त्वथ मन्तव्यो द्रष्टव्यश्च प्रयत्नतः ॥ २६ ॥
आत्मज्ञानेन मुक्तिः स्यात्तच्चयोगादृते न हि ॥
स च योग श्चिरं कालमभ्यासादेव सिद्धति ॥ २७ ॥

इति स्कन्दपुराणे काशीखण्डे एकचत्त्वारिंशत्तमाध्याये
यतिधर्म्मनिरूपणमुक्तम् ॥

## बृहद्धर्म्मपुराणे उत्तरखण्डे सप्तमाध्याये
## यतिधर्म्मः स्मर्यते ॥

तृतीयमायुषो भागं वहत्येव वनेषु तु ॥
चतुर्थमायुषोभागं ज्ञात्वा संगं परित्यजेत् ॥ १ ॥
आश्रमादाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः ॥
ऋणानित्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ २ ॥

अधीत्य वेदानुत्पाद्य पुत्रान् कृतवनाश्रमः ॥
इष्ट्वा च शक्तितो यज्ञै र्मनोमोक्षे निवेशयेत् ॥ ३ ॥
अनधीत्य द्विजो वेदान नुत्पाद्य सुतानपि ॥
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥ ४ ॥
प्राजापत्यां निरूप्येष्टिं सर्व्ववेद सदक्षिणाम् ॥
आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥ ५ ॥
एक एव चरेन्नित्यं सिद्धिमेकस्य लक्षयन् ॥
कपालं वृक्षमूलानि कुचेलमसहायता ॥ ६ ॥
समताचैव सर्व्वत्र एतन्मुक्तस्य लक्षणम् ॥
मृत्युं वा जीवितं वापि नाभिनन्देत् कदाचन ॥ ७ ॥
सत्यपूतां वदेद्वाचं दृष्टिपूतं न्यसेत् पदम् ॥
वस्त्र पूतं पिवेदम्भो मनः पूतं समाचरेत् ॥ ८ ॥
अतिवादां स्तितिक्षेत नावमन्येत कंचन ॥
न चैनं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥ ९ ॥
अतैजसानि पात्राणि तस्य स्युरव्रणानिच ॥
अलावुंदारुपात्रञ्च मृण्मयं वैणवं तथा ॥ १० ॥
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत् ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ॥ ११ ॥
रजस्वलमनित्यञ्च भूतावास मिमं त्यजेत् ॥
प्रियेषु स्वेषु सुकृतमप्रियेषुच दुष्कृतम् ॥ १२ ॥
विसृज्यध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥
गृहस्थस्य गृहे तिष्ठेद्गोदोहमात्रकालतम् ॥ १३ ॥
तेन दत्तंच भुञ्जीत मधुमांसविवर्ज्जितम् ॥

यथा नद्यो नदाश्चापि सागरं यान्ति संस्थितिम् ॥ १४ ॥
एवमाश्रमिणः सर्व्वे गृहस्थं यान्ति संस्थितिम् ॥
यथा समुद्रमाश्रित्य सर्व्वे जीवन्ति जन्तवः ॥ १५ ॥
तथा गृहस्थमाश्रित्य सर्व्वे जीवन्ति भिक्षुकाः ।
धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः ॥ १६ ॥
ह्री विद्या सत्यमक्रोधो दशमं धर्म्मलक्षणम् ॥
एष ते कथिता धर्म्मा यतीनां द्विजपुंगव ॥ १७ ॥
श्रोतु मिच्छसि जावाले ।किमन्यद्गदतो मम ॥
इति वृहद्धर्म्मपुराणे यतिधर्म्मकथनमुक्तम् ॥

## कूर्म्मपुराणे २८ अध्याये संन्यास धर्म्ममाह ।

### ( व्यासउवाच )

एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः ॥
चतुर्थमायुषोभागं संन्यासेन नयेत् क्रमात् ॥ १ ॥
अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ॥
योगाभ्यासरतः शान्तो ब्रह्मविद्या परायणः ॥ २ ॥
यदा मनसि सञ्जातं वैतृष्णं सर्व्ववस्तुषु ॥
तदा संन्यास मिच्छन्ति पतितः स्याद्विपर्य्यये ॥ ३ ॥
प्राजापत्या न्निरूप्येष्टि माग्नेयी मथवा पुनः ॥
दान्तः पक्वकषायोऽसौ ब्रह्माश्रम मुपाश्रयेत् ॥ ४ ॥
ज्ञानसंन्यासिनः केचिद्वेद संन्यासिनः परे ॥
कर्म्म सन्यासिन स्त्वन्ये त्रिविधाः परिकीर्त्तिताः ॥ ५ ॥
यः सर्व्वसङ्गनिर्म्मुक्तो निर्द्वन्द्वश्चैव निर्भयः ॥

प्रोच्यते ज्ञान संन्यासी स्वात्मन्येव व्यवस्थितः ॥ ६ ॥
वेदमेवाभ्यसेन्नित्यं निर्द्वन्द्वो निष्परिग्रहः ॥
प्रोच्यते वेद संन्यासी मुमुक्षु र्विजितेन्द्रियः ॥ ७ ॥
यस्त्वग्नीनात्मसात् कृत्वा ब्रह्मार्पणपरोद्विजः ॥
स ज्ञेयः कर्म्मसंन्यासी महायज्ञपरायणः ॥ ८ ॥
त्रयाणामपि चैतेषां योगी त्वभ्यधिकोमतः ॥
नतस्य विद्यते कार्य्यं न लिंगं वा विपश्चितः ॥ ९ ॥
निर्म्ममो निर्भयः शान्तो निर्द्वन्द्वो निष्परिग्रहः ॥
जीर्णकौपीन वासा स्यान्नग्नोवा ध्यानतत्परः ॥ १० ॥
ब्रह्मचारी मितग्राशी ग्रामात्वन्नं समाहरेत् ॥
अध्यात्ममतिरासीत निरपेक्षो निराशिषः ॥ ११ ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥ १२ ॥
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥
नाध्येतव्यं न वक्तव्यं नश्रोतव्यं कदाचन ॥ १३ ॥
एवं ज्ञात्वा परो योगी ब्रह्मभूयाय कल्पते ॥
एकवासोऽथवा विद्वान् कौपीनाच्छादन स्तथा ॥ १४ ॥
मुण्डी शिखी वाथ भवेत् त्रिदण्डी निष्परिग्रहः ॥
काषायवासाः सततं ध्यानयोगपरायणः ॥ १५ ॥
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपिवा ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥ १६ ॥
भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नाशी भवेत् क्वचित् ॥
यस्तु मोहेन वान्यस्मादेकान्नादी भवेद्यतिः ॥ १७ ॥

न तस्य निष्कृतिः काचिद्धर्म्म शास्त्रेषु कथ्यते ॥
रागद्वेष विमुक्तात्मा समलोष्टाश्मकाञ्चनः ॥ १८ ॥
प्राणिहिंसानिवृत्तश्च मौनी स्यात् सर्व्वनिस्पृहः ॥
दृष्टि पूतंन्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ १९ ॥
शास्त्र पूतां वदेद्वाणीं मनः पूतं समाचरेत् ॥
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्रभिक्षुकः ॥ २० ॥
स्नानशौचरतो नित्यं कमण्डलु करःशुचिः ॥
ब्रह्मचर्य्यरतो नित्यं वनवासरतो भवेत् ॥ २१ ॥
मोक्षशास्त्रेषु निरतो ब्रह्मचारी जितेन्द्रियः ॥
दम्भाहङ्कार निर्म्मुक्तो निन्दापैशुन्य वर्ज्जितः ॥ २२ ॥
आत्मज्ञानगुणोपेतो यतिर्म्मोक्षमवाप्नुयात् ॥
अभ्यसेत् सततं देवं प्रणवाख्यं सनातनम् ॥ २३ ॥
स्नात्वाचम्य विधानेन शुचिर्देवालयादिषु ॥
यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः ॥ २४ ॥
धौतकाषायवसनो भस्मच्छन्न तनूरुहः ॥
अधियज्ञं ब्रह्मजपेदाधिदैविकमेव वा ॥ २५ ॥
अध्यात्मिकञ्च सततं वेदान्ताभिहितञ्चयत् ॥
पुत्रेषुचाथ निवसन् ब्रह्मचारी यतिर्मुनिः ॥ २६ ॥
वेदमेवाभ्यसेन्नित्यं स याति परमाङ्गतिम् ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं ततः परम् ॥ २७ ॥
क्षमादया च सन्तोषो व्रतान्यस्य विशेषतः ॥
वेदान्तज्ञान निष्णातान् पञ्चयज्ञान् समाहितान् ॥ २८ ॥
कुर्य्यादहरहः स्नात्वा भिक्षान्ते नैव तेन हि ॥

होममंत्रान्जपेन्नित्यं होमकाले समाहितः ॥ २९ ॥
स्वाध्यायंचान्वहं कुर्य्यात् सावित्रीं सन्ध्ययांर्जपेत् ॥
ततो ध्यायेत तं देव मेकान्ते परमेश्वरम् ॥ ३० ॥
एकान्ते वर्ज्जयेन्नित्यं कामंक्रोधं परिग्रहम् ॥
एकवासा द्विवासा वा शिखीयज्ञोपवीतवान् ॥
कमण्डलुधरो विद्वान् त्रिदण्डी यति तत्परः ॥ ३१ ॥

इतिकूर्म्मपुराणे उपरिविभागे व्यासगीतासु यतिधर्म्मो नाम अष्टाविंशोऽध्याय उक्तः ॥

( उनत्रिंशाध्याये कूर्म्मपुराणे ब्रह्मतत्त्व निर्णयमाह)

व्यासउवाच ।

कृत्वाहृत् पद्मनिलये विश्वाख्यं विश्वसम्भवम् ॥
आत्मानं सर्व्वभूतानां परस्ता त्वमसि स्थितम् ॥ १ ॥
सर्व्वस्याधारभूनाना मानन्दं ज्योति रव्ययम् ॥
प्रधान पुरुषातीत माकाशकुहरं शिवम् ॥ २ ॥
तदन्तः सर्व्वभावाना मीश्वरं ब्रह्मरूपिणम् ॥
ध्यायेद नादिमध्यान्त मानन्दाख्यं गुणालयं ॥ ३ ॥
महान्तं पुरुषं ब्रह्म ब्रह्माणं सत्यमव्ययम् ॥
सितं सिततराकारं महेशं विश्वरूपिणम् ॥ ४ ॥
ओँकारेणा थ चात्मानं संस्थाप्य परमात्मनि ॥
आकाशे देवमीशानं ध्यायीताकाशमध्यगम् ॥ ५ ॥
कारणं सर्व्वभावाना मानन्दैक समाश्रयम् ॥
पुराणं पुरुषं शुभ्रं ध्यायन्मुच्येत बन्धनात् ॥ ६ ॥

यद्वा गुहायां प्रकृतं जगत् सन्मोहनालये ॥
विचिन्त्य परमं व्योम सर्व्वभूतैककारणम् ॥ ७ ॥
जीवनं सर्व्वभूतानां यत्र लोकः प्रतीयते ॥
आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः ॥ ८ ॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ॥
अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ॥ ९ ॥
गुह्याद्गुह्यतमंज्ञानं यतीनामेतदीरितम् ॥
योऽनुतिष्ठेत् सहैतेन सोऽश्नुते योगमैश्वरम् ॥ १० ॥
तस्माद्ध्यानरतो नित्यमात्मविद्यापरायणः ॥
ज्ञानं स मन्यते ब्रह्म येन मुच्येत बन्धनात् ॥११ ॥
न त्वापृथक् समात्मानं सर्व्वस्मादेव केवलम् ॥
आनन्दमजरं ज्ञानं ध्यायीतश्च पुनः परम् ॥ १२ ॥
तस्माद्भवन्ति भूतानि यद्गत्वा नेह जायते ॥
स तस्मादीश्वरो देवः परस्माद्यो ऽधितिष्ठति ॥ १३ ॥
यदन्तरे तद्गमनं शाश्वतं शिवमुच्यते ॥
यदाहु स्तत् परो यः स्यात् स देवस्तु महेश्वरः ॥ १४ ॥
यद्ब्रह्मपरमंज्योतिः प्रतिष्ठाक्षरमव्ययम् ॥
यो ऽन्तरापरमंब्रह्म स विज्ञेयो महेश्वरः ॥ १५ ॥
एष देवो महादेवः केवलः परमः शिवः ॥
तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् ॥ १६ ॥
यस्मान्महीयसो देवः स्वधाग्निज्ञान संस्थिते ॥
आत्मयोगाह्वये तत्त्वे महादेव स्ततः स्मृतः ॥ १७ ॥
नान्यंदेवं महादेवाद् व्यतिरिक्तं प्रपश्यति ॥

तमेवात्मानमात्मेति यः स याति परंपदम् ॥ १८ ॥
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ॥
तेन पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥ १९ ॥
एकं ब्रह्मपरंब्रह्म ज्ञेयं तत्तत्त्वमव्ययम् ॥
स देव स्तु महादेवो नैतद्विज्ञाय बाध्यते ॥ २० ॥
तस्माद्यजेत नियतं यतिः संयतमानसः ॥
ज्ञानयोगरतः शान्तो महादेवपरायणः ॥ २१ ॥
एषवः कथितो विप्रा यतीनामाश्रमःशुभः ॥
पितामहेम विभुना मुनीनां पूर्व्वमीरितम् ॥ २२ ॥
नात्र शिष्यस्य योगिभ्यो दद्यादिदमनुत्तमम् ॥
प्रोक्तं स्वयम्भुवाज्ञानं यतिधर्म्माश्रयं शुभम् ॥ २३ ॥
इतियतिर्नियमानामेतदुक्तं विधानम् ॥
पशुपति परितोषें यद्भवेदेकहेतुः ॥
न भवति पुनरेषा मुद्भवो वा विनाशः ।
प्रणिहितमनसा ये नित्यमेवा चरन्ति ॥ २४ ॥

इति श्री कूर्म्मपुराणे उपविभागे व्यासगीतासु
उनात्रिंशोऽध्यायः ।

[ पुनरपि कूर्म्मपुराणे स्मर्य्यते ]

कूर्म्मउवाच ।

साक्षात् प्रजापते र्मूर्त्तिर्निसृष्टा ब्रह्मणो द्विजाः ॥
भृग्वादय स्तद्वदनाच्छ्रुत्वा धर्म्मानथोचिरे ॥ २५ ॥
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ॥

अध्यापनं चाध्ययनं षट्कर्म्माणि द्विजोत्तमाः ॥ २६ ॥
दानमध्ययनं यज्ञो धर्म्मः क्षत्रिय वैश्ययोः ॥
दण्डोयुद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥ २७ ॥
शुश्रूषैव द्विजातीनां शूद्राणां धर्म्म साधनम् ॥
कारुकर्म्म तथा जीवः पाकयज्ञादि धर्म्मतः ॥ २८ ॥
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ॥
गृहस्थं च वनस्थञ्च भिक्षुकं ब्रह्मचारिणम् ॥ २९ ॥
अग्नयोऽतिथि शुश्रूषा यज्ञोदानं सुरार्च्चनम् ॥
गृहस्थस्य समासेन धर्म्मोऽयं मुनिपुङ्गवाः ॥ ३० ॥
होमोमूल फलाशित्वं स्वाध्याय स्तप एव च ॥
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनाम् ॥ ३१ ॥
भैक्षाशनञ्च मौनित्वं तपोध्यानं विशेषतः ॥
सम्यग् ज्ञानञ्च वैराग्यं धर्म्मोऽयं भिक्षुके मतः ॥ ३२ ॥
भिक्षाचर्य्या च शुश्रूषा गुरोः स्वाध्याय एव च ॥
सन्ध्याकर्म्माग्निकार्य्यञ्च धर्म्मोऽयं ब्रह्मचारिणाम् ॥ ३३ ॥
ब्रह्मचारि वनस्थानां भिक्षुकाणां द्विजोत्तमाः ॥
साधारणं ब्रह्मचर्य्यं प्रोवाच कमलोद्भवः ॥ ३४ ॥
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ॥
पूर्व्ववर्ज्जं गृहस्थस्य ब्रह्मचर्य्य मुदाहृतम् ॥ ३५ ॥
आगर्भधारणादाज्ञा कार्य्या तेनाप्रमादतः ॥
अकुर्व्वाणस्तु विप्रेन्द्रा भ्रूणहातूपजायते ॥ ३६ ॥
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते ॥
अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥ ३७ ॥

ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात् ॥
तस्माद्गार्हस्थ्य मेवैकं विज्ञेयं धर्म्मसाधनम् ॥ ३८ ॥
कर्म्मणा प्राप्यते धर्म्मो ज्ञानेन च न संशयः ॥
तस्माज्ज्ञानेन सहितं कर्म्मयोगं समाश्रयेत् ॥ ३९ ॥
प्रवृत्तश्च निवृत्तश्च द्विविधं कर्म्म वैदिकम् ॥
ज्ञानपूर्व्वं निवृत्तं स्यात् प्रवृत्तं यदतोऽन्यथा ॥ ४० ॥
निवृत्तं सेवमान स्तु याति तत् परमं पदम् ॥
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत् पुनः ॥ ४१ ॥
क्षमादमोदयादान मलोभ स्त्याग एव च ॥
आर्ज्जवं चानसूया च तीर्थानुस्मरणं तथा ॥ ४२ ॥
सत्यं सन्तोषमास्तिक्यं श्रद्धा चेन्द्रिय निग्रहः ॥
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः ॥ ४३ ॥
अहिंसा प्रियवादित्व मपैशून्य मकल्कता ॥
सामासिक मिमं धर्म्मं चातुर्व्वर्ण्ये ऽब्रवीन्मनुः ॥ ४४ ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ॥
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्व पलायिनाम् ॥ ४५ ॥
वैश्यानां मारुतं स्थानं स्वधर्म्म मनुवर्त्तताम् ॥
गन्धर्व्वं शूद्रजातीनां परिचारेण वर्त्तताम् ॥ ४६ ॥
अष्टाशीति सहस्राणा मृषीणा मूर्द्ध्वरेतसाम् ॥
स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम् ॥ ४७ ॥
सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वै वनौकसाम् ॥
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥ ४८ ॥
यतीनां जितचित्तानां न्यासिनामूर्द्ध्वरेतसाम् ॥

हैरण्यगर्भं तत्स्थानं यस्मान्नावर्त्तते पुनः ॥ ४९ ॥
योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम् ॥
आनन्द मैश्वरं धाम साकाष्ठा सापरागतिः ॥ ५० ॥

ऋषयउचुः ।

भगवन् देवता विघ्न हिरण्याक्षनिसूदन ॥
चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते ॥ ५१ ॥

कूर्म्मउवाच ।

सर्व्वकर्म्माणि संन्यस्य समाधि मचलं श्रितः ॥
य आस्ते निश्चलो योगी स संन्यासी च पञ्चमः ॥ ५२ ॥
सर्व्वेषामाश्रमाणान्तु द्वैविध्यं श्रुति दर्शितम् ॥
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्म तत् परः ॥ ५३ ॥
योऽधीत विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥ ५४ ॥
उदासीनः साधकश्च  हस्थो द्विविधो भवेत् ॥
कुटुम्ब भरणायत्तः साधको ऽसौ गृही भवेत् ॥ ५५ ॥
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ॥
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥ ५६ ॥
तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च ॥
स्वाध्याये चैव निरतो वनस्थ स्तापसो मतः ॥ ५७ ॥
तपसा कर्शितोऽत्यर्थं यस्तुध्यानपरोभवेत् ॥
संन्यासिकः सविज्ञेयो वानप्रस्थाश्रमे स्थितः ॥ ५८ ॥
योगाभ्यासरतो नित्य मारुरुक्षु र्जितेन्द्रियः ॥
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥ ५९ ॥

यस्त्वात्मरतिरेव स्यान्नित्य तृप्तो महामुनिः ॥
सम्यग्दर्शन संपन्नः सयोगी भिक्षुरुच्यते ॥ ६० ॥
ज्ञानसंन्यासिनः केचिद्वेद संन्यासिनोऽपरे ॥
कर्म्मसंन्यासिनः केचित् त्रिविधाः परमेष्ठिकाः ॥ ६१ ॥
योगी च त्रिविधो ज्ञेयो भौतिकः सङ्ख्य एव च ॥
तृतीयो ह्याश्रमी प्रोक्तो योगमुत्तममाश्रितः ॥ ६२ ॥
प्रथमा भावना पूर्व्वे साङ्ख्योत्वक्षर भावना ॥
तृतीये चान्तिमा प्रोक्ता भावना परमेश्वरी ॥ ६३ ॥
तस्मादेतद्विजानीध्वं आश्रमाणां चतुष्टयम् ॥
सर्व्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते ॥ ६४ ॥
एवंवर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः ॥
दक्षादीन् प्राह विश्वात्मा सृजध्वं विविधाः प्रजाः ॥ ६५ ॥
ब्राह्मणो वचनात् पुत्रा दक्षाद्या मुनि सत्तमाः ॥
असृजन्त प्रजाः सर्व्वे देवमानुष पूर्व्वकाः ॥ ६६ ॥
इत्येवं भगवान् ब्रह्मा स्रष्टृत्वे संव्यवस्थितः ॥
अहं वै पालयामीदं संहारिष्यति शूलभृत् ॥ ६७ ॥
तिस्रस्तु मूर्त्तयः प्रोक्ता ब्रह्मविष्णु महेश्वराः ॥
रजः सत्यतमो योगात् परमात्मन उत्तमाः ॥ ६८ ॥
अन्योन्यमनुरक्ता स्ते ह्यन्यो न्यमुपजीविनः ॥
अन्योऽन्यप्रणता श्चैव लीलया परमेश्वराः ॥ ६९ ॥
ब्राह्मी माहेश्वरी चैव तथैवाक्षर भावना ॥
तिस्रस्तु भावना रुद्रे वर्त्तन्ते सततं द्विजाः ॥ ७० ॥
प्रवर्त्तते मय्यजस्रमाद्या त्वक्षर भावना ॥

द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षर भावना ॥ ७१ ॥
अहं चैवमहादेवो न भिन्नः परमार्थतः ॥
विभज्य स्वेच्छयात्मानं सोऽन्तर्य्यामीश्वरः स्थितः ॥ ७२ ॥
त्रैलोक्यमखिलं स्रष्टुं सदेवा सुरमानुषम् ॥
पुरुषः परतोऽव्यक्तो ब्रह्मत्वं समुपागमत् ॥ ७३ ॥
तस्माद्ब्रह्मामहादेव विष्णु विश्वेश्वरः परः ॥
एकस्यैव स्मृतस्तिस्र स्तद्वत् कार्य्यवशात् प्रभोः ॥ ७४ ॥
तस्मात् सर्व्वप्रयत्नेन वन्द्याः पूज्याः विशेषतः ॥
यदीच्छेदचिरात् स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥ ७५ ॥
वर्णाश्रम प्रयुक्तेन धर्म्मेण प्रीतिसंयुतः ॥
पूजयेद्भाव युक्तेन यावज्जीवं प्रतिज्ञया ॥ ७६ ॥
चतुर्णामाश्रमाणान्तु प्रोक्तोऽयं विधिवद्द्विजाः ॥
आश्रमो वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥ ७७ ॥
तल्लिङ्गधारी नियतं तद्भक्तजनवत् सलः ॥
ध्यायेदथार्च्चयेदेतान् ब्रह्मविद्या परायणः ॥ ७८ ॥
सर्व्वेषामेव भक्तानां शम्भो लिंगमनुत्तमम् ॥
सितेन भस्मना कार्य्यं ललाटे तु त्रिपुण्ड्रकम् ॥ ७९ ॥
यस्तु नारायणं देवं प्रपन्नः परमं पदम् ॥
धारयेत् सर्व्वदा शूलं ललाटे गन्धवारिभिः ॥ ८० ॥
प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् ॥
तेषां ललाटे तिलकं धारणीयन्तु सर्व्वदा ॥ ८१ ॥
योऽसावनादिर्भूतादिः कालात्मा सौ धृतोभवेत् ॥
उपर्य्यधोभावयोग त्रिपुण्ड्रस्य तु धारणात् ॥ ८२ ॥

यत्तत् प्रधारणं त्रिगुणं ब्रह्मविष्णु शिवात्मकम् ॥
धृतन्तु शूलधरणाद्भवत्येव न संशयः ॥ ८३ ॥
ब्रह्मतेजमयं शुल्कं यदेतन्मण्डलरवेः ॥
भवत्येव धृतंस्थानमैश्वरं तिलके कृते ॥ ८४ ॥
तस्मात् कार्य्यं त्रिशूलांगं तथा च तिलकं शुभम् ॥
आयुष्यश्चापि भक्तानां त्रयाणां विधिपूर्व्वकम् ॥ ८५ ॥
यजेत जुहुयादग्नौ जपेद्दद्याज्जितेन्द्रियः ॥
शान्तो दान्तो जितक्रोधो वर्णाश्रम विधानवित् ॥ ८६ ॥
एवं परिचरेद्देवान् यावज्जीवं समाहितः ॥
तेषां स्वस्थानमचलं सोऽचिरादधिगच्छति ॥ ८७ ॥

इतिश्री कूर्म्मपुराणे वर्णाश्रम वर्णन नाम
द्वितीयोऽध्याय उक्तः ।

गरुड़पुराणे त्र्यधिकशतमाध्याये
॥ याज्ञवल्क्य उवाच ॥

भिक्षोर्धर्म्मं प्रवक्ष्यामि तं निबोधत सत्तमाः ॥
वनात् प्राव्रज्य कृत्वेष्टिं सर्व्ववेदसदक्षिणाम् ॥ १ ॥
प्राजापत्यं तदन्तेऽपि अग्निमारोप्य चात्मनि ॥
सर्व्वभूत हितः शान्त स्त्रिदण्डी सकमण्डलुः ॥ २ ॥
सर्व्वारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नाभिलक्षितः ॥ ३ ॥
रहिते भिक्षुकैर्ग्रामे यात्रामात्र मलोलुप ॥
भवेत् परमहंसा वा एकदण्डी यमादिकृत् ॥ ४ ॥

सिद्धयोग स्त्यजन् देहममृतत्वमिहाप्नुयात् ॥
योगमभ्यस्य मितभुक् परांसिद्धि मवाप्नुयात् ॥
दातातिथिप्रियोज्ञानी गृहीश्राद्धेऽपि मुच्यते ॥ ५ ॥

## इति श्री गारुड़े महापुराणे यतिधर्म्म उक्तः ॥

## वायुपुराणे सप्तदशाऽध्याये परमाश्रमप्राप्ति-कथनमाह ॥

आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमम् ॥
अतः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ॥ १ ॥
अनुज्ञाप्य गुरुञ्चैव विचरेत् पृथिवीमिमाम् ॥
सारभूतमुपासीत ज्ञानं यज्ज्ञेयसाधकम् ॥ २ ॥
इदं ज्ञानमिदं ज्ञेयमितियस्तूषितश्चरेत् ॥
अपि कल्पसहस्त्रायुर्नैवज्ञेयमवाप्नुयात् ॥ ३ ॥
त्यक्तसंगो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
पिधाय बुद्ध्याद्वाराणि ध्याने ह्येवं मनोदधे ॥ ४ ॥
शून्येष्वेवावकाशेषु गुहासु च वने तथा ॥
नदीनां पुलिने चैव नित्यं युक्तः सदा भवेत् ॥ ५ ॥
वाग्दण्डः कर्म्मदण्डश्च मनोदण्डश्च ते त्रयः ॥
यस्यैते नियतादण्डाः स त्रिदण्डी व्यवस्थितः ॥ ६ ॥
अवस्थितोध्यानरति र्जितेन्द्रियः शुभाशुभे हित्य च कर्म्मणी उभे ॥ इदं शरीरं प्रविमुच्य शाश्वतो न जायते म्रियते वा कदाचित् ॥ ७ ॥ इति ॥

---

॥ आत्मपुराणे १८ अध्याये यतिधर्म्मं दर्शयति ॥

एतज्जिज्ञासवः सर्व्वे ब्राह्मणाद्याः शरीरिणः ॥
कुर्व्वन्ति विहितं कर्म्म निषिद्धं वर्जयन्ति च ॥ १ ॥
सत्यंतपो दयादानं ब्रह्मचर्य्यमहिंसनम् ॥
इत्यादीन्यपि कर्म्माणि कुर्व्वन्ति च विवेकिनः ॥ २ ॥
ब्राह्मणा एतमिच्छन्ति एषणात्रयवर्जिताः ॥
भिक्षाचर्य्यं चरन्त्यत्र व्युत्थायाश्रमकर्म्मतः ॥ ३ ॥
एतं विज्ञाय विद्वांसो ह्यन्धवन्मूकवन्महीम् ॥
विहरन्त्यपि सर्व्वज्ञा अविज्ञाता जनैरिह ॥ ४ ॥
संवर्त्तकादिवत् सर्व्वे लोकातीता महाधियः ॥

॥ आत्मपुराणे ११ अध्याये ॥

एवं नानाविधोपाया विरक्तौ तेषु कश्चनम् ॥ ५ ॥
आस्थाय तां विधायाथ कुर्य्यात् संन्यासमात्मवान् ॥
इतिते काल आख्यातः संन्यासे च वदामिते ॥ ६ ॥
अधिकारिणमत्रोक्तं मोक्षशास्त्रेषु सर्व्वतः ॥
तासां सत्त्वे भवेत् पूर्व्वं ब्रह्मचारी ततो गृही ॥ ७ ॥
ततोवनी ततो न्यासी हंसोऽतो न चतुर्थकः ॥
चतुर्थः परमोहंसो लोकद्वयगतस्पृहः ॥ ८ ॥
यः कश्चित् सतु विज्ञेयो मायापाशवशं गतः ॥
ब्रह्मचर्य्याद्गृहाद्वापि वनाद्वा प्रव्रजेदयम् ॥ ९ ॥
सर्व्वैषणाविनिर्मुक्तो नैष्कर्म्यप्राप्तसंस्पृहः ॥
वर्णाश्रमादिसंयुक्तः सर्व्वेन्द्रियगुणैर्युतः ॥ १० ॥
विपरीतोऽथवा यस्मान्निराशोत्राधिकारवान् ॥

वेदव्रतैर्विहीनो वा सहितस्तैश्च वा पुमान् ॥ ११ ॥
अधीत्य वेदं वेदौ वा वेदान् वा स्नानमागतः ॥
एतदध्ययनाभावादथवा स्नानवर्ज्जितः ॥ १२ ॥
उत्पन्नाग्निर्निमित्तेन केनचिद्वाप्य नाग्निकः ॥
श्रौतस्मार्त्ताग्निवित्तेषु स्वीकाराभावतश्चतौ ॥ १३ ॥
वैराग्यं परमं प्राप्तो ह्यथ वा पि कुटीचकः ॥
वहूदकोऽथवा हंसः परोहंसो भवेदिह ॥ १४ ॥
विधानं तत्र वक्ष्यामि परहंसाश्रमगृहे ॥
संन्यासग्रहणात् पूर्व्वे दिवसे मंगलैर्युतः ॥ १५ ॥
॥ इति आत्मपुराणे संन्यासाधिकारिणां विषयाउक्ताः ॥

## अथेदानीं वामन पुराणे चतुर्थाश्रमधर्म्माणां ब्राह्मण-कर्त्तव्यतां दर्शयति ।

वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणम् ॥
तत्रारण्योपभोगैश्च तपोभिश्चात्मकर्षणम् ॥ १ ॥
भूमौशय्या ब्रह्मचर्य्यं पितृदेवातिथिक्रिया ॥
होमस्त्रिसवनं स्नानं जटावल्कलधारणम् ॥ २ ॥
वन्यस्नेहानिषेवित्वं वानप्रस्थविधिस्त्वयम् ॥
सर्व्वसङ्गपरित्यागो ब्रह्मचर्य्यममानिता ॥ ३ ॥
जितेन्द्रियत्वमावासे नैकस्मिन् वसते चिरम् ॥
अनारम्भ स्तथाहारे भैक्षान्ने नातिकोपिता ॥ ४ ॥
आत्मज्ञानाववोधेच्छा तथा चात्मविशोधनम् ॥
चतुर्थस्त्वाश्रमो धर्म्मो अस्माभिः परिकीर्त्तितः ॥ ५ ॥
वर्णधर्म्माणि चान्यानि निशामय निशाचर ॥

गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयाश्रमाः ॥ ६ ॥
क्षत्रियस्यापि गदितो य आचारो द्विजस्य हिं ॥
वैखानसत्वं गार्हस्थ्यमाश्रमद्वितीयं विशः ॥ ७ ॥
गार्हस्थ्यं चरितं त्वेकं शूद्रस्य क्षणदाचर ॥
स्वानिवर्णाश्रमोक्तानि धर्म्माणीह न हापयेत् ॥ ८ ॥
यो हापयति तस्यासौ परिकुप्यति भास्करः ॥
कुपितः कुलनाशाय देहरोगविवृद्धये ॥ ९ ॥
भानु वैं यतते तस्य नरस्य क्षणदाचर ॥
तस्मात् स्वधर्म्मं नहिसन्त्यजेत नहापयेच्चापिहि चात्मवंशम्
यः संत्यजेच्चापि निजं हिधर्म्मं तस्यनै कुप्येत दिवाकरश्च॥१०॥

॥ वामन पुराणे इत्युक्तः ॥

॥ श्रीमद्भागवते महापुराणे सप्तमस्कन्धे ॥

॥ युधिष्ठिर नारदसंवादे यतिधर्म्मनिरूपणमाह ॥

॥ त्रयोदशा ध्याये ॥

॥ नारदउवाच ॥

कल्पस्त्वेवं परिव्राज्य देहमात्रावशेषितः ॥
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥
विभृयाद्यद्यसौवासः कौपीनाच्छादनं परम् ॥
त्यक्तं न दण्डलिंगादेरन्यत् किञ्चिदनापदि ॥ २ ॥
एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥
सर्व्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥
पश्येदात्मन्यदोविश्वं परे सद्सतोऽव्यये ॥

आत्मानञ्च परंब्रह्म सर्व्वत्रसदसन्मये ॥ ४ ॥
सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक् ॥
पश्यन् बन्धञ्च मोक्षञ्च मायामात्रं न वस्तुतः ॥ ५ ॥
नाभिनन्देद्ध्रुवंमृत्युमध्रुवंवास्य जीवितम् ॥
कालंपरं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥
नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥
वादवादां स्त्यजेत्तर्कान् पक्षं कञ्च न संश्रयेत् ॥ ७ ॥
न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ॥
न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित् ॥ ८ ॥
न यतेराश्रमः प्रायो धर्म्महेतुर्महात्मनः ॥
शान्तस्य समचित्तस्य विभृयादुत वा त्यजेत् ॥ ९ ॥
अव्यक्तलिंगो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥
कविर्मूकवदात्मानं सद्दृष्ट्यादर्शयेन्नृणाम् ॥ १० ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥
प्रह्लादस्य च सम्वादं मुनेराजगरस्य च ॥ ११ ॥
तं शयानं धरोपस्थे कावेर्य्यां सह्यसानुनि ॥
रजस्वलैस्तनूदेशै र्निगूढामलतेजसम् ॥ १२ ॥
ददर्श लोकान्विचरं ल्लोक तत्त्वविवित्सया ॥
वृतोऽमात्यैः कतिपयैः प्रह्लादोभगवत्प्रियः ॥ १३ ॥
कर्म्मणा कृतिभिर्वाचा लिंगैर्वर्णाश्रमादिभिः ॥
न विदन्ति जनायं वै सोऽसाविति न वेति च ॥ १४ ॥
तं नत्वाभ्यर्च्चर्य विधिवत् पादयोः शिरसास्पृशन् ॥
विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥

त्रिभर्षिं कायं पीवानं सोद्यमो भोगवान् यथा ॥
वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ॥
भोगिनां खलुदेहो ऽयं पीवा भवति नान्यथा ॥
न ते शयानस्य निरुद्यमस्य ब्रह्मन्नुहार्थो यतएव भोगः ॥१७॥
अभोगिनोऽयं तव विप्रदेहः पीवायतस्तद्वद नः क्षमश्चेत् ॥
कविः कल्पोनिपुणदृक् चित्रप्रियकथः समः ॥
लोकस्य कुर्व्वतः कर्म्म शेषे तद्वीक्षिता पिवा ॥ १८ ॥

नारदउवाच ।

स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥
स्मयमान स्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥

ब्राह्मणउवाच ।

वेदेदमसुरश्रेष्ठ भवान्नन्वार्य्य सम्मतः ॥
इहोपरमयो र्नृणां पदान्यध्यात्मचक्षुषा ॥ २० ॥
यस्य नारायणो देवो भगवान् हृद्गतः सदा ॥
भक्त्या केवलया ज्ञानं धुनोति ध्वान्तमर्कवत् ॥ २१ ॥
अथापि ब्रूमहे प्रश्नां स्तवराजन् यथा श्रुतम् ॥
संभावनीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥२२॥
तृष्णाया भववाहिन्या योग्यैः कामैरपूरया ॥
कर्म्माणि कार्य्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥
यदृच्छया लोकमिमं प्रापितः कर्म्मभि र्भ्रमन् ॥
स्वर्गापवर्गयो र्द्वारं तिरश्चां पुनरस्य च ॥ २४ ॥
अत्रापि दंपतीनाञ्च सुखायान्यापनुत्तये ॥

कर्म्माणि कुर्व्वतां दृष्ट्वानिवृत्तोऽस्मि विपर्य्ययम् ॥ २५ ॥
सुखमस्यात्मनो रूपं सर्व्वेहोपरति स्तनुः ॥
मनः संस्पर्शजान् दृष्ट्वा भोगान्स्वप्स्यामि संविशन् ॥ २६ ॥
इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ॥
विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥
जलं तदुद्भवैश्छन्नं हित्वाज्ञो जलकाम्यया ॥
मृगतृष्णामुपाधावेद्यथा न्यत्रार्थदृक्स्वतः ॥ २८ ॥
देहादिभिर्देवतंत्रैरात्मनः सुखमीहतः ॥
दुःखात्ययश्चानीशस्य क्रियामोघाः कृताः कृताः ॥ २९ ॥
आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥
मर्त्यस्य कृच्छ्रापनतैरर्थैः कामैः क्रियेति किम् ॥
पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥
भयादलब्धनिद्राणां सर्व्वतोऽभिविशंकिनाम् ॥ ३१ ॥
राजत श्चोरतः शत्रोः स्वजनात् पशुपक्षितः ॥
अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥
शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥
यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयो र्बुधः ॥ ३३ ॥
मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥
वैराग्यं परितोषञ्च प्राप्ता यच्छिक्षयाव्रयम् ॥ ३४ ॥
विरागः सर्व्वकामेभ्यः शिक्षितो मे मधुव्रतान् ॥
कृच्छ्राप्तं मधुवद्वित्तं हत्वा ऽप्यन्यो हरेत्पतिम् ॥ ३५ ॥
अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ॥
नोचेच्छये वह्वहानिमहाहिरिवसत्त्ववान् ॥ ३६ ॥

क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा ॥
क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥
श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्ज्जितम् ॥
भुञ्जे भुक्त्वाऽथकस्मिंश्चिद्दिवा नक्तं यदृच्छया ॥ ३८ ॥
क्षौमंदुकूलमाजिनं चीरंवल्कलमेव वा ॥
वसेऽन्यदपि संप्राप्तं दिष्टभुक्तुष्टधीरहम् ॥ ३९ ॥
क्वचिच्छयेधरोपस्थे तृणपर्णाश्मभस्मसु ॥
क्वचित् प्रसादपर्य्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥
क्वचित् स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलंकृतः ॥
रथेभाश्वै श्चरेक्वापि दिग्वासाग्रहवद्विभो ॥ ४१ ॥
नाहं निन्दे न च स्तौमि स्वभावविषमं जनम् ॥
एतेषां श्रेयआशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥
विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥
मनोवैकारिके हुत्वा तन्मायायां जुहोत्यनु ॥ ४३ ॥
आत्मानुभूतौ तां मायां जुहुयात् सत्यदृङ्मुनिः ॥
ततो निरीहोविरमेत् स्वानुभूत्यात्मनि स्थितः ॥ ४४ ॥
स्वात्मवृत्तं मयेत्थन्ते सुगुप्तमापिवर्णितम् ॥
व्यपेतंलोकशास्त्राभ्यां भवान् हि भगवत् प्रियः ॥

॥ नारदउवाच ॥

धर्म्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ ४५ ॥
पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम् ॥

इति श्री भागवते महापुराणे सप्तमस्कन्धे त्रयोदशोऽध्यायः समाप्तः ।

श्रीभागवतेमहापुराणेएकादशस्कंधे
भगवदुद्धवसंवादेएकोनविंशाऽध्याये ॥

श्रीभगवानुवाच ॥

यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ॥
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥ १ ॥
ज्ञानिन स्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ॥
स्वर्गश्चैवापवर्गश्च नान्योऽ र्थोमदृते प्रियः ॥ २ ॥
ज्ञानविज्ञानसंसिद्धाः पदंश्रेष्ठं विदुर्मम ॥
ज्ञानीप्रियतमोऽ तोमे ज्ञानेनासौ बिभर्त्ति माम् ॥ ३ ॥
तपस्तीर्थं जपोदानं पवित्राणीतराणि च ॥
नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलयाकृता ॥ ४ ॥
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥
ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावितः ॥ ५ ॥
ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि ॥
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽ गमन् ॥ ६ ॥

त्वय्युद्धवाश्रयतियस्त्रिविधो विकारो मायांऽ तरापतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽ स्य यद मी तव तस्यकिं स्युराद्यं तयो र्यदसतोऽ स्ति तदेवमध्ये ॥ ७ ॥
॥ उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञान युतं पुराणं॥ आख्याहिविश्वेश्वर विश्वमूर्त्ते त्वद्भक्ति योगञ्च महद्विमृग्यम् ॥ ८ ॥
तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश ॥
पश्यामि नान्यच्छरणं तवां घ्रिद्वन्द्वातपत्रादमृताभिवर्षात॥९॥

दष्टं जनं संपतितं विलेऽस्मिन् कालाहिना क्षुद्र सुखोरुतर्षम् ॥
समुद्धरैनं कृपयाऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव ॥ १० ॥
श्रीभगवानुवाच॥इत्थमेतत् पुराराजा भीष्मं धर्म्मभृताम्वरम्॥
अजातशत्रुः पप्रच्छ सर्व्वेषां नोऽनुशृण्वताम् ॥ ११ ॥
निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥
श्रुत्वा धर्म्मान् वहून् पश्चान्मोक्षधर्म्मानपृच्छत ॥ १२ ॥
तानहंतेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥
ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥
नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ॥
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४ ॥
एतदेव हि विज्ञानं न तथैकेन येन यत् ॥
स्थित्युत्पत्त्यप्ययान् पश्येद्भावानां त्रिगुणात्मनाम् ॥ १५ ॥
आद्यावन्ते च मध्ये च सृज्यात् सृज्यं यदन्वियात् ॥
पुन स्तत् प्रति संक्रामे यच्छिष्येत तदेवसत् ॥ १६ ॥
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥ १७ ॥
कर्म्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् ॥
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥
श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्त्तनम् ॥
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥
आदरः परिचर्य्यायां सर्वाङ्गैरभिवन्दनम् ॥

मद्भक्तपूजाभ्यऽधिका सर्व्वभूतेषु मन्मतिः ॥ २१ ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ॥
मय्यर्पणञ्च मनसः सर्व्वकामविवर्ज्जनम् ॥ २२ ॥
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ॥
इष्टं दत्तं हुतं जप्तंमदर्थं यद्व्रतं तपः ॥ २३ ॥
एवं धर्म्मैर्मनुष्याणा मुद्धवात्मनि वेदिनाम् ॥
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्याविशिष्यते ॥ २४ ॥
यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपवृंहितम् ॥
धर्म्मं ज्ञानं स वैराग्यमैश्वर्य्यञ्चाभिपद्यते ॥ २५ ॥
यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति ॥
रजस्वलञ्चासन्निष्ठं चित्तं विद्धि विपर्य्ययम् ॥ २६ ॥
धर्म्मो मद्भक्तिकृत् प्रोक्तो ज्ञानञ्चैकात्म्यदर्शनम् ॥
गुणेष्वसंगो वैराग्यमैश्वर्य्यञ्चाणिमादयः ॥ २७ ॥

## ॥ उद्धव उवाच ॥

यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्षण ॥
कःशमःकोदमः कृष्ण का तितिक्षाधृतिःप्रभो ॥ २८ ॥
किं दानं किं तपः शौर्य्यं किं सत्यमृतमुच्यते ॥
कस्त्यागः किंधनं चेष्टं को यज्ञः का च दक्षिणा ॥ २९ ॥
पुंसः किं स्विद्बलं श्रीमान् भगोलाभश्च केशव ॥
का विद्या ह्रीः परा काश्रीः किं सुखं दुःखमेव च ॥ ३० ॥
कःपण्डितः कश्चमूर्खः कः पन्था उत्पथश्च कः ॥
कःस्वर्गोनरकःकः स्वित् को बन्धुरुत किं गृहम् ॥ ३१ ॥

क आढ्यः को दरिद्रोवा कृपणः कः क ईश्वरः ॥
एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते ॥ ३२ ॥

श्रीभगवानुवाच ।

अहिंसा सत्यमस्तेय मसंगो ह्रीरसञ्चयः ॥
आस्तिक्यं ब्रह्मचर्य्यञ्च मौनं स्थैर्य्यं क्षमाऽभयम् ॥ ३२ ॥
शौचं जपस्तपोहोमः श्रद्धातिथ्यं मदर्च्चनम् ॥
तीर्थाटनं परार्थेहा तुष्टिराचार्य्य सेवनम् ॥ ३४ ॥
एते यमाः सनियमा उभयोर्द्वादशस्मृताः ॥
पुंसामुपासिता स्तात यथाकामं दुहन्ति हि ॥ ३५ ॥
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ॥
तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयोधृतिः ॥ ३६ ॥
दण्डन्यासः परंदानं कामत्याग स्तपः स्मृतम् ॥
स्वभावविजयः शौर्य्यं सत्यञ्च समदर्शनम् ॥ ३७ ॥
ऋतञ्च सूनृतावाणी कविभिः परिकीर्त्तिता ॥
कर्म्मस्वसंगमः शौचं त्यागः सन्न्यास उच्यते ॥ ३८ ॥
धर्म्मइष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥
दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम् ॥ ३९ ॥
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ॥
विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्म्मसु ॥ ४० ॥
श्रीर्गुणा नैरपेक्ष्याद्याः सुखदुःखसुखात्ययः ॥
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४१ ॥
मूर्खो देहाद्यहं बुद्धिः पन्था मन्निगमः स्मृतः ॥
उत्पथ श्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ॥ ४२ ॥

नरकस्तम उन्नांहो बन्धुर्गुरुरहं सखे ।
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥
दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः ॥
गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्य्ययः ॥ ४४ ॥
एत उद्धव ते प्रश्ना. सर्व्वे साधुनिरूपिताः ॥
किं वर्णितेन वहुना लक्षणं गुणदोषयोः ॥ ४५ ॥
गुणदोषदृशिर्दोषो गुणस्तूभयवर्ज्जितः ॥

इतिश्रीमहाभागवते महापुराणे उद्धव कृष्ण संवादे ज्ञानादेस्त्यागे एकादशस्कन्धे एकोनविंशोऽध्यायः ॥

पदारंभेषु निर्विण्णो विरक्तः संयतेन्द्रियः ॥
अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १ ॥

आत्मपुराणे ८ अध्याये ॥

कारणं कार्य्यजनकं नियतं संस्थितं यतः ॥
संन्यासोऽध्यात्मविज्ञानजनकः संप्रकीर्त्तितः ॥ १ ॥
संन्यस्यापि ततो नैव श्रवणादिकृतिर्हि या ॥
सोपादानाभिधा ध्यातुरालस्यादेव जायते ॥ २ ॥
कालतो जायते विश्वं कालाज्ज्ञानं भविष्यति ॥
श्रवणादौ ततो व्यग्रं चित्तं कुर्व्वन् न चोचितम् ॥ ३ ॥
शान्तिदान्त्यादि हीनाय विषयासक्तचेतसे ॥
अर्थिनेऽपि न दातव्यं गुरुणापि कृपालुना ॥ ४ ॥
अपुत्रायाप्यशिष्याय वक्तव्यं नाधिकारिणे ॥
उक्ते सत्यपि तत्सारो वक्तव्यः सर्व्वथा न हि ॥ ५ ॥
गुरुभक्त्या विहीनाय सर्व्वदा ऽप्यधिकारिणे ॥

## आत्मपुराणे षष्ठाऽध्याये ॥

अगृहीत्वैव दाराणां पाणिं परमनिर्वृताः ॥ ६ ॥
पुत्राणामपि वित्तानां लोकानां चोभयात्मनाम् ॥
इहामुत्रसुखार्थानां परित्यज्यैषणात्रयम् ॥ ७ ॥
भिक्षाचर्य्यं चरन्ति स्म संन्यासाश्रममागताः ॥
पुत्रैषणात्रया प्रोक्ता सैव वित्तैषणा स्मृता ॥ ८ ॥
पुत्राणामपि वित्तत्वं पितुः स्याद्गोधनादिवत् ॥
वित्तैषणा तु या प्रोक्ता सा स्याल्लोकैषणा सदा ॥ ९ ॥
वित्तं हि सुखहेतुः स्याल्लोको नाकादिको यथा ॥
उभेएव ततो ज्ञेये एषणे वेदवादिभिः ॥ १० ॥
एषणात्रयनिर्म्मुक्ता भिक्षाचर्य्यपरायणाः ॥
यंजानन्ति महात्मान स्तं को वेत्ति पुमान् सुधीः ॥ ११ ॥
तस्यैव ब्राह्मणस्यायं महिमा ब्राह्मणो भवेत् ॥
पदनीयात्मविज्ञानाद्यो ह्यात्मवपुः स्थितः ॥ १२ ॥
को नामान्यस्तरेदेते दुस्तरे पुण्यपातके ॥
यस्मात् पूर्व्वेपि विद्वांसः पुण्यपापविवर्ज्जिताः ॥ १३ ॥
एषणात्रयनिर्म्मुक्ता जाता भिक्षाटने रताः ॥
आत्मलोकेन संपन्नाः परिव्राज्या जितेन्द्रियाः ॥ १४ ॥
पश्चात् संन्यासजायायै ब्रह्मविद्यांसमर्प्यच ॥

## आत्मपुराणे १० अध्याये ॥

वेदान्तजात्मविज्ञानसुनिश्चितपदार्थकाः ॥ १५ ॥
संन्यासयोगतः शुद्धचित्ताः शान्त्यादि संयुताः ॥

यतयो यत्र जीवन्तः साक्षान्नैव विजानते ।। १६ ।।
इदं सुदुर्लभं ज्ञानं जन्मकोटिशतायुतैः ।।
प्राप्यते पुरुषव्याघ्रै गुरु शुश्रूषणादिना ।। १७ ।।
क्रमप्राप्तश्च संन्यासः सप्तत्याः स्यादनन्तरम् ।।
युवानः सर्व्वे एवैते आत्मज्ञानविवर्जिताः ।। १८ ।।
आत्मावलोकनार्थाय शान्तिदान्त्यादिसंयुतः ।।
सन्न्यसेत् सर्व्वकर्म्माणि श्रुतिस्त्वेवमुवाच ह ।। १९ ।।
सन्न्यस्य सर्व्वकर्म्माणि वेदान्तार्थविचारणा ।।
गुरूपदेशतः कार्य्या तर्केण ध्यानतोऽपि च ।। २० ।।
एवं ममाऽद्वितीयस्य चिदानन्दात्मरूपिणः ।।
साक्षात्कृतिर्भवेद्यस्य दुःखं नैतत् समाप्नुयात् ।। २१ ।।
वक्तव्यं साधुना युक्त मन्त्यजे वाथ वैरिणि ।।
पतितेऽपि दुराचारे तात्पर्य्येणेह पृच्छति ।। २२ ।।
मया पृष्टा इमे सर्व्वे एवं मौनं समाश्रिताः ।।
इमे न कर्म्म योग्याः स्युः सन्न्यस्तत्वाद्धि दुर्धियः ।। २३ ।।
विरक्तिं नैव चापन्नाः कोपे सति कुतो हि सा ।।
जन्मकष्टं नृणामेतत् कामः कष्टतरस्ततः ।। २४ ।।
क्रोधः कष्टतम स्तस्मात् स एतेषु समाश्रितः ।।
अविरक्तेषु किं नाम न्यासात् स्यात् फलमेषु हि ।। २५ ।।

आत्मपुराणे द्वितीयाऽध्याये ।।

प्रत्युतानेन पतनं भवेद्धि तनुमानिनाम् ।।
गुरूनेते न गच्छन्ति मूर्खाः पण्डितमानिनः ।। २६ ।।
स्वयञ्च न विजानन्ति मम सन्न्याससंभवम् ।।

कामक्रोधाद्यरिगणं सम्यक् संच्छिद्य सर्व्वदा ॥ २७ ॥
सकारणमहं ब्रह्मेतीत्थं विज्ञानहेतुना ॥
नितरामासनं स्वस्य पुनरावृत्तिवर्ज्जितम् ॥ २८ ॥
यदेतत् सहि सन्न्यास स्तर्हिं नैतेषु विद्यते ॥
अथवा संधियागम्यं फलजातं ससाधनम् ॥ २९ ॥
इहामुत्र च संत्यज्य नितरामासनं गुरौ ॥
आत्मविज्ञानसंतत्यै तदप्येषु न विद्यते ॥ ३० ॥
न हि सन्न्यासतो मुक्ति र्नटानां सा कुतो न हि ॥
किन्तु सर्व्वाभिलाषस्य कोपस्य च विवर्ज्जनात् ॥ ३१ ॥
सर्व्वात्मनाप्यशक्यत्वे साधुशास्त्रसमाश्रयात् ॥
कालुष्यं हि यथा हन्यान्नीराणां हि शरच्छनैः ॥ ३२ ॥
कामक्रोधौ तथा दीप्तौ साधुशास्त्रे हतः शनैः ॥
दुर्द्दान्तो हि यथा वाजी कालेन दममाव्रजेत् ॥ ३३ ॥
शिक्ष्यमाणो नरैस्तज्ज्ञैः शिक्षाभेदैरनेकशः ॥
दुर्द्दान्तं मन एवं हि कामक्रोधवशङ्गतम् ॥ ३४ ॥
गुरुशास्त्रैः शिक्ष्यमाणं दान्तं भवति कालतः ॥
आशानैतेषु साप्यस्ति नित्यं पण्डितमानिषु ॥ ३५ ॥
अनादृतवचः स्वात्मबोधशून्येषु कर्म्मिषु ॥

आत्मपुराणे तृतीयाऽध्याये ॥

याजनाध्यायनं चैव विशुद्धाच्च प्रतिग्रहः ॥ ३६ ॥
ब्राह्मणस्यैव कर्म्मैतत् क्षत्रियस्य न कर्हिंचित् ॥
सुखदुःखेसु नियते सशरीरस्य देहिनः ॥ ३७ ॥

इतिविज्ञानसंपन्नो मुमुक्षुर्देहदोषवित् ॥
सशिखं वपनं कृत्वा परित्यज्यान्यमाश्रमम् ॥ ३८ ॥
सपरिष्करमादाय तुरीयं मोक्षसाधनम् ॥
आश्रमं ज्ञानसंपन्नं गुरुमेत्य विधानतः ॥ ३९ ॥
वेदवाक्यानि श्रुत्वाथ गुरुवक्त्रारविन्दतः ॥
सार्थानि मनसा तेषामुपपत्तिं विचार्य्य च ॥ ४० ॥
परित्यज्य च पाण्डित्यं तत्त्वमस्यादिबोधने ।
एकाग्रं मन आपाद्य जड़वालपिशाचवत् ॥
अहं ब्रह्मेति वाक्यार्थः साक्षात् कृति मुपेयिवान् इति ॥ ४१ ॥
अस्यार्थः । मोक्षसाधनं ज्ञानमेव दृष्ट्वा तत्साधन-
सन्न्यासपूर्व्वकं श्रवणादि कर्त्तें त्याह ॥

साशिखमिति ॥ शास्त्रोक्तविधिना साशिखमुण्डनं कृत्वा ऽन्यं त्रयाणां वानप्रस्थान्तानामन्यतममाश्रमं ( मोक्षसाधनमादाय ) विहाय परिष्कैर्दण्डाद्युपकरणैः सहितं तुरीयमाश्रमं मोक्षसाधनमादाय गृहीत्वा अथ ब्रह्मनिष्ठं गुरुं विधिवदुपेत्याथ तस्य गुरोर्मुखाम्बुजात् सार्थानि वेदवाक्यानि श्रुत्वा तेषां वाक्यानां स्वार्थपरत्वे उपपत्तिञ्च शारीरकेप्रपञ्चितां मनसा विचार्य्य एतादृशं श्रवणं संपाद्येति यावत् । अथ तत्त्वमस्यादिवाक्यार्थबोधे पाण्डित्यं श्रवणाभ्यासं परित्यज्य रागद्वेषराहित्येन जड़वालपिशाचवद्भावरूपं मननं संपाद्याथ मनस एकाग्रता लक्षणं निदिध्यासनं श्रुतौ मौन शब्दोदितं संपाद्य तथा च श्रुतिः तस्माद्ब्राह्मणः पाण्डित्यं निर्व्विद्य

वाल्येन तिष्ठासेद्वाल्यं पाण्डित्यं निर्विद्याथ मुनिरिति तिष्ठासेत् स्थातुमिच्छेत् । अथोक्तसाधनफलभूतामहं ब्रह्म इत्याकारां वाक्यार्थ साक्षात् कृति मुपेयिवान्प्राप्त इति चतुर्णामर्थः ॥

आत्मपुराणे चतुर्थोऽध्याये ॥

अधिकारं विना तद्वद्विफलं ब्रह्मबोधनम् ॥
एवं वदन्मुनि र्नित्यमिच्छतामधिकारिणाम् ॥ १ ॥
कामक्रोधौ महाशत्रू देहिनां सहजावुभौ ॥
तौ विहाय परंशत्रुं योजयेत् स तु मन्दधीः ॥ २ ॥
युवयो र्यदि सामर्थ्यं जेतुं शत्रून् हि विद्यते ॥
जयत्वं दुर्जयौ शत्रू कामक्रोधौ महाबलौ ॥ ३ ॥
कामेन विजितो ब्रह्माकामेन विजितो हरः ॥
कामेन विजितो विष्णुः शक्रः कामेन निर्ज्जितः ॥ ४ ॥
अपरे त्वमराः किंनु नारीक्रीड़ामृगा हि ये ॥
पञ्चवाण स्ततो जेयः शत्रुरस्ति हि देहिनाम् ॥ ५ ॥
युवाभ्या ञ्च जितो नायं किन्तु तेन युवां जितौ ॥
जयन्ति मुनयः केचित् पञ्चवाणं कथञ्चन ॥ ६ ॥
तदीयं तनयं क्रोधं शक्ताजेतुं न ते पि हि ॥
पितृपुत्रौ महावीर्यौ कामक्रोधौ दुरासदौ ॥ ७ ॥
विजित्य सकलं विश्वं वर्त्तते जयकाशिनौ ॥
एकमेवाद्वितीयं यत् सोऽयमात्माशरीरिणाम् ॥ ८ ॥
अहंब्रह्मेति वाक्येन विज्ञेयो ब्रह्मरूपभृत् ।

आत्मपुराणे सप्तमाऽध्याये ॥

सतु संजातविज्ञानः सन्न्यासाय समुद्यते ॥ ९ ॥
ब्रह्मचर्य्याश्रमादेव निस्पृहोदारसंग्रहे ।
विरक्तंवीक्ष्य शिष्यन्तं भगवान् रविरब्रवीत् ॥ १० ॥
याज्ञवल्क्यात्र विद्यायाः प्रयच्छ गुरुदक्षिणाम् ।
संप्रदाय प्रवृत्त्याख्यां वेदानध्यापयाखिलान् ॥ ११ ॥
त्रैवर्णिकान् गृहस्थः सन् पश्चात् सन्न्यासमाव्रज ।
ब्रह्मविद्याञ्चसन्न्यस्य वेद वा पूर्व्वमेव वा ॥ १२ ॥
इत्युक्तो याज्ञवल्क्योऽपि तथेपि गुरुशासनम् ।
गृहीत्वा शिरसा भूमिं समागाद्भास्करो यथा ॥ १३ ॥
ऋषीणां ब्रह्मचर्य्येण ऋणं दत्तं यथामुना ।
देवानाञ्च पितॄणाञ्च दत्तवान् स तथैव तत् ॥ १४ ॥
अग्निष्टोमादिकान् यज्ञान् कृतवान् बहुदक्षिणान् ॥
स्वात्मनः सदृशान् पुत्रान् कन्यकाश्चोदपादयत् ॥ १५ ॥
ऋणं यद्यपि नैवास्ति विरक्तस्यास्य किञ्चन ॥
तथाप्याश्रमसंबन्धादृणमस्मिन्नुपागतम् ॥ १६ ॥
ब्रह्मचर्य्याश्रमी यद्वदृषीणां हि भवेदृणी ॥
ऋणीगृहस्थश्च तथा देवपित्रोः सदाभवेत् ॥ १७ ॥
सन्न्यासे तु कृते न स्याद्यत् स्यात् पूर्व्वाश्रमेऋणम् ॥
लौकिकञ्च यथा न स्यादृणं तद्वद्धि वैदिकम् ॥ १८ ॥
सन्न्यासिनामतः पूर्व्वं विदुषोऽपिभवेद्धितत् ॥
नैमित्तिकं निमित्ते स्यान्नियतं लोकवेदयोः ॥ १९ ॥

ऋणत्रये निमित्तं स्यात् पूर्व्वोक्तं ह्याश्रमद्वयम् ॥
द्विजानामाश्रमाभावो न प्रशस्तः कदाचन ॥ २० ॥
वनवासस्य नियतः काल उक्तो मनीषिभिः ॥
गृहस्थश्च यदा पश्येद्वलीपलित मात्मनः ॥ २१ ॥
अपत्यस्य तथापत्यं तदारण्यं समाश्रयेत् ॥
ब्रह्मचर्य्याद्गृहाद्वापिवनाद्वा प्रव्रजेद्यथा ॥ २२ ॥
न तथा ब्रह्मचर्य्यादि वनवासः श्रुतौ श्रुतः ॥
आनिपाताच्छरीरस्य ह्येकमाश्रममाश्रितः ॥ २३ ॥
तिष्ठेदित्यादि वचनं न क्रमं विनिवारयेत् ॥
ऋषीणामृणमत्यर्थमनायासान् मयार्पितम् ॥ २४ ॥
समर्प्यैव ततःशेषं प्राणिनां तदृणाद्वयम् ॥
सन्न्यस्य मित्यतोऽ मीयां पङ्क्तिभेदो न संभवेत् ॥ २५ ॥
याज्ञवल्क्यो यथा तद्वन्मैत्रेय्यपि चचारह ॥
सन्न्यासलिङ्गरहिता भुवमात्मस्वरूपिणी ॥ २६ ॥
द्विजोत्तम सलिङ्गःस्याच्चतुर्थाश्रम वासिनः ॥
वर्णिनामपि नान्येषां कुत एतत् स्त्रिया भवेत् ॥ २७ ॥
ब्रह्मचर्य्यादिकं धर्म्मं चतुर्थाश्रमवासिनाम् ॥
योपितश्च न कुर्व्वन्तु आश्रमस्य विधारणम् ॥ २८ ॥
विटादि वेषयुक्तोऽ पि चरेद्धर्म्मं मनिन्दितम् ॥
आश्रमेऽ नधिकारो य उक्तमाश्रमिणः सदा ॥ २९ ॥
कामं त्रैवर्णिकस्त्रीणां तथा क्षत्रियवैश्ययोः ॥
विज्ञानं वेदवाक्येन कारयेद्ब्राह्मणः स्वयम् ॥ ३० ॥

चतुर्थमाश्रमं नैव कारयेत्तु कदाचन ॥
लिङ्गधारणरूपं तमलिङ्गं धर्म्मतः समम् ॥ ३१ ॥
कारयेत् केऽपि कुर्य्युर्वा न धर्म्मकरणेन हि ॥
विरोधो विद्यते यद्वद्योगे शूद्रस्य कीर्त्तितः ॥ ३२ ॥
क्षत्रियाश्च तथा वैश्या स्तद्वत्त्रैवर्णिकाः स्त्रियः ॥
विद्यावन्तोऽपि नान्येभ्यः कुर्य्युरात्मोपदेशनम् ॥ ३३ ॥
उपदेशेऽपि विप्रस्य केऽपि नैवाधिकारिणः ॥
क्षत्रियः क्षत्रियं वापि वैश्यंवापि द्वयोः स्त्रियः ॥ ३४ ॥
विप्राद्यभावतः कामं शिष्यं कुर्व्वीत धर्म्मवित् ॥
वैश्यं वैश्यस्तथा वैश्यस्त्रियो वा धर्म्मसंयुताः ॥ ३५ ॥
शिष्यत्वेन प्रगृह्णीयात् कामं नोत्तमवर्णगाः ॥
स्त्रिय स्त्रैवर्णिकानां स्यु गुरवो नैव कर्हिचित् ॥ ३६ ॥
अनधीता यत स्त्वेता वेदवाक्याविचक्षणाः ॥
संप्रदायस्य विच्छेदे कामं त्रैवर्णिकस्त्रियः ॥ ३७ ॥
उपदेशान् प्रकुर्व्वन्तु समानान् धर्म्मान् प्रति ॥
त्रैवर्णिका स्तु विज्ञाय संप्रदायं स्वयं धिया ॥ ३८ ॥
वेदेभ्योऽप्यवगच्छन्तु वक्रभावे स्थिते सति ॥
ब्राह्मणानां स्त्रियो विप्रो गुरुरुक्तो न चापरः ॥ ३९ ॥
अन्यस्यापि भवेदेष गुरुः सर्व्वशरीरिणः ॥
अत्रापि कुलविद्यादि सपन्नः पितृत स्तथा ॥ ४० ॥
मातृत श्चापि संवद्धः प्रशस्तो गुरुरीरितः ॥
पतिः सर्व्वत्र नारिणां प्रथमः प्रोच्यते गुरुः ॥ ४१ ॥

तदभावाद्धवेदन्य उत्तमोऽपि समोऽपिवा ॥
वर्णो नैव निकृष्टः स्यादधमः कस्यचिद्गुरुः ॥ ४२ ॥
कस्यां चिदपि विद्यायामापद्यपि च कर्हिंचित् ॥
शूद्रादय स्तदीयाया योषितो यदि धर्म्मतः ॥ ४३ ॥
वर्त्तन्ते तत्र विज्ञेयं पुराणादे श्च वाक्यतः ॥
उपदेशन मन्त्रं स्याद्वेद वाक्यान्न कर्हिंचित् ॥ ४४ ॥
यदाधमो गुरुर्ब्रूयात् कदाचित् संकटे सति ॥
वर्णिनो विक्रयादेव विद्यामस्मात् समाप्नुयात् ॥ ४५ ॥
निःस्पृहो यदि तत्रापि तदान्य विद्यया प्नुयात् ॥
विद्या गुरुश्च नो तस्मादधिकं कारयेत् क्वचित् ॥ ४६ ॥

॥ इति आत्मपुराणउक्तं ॥

अस्यार्थः । अत्राभिप्रायमाह ॥ चतुर्थमिति स ब्राह्मण उक्ताधिकारिणां लिंगधारणारूपं क्षत्रियवैश्ययोःचतुर्थमाश्रमन्तु न कारयेत् लिंगधारणादि निषेधात् यदि तं चतुर्थाश्रमं कारयेत्तदा कुटीचकपरं पूर्व्वमुक्तं । अलिंगं दण्डादिलिङ्गरहितं ब्रह्मचर्य्यादिधर्म्मैः समवेतं कारयेत् । न वा के ऽपि विप्रभिन्ना स्तं लिङ्गधारणारूपं चतुर्थाश्रमं कुर्य्युः । यदि कुर्य्यु स्तदा ऽलिङ्गं धर्म्मतः समं कुर्य्युः हि यतोधर्म्ममात्रानुष्ठानेन कोऽपि श्रुत्यादि विरोधो विद्यते । विशेषानुष्ठाने तु स विद्यते । अत्रोदाहरणं शूद्रः यथा शूद्रस्य श्रौतस्मार्त्तयागेषु शूद्रो यज्ञे ऽनवक्लृप्त इत्यादि वाक्यैः पर्य्युदास स्तत्तुल्य दानादि साधारणं धर्म्मेष्व-

नुमतिर्नमस्कारेण पञ्चयज्ञान् न हापयेदिति वाक्यैरिति द्वयोरर्थः । ब्राह्मणादितरे तु दण्डधारणादिकमकृत्वा ऽहिंसा सत्यादिकं यतिधर्म्मं कुर्व्वीरन् तेषां साधारण धर्म्म त्वेनापि पुराणादिषु विधानादित्याशयेनाह । अब्रह्मचर्य्या दिकमिति चतुर्थाश्रमवासिनां यो ब्रह्मचर्य्यादिरूपो धर्मस्तद नुष्ठान रूपमुत्तमाश्रम धारणं योषित् क्षत्रियाद्याश्च कुर्व्वन्त्वि ति सम्वन्धः ब्रह्मचर्य्यमुपस्थसंयमः ॥ ५ ॥ १६ ॥

वर्णो नैव इति ॥ निकृष्टोऽवमो विप्रापेक्षया अधमानां क्षत्रियादीनां मध्ये निकृष्टो वर्णः शूद्रस्तु कदाचिदापद्यपि कस्यामपि विद्यायां गुरुर्न स्यात् इत्यर्थः । एतेनापदिक्षत्रियादे र्गुरुत्वमनुमतमिति ॥ शुद्रादय इति । आदिपदेन संकर-जातयः । तदीयाः शूद्रजातीयाः । एतेषामात्म जिज्ञासायां सत्यां पुराणवाक्यादिकाव्यादि वाक्यश्रवणेन ज्ञानं संपाद्यं अत्र शुद्रादिषु वेदवाक्ये नोपदेशनं तु कदाचित् न कर्तव्य मित्यर्थः । तथाच श्रुतिः । पद्युवा एतत् श्मशानं यच्छूद्र स्तस्मात्तत् समीपे नाध्येतव्यमिति । पद्यु पादयुक्त मिति॥

(योगवासिष्ठे मुमुक्षुप्रकरणे वैराग्यंदर्शयति १३ स्वर्गः)

परस्परविनाशोक्तेः श्रेयःस्थो न कदाचन ॥
सुखदुःखदशे राम तडित् प्रासर भङ्गुरे ॥ १
ये विरक्ता महात्मानः सुविविक्ता भवादृशाः ॥
पुरुषान् विद्धि तान् वन्द्यान् भोगमोक्षैकभाजनान् ॥ २ ॥
विवेकं परमाश्रित्य वैराग्याभ्यासयोगतः ॥

संसारसरितं घोरामिमामापदमुत्तरेत् ॥ ३ ॥
न स्वप्तव्यञ्च संसारमायास्विह विजानता ॥
विषमूर्च्छन सन्मोहदायिनीषु विवेकिना ॥ ४ ॥
संसारमिममासाद्य य स्तिष्ठत्यवहेलया ॥
ज्वलितस्य गृहस्योच्चैः शेते तार्णस्य संस्तरे ॥ ५ ॥
यत् प्राप्य न निवर्तन्ते यदासाद्य न शोचते ॥
तत्पदं शेमुषीलभ्य मस्त्येवात्र न संशयः ॥ ६ ॥
तत् प्राप्तावुत्तम प्राप्तौ न क्लेश उपजायते ॥
न धनान्युपकुर्व्वन्ति न मित्राणि न वान्धवाः ॥ ७ ॥
न हस्तपादचलनं न देशान्तरसंगमः ॥
न कायक्लेशवैधुर्य्यं न तीर्थायतनाश्रयाः ॥ ८ ॥
पुरुशार्थैक साध्येन वासनैकार्थकर्म्मणा ॥
केवलं तन्मनोमात्रजयेनासाद्यते पदम् ॥ ९ ॥
विवेकमात्रसाध्यं तद्विचारैकान्तनिश्चयम् ॥
त्यजतादुःखजालानि नरेणैतदवाप्यते ॥ १० ॥
सुखासेव्यासनस्थेन तद्विचारयता स्वयम् ।
न शोच्यते पदं प्राप्य न सभूयोहि जायते ॥ ११ ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वाच भुक्त्वा स्नात्वा शुभाशुभम् ।
न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥ १२ ॥
यः समः सर्व्वभूतेषु भावि काङ्क्षति नोज्झति ।
जित्वेन्द्रियाणि यत्नेन स शान्त इति कथ्यते ॥ १३ ॥
स्पृष्ट्वा त्वदातया वुद्ध्या यथैवान्त स्तथावहिः ॥

दृश्यन्ते यत्र कार्य्याणि स शान्त इति कथ्यते ॥ १४ ॥
तुषारकरविम्वाभं मनो यस्य निराकुलम् ।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ १५ ॥
स्थितोऽपि न स्थित इव न हृष्यति न कुप्यति ।
यः सुषुप्तसमः स्वस्थः स शान्त इति कथ्यते ॥ १६ ॥
अमृतस्यन्दसुभगा यस्य सर्व्वजनं प्रति ।
दृष्टिः प्रसरति प्रीता स शान्त इति कथ्यते ॥ १७ ॥
योऽन्तः शीतलतां यातो यो भावेषु न सज्जति ।
व्यवहारी न संमूढः स शान्त इति कथ्यते ॥ १८ ॥
अप्यापत्सु दुरन्तासु कल्पान्तेषु महत्स्वपि ।
तुच्छेऽहं न मनो यस्य स शान्त इति कथ्यते ॥ १९ ॥
आकाशसदृशी यस्य पुंसः संव्यवहारिणः ।
कलङ्कमेति न मतिः स शान्त इति कथ्यते ॥ २० ॥
तपस्विषु वहुज्ञेषु याजकेषु नृपेषु च ।
वलवत्सु गुणाढ्येषु शमवानेव राजते ॥ इति ॥ २१ ॥
योगवासिष्ठे मुमुक्षु प्रशंसा १४ सर्गः ॥
न विचारंविना कश्चिदुपायोऽस्ति विपश्चिताम् ।
विचाराद शुभं त्यक्त्वा शुभमायाति धीः सताम् ॥ २२ ॥
या विवेक विकासिन्यो मतयो महतामिह ॥
न ता विपदि मज्जन्ति तुम्वकानीव वारिणि ॥ २३ ॥
विवेकितोदितादेहे सर्व्वं शीतलयत्यलम् ।
अलं करोति चात्यन्तं ज्योत्स्नेव भुवनं यथा ॥ २४ ॥
न च शाम्यति नाप्यन्तर्नापि वाह्येऽवतिष्ठति ॥

न च नैष्कर्म्म्यमादत्ते न च कर्म्मणि मज्जति ॥ २५ ॥
उपेक्षते गतं वस्तु संप्राप्तमनुवर्त्तते ॥
न क्षुब्धो न च वाक्षुब्धो भाति पूर्ण इवार्णवः ॥ २६ ॥
एवं पूर्णेन मनसा महात्मानो महाशयाः ॥
जीवन्मुक्ता जगत्यस्मिन् विहरन्तीह योगिनः ॥ २७ ॥
वेद वेदान्त सिद्धान्त स्थितयः स्थितिकारणम् ॥
निर्णीयन्ते विचारेण दीपेन च भुवोनिशि ॥ २८ ॥
विवेकान्धो हि जात्यन्धः शोच्यः सर्व्वस्य दुर्मतिः ॥
दिव्यचक्षुर्विवेकात्मा जयत्यखिलवस्तुषु ॥ २९ ॥

मुमुक्षुप्रकरणे १५ सर्गः ॥

सन्तोषोहि परं श्रेयः सन्तोषः सुखमुच्यते ॥
सन्तुष्टः परमभ्येति विश्राममरिसूदन ॥ ३० ॥
आत्मनात्मनि सन्तोषं यावद्याति न मानसम् ॥
उद्भवन्त्यापदस्तावल्लता इव मनोविलात् ॥ ३१ ॥
सन्तोषशीतलं चेतः शुद्ध विज्ञान दृष्टिभिः ॥
भृशं विकाशमायाति सूर्य्यांशुभिरिवाम्बुजम् ॥ ३२ ॥

योगवासिष्ठे मुमुक्षुप्रकरणे १६ सर्गः ॥

विशेषेण महाबुद्धे संसारोत्तरणे नृणाम् ॥
साधुसङ्गतरोर्जातं विवेककुसुमं सितम् ॥ ३३ ॥
रक्षन्ति ये महात्मानो भाजनं ते फलश्रियः ॥
विवेकः परमो दीपो जायते साधुसङ्गमात् ॥ ३४ ॥
मनोहरोज्ज्वलो नूनमासेकादिवगुच्छकः ॥

यः स्नातः शीतसितया साधुसङ्गतिगङ्गया ॥ ३५ ॥
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥
सन्तोषः परमोल्लाभः सत्सङ्गः परमागतिः ॥ ३६ ॥
विचारः परमंज्ञानं शमो हि परमं सुखम् ॥
मोक्षोपायाववोधेन शुद्धान्तःकरणं जनम् ॥ ३७ ॥
न खेदयति भोगौघो न चानन्दयति क्वचित् ॥
दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् ॥ ३८ ॥
गुरुशुश्रूषया युक्तात् कृच्छ्राशीतिफलं लभेत् ॥
तुर्य्ये विश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ॥ ३६ ॥
जीवितोऽजीवितश्चैव गृहस्थस्य तथा यतेः ॥
न कृते नाकृते नार्थो न श्रुतिस्मृतिविभ्रमैः ॥ ४० ॥
निर्म्मन्दर इवाम्भोधिः स तिष्ठति यथा स्थितम् ॥
योगवासिष्ठे १२ सर्गे वैराग्यखण्डे ॥

## श्रीराम उवाच

किं नामेदं भवसुखं येयं संसारसन्ततिः ॥ ४१ ॥
जायते मृतये लोको म्रियते जननाय च ॥
अस्थिराः सर्व्व एवेमे सचराचरचेष्टिताः ॥ ४२ ॥
आपदां पतयः पापा भावा विभवभूमयः ॥
असदेव वयं कष्टं विकृष्टा मूढ़बुद्धयः ॥ ४३ ॥
मृगतृष्णाम्भसा दूरे वने मुग्धमृगाइव ॥
जरा मरण मापच्च जननं सम्पद स्तथा ॥ ४४ ॥
आविर्भाव तिरोभावै र्विवर्द्धन्ते पुनः पुनः ॥

खलाः काले काले निशि निशित मोहैक मिहिका ।
गता लोके लोके विषयशतचोराः सुचतुराः ॥
प्रवृत्ताः प्रोद्युक्तादिशिदिशि विवेकैकहरणे ॥
रणेशक्ता स्तेषां क इव विदुषः प्रोज्झ्य सुभटाः॥ ४५ ॥

अस्यार्थः । खला इति । अज्ञान लक्षणायां निशि लोके जनेमोहोऽविचार स्तल्लक्षणाभिर्मिहिकाभि स्तुषार-धूमैर्गतालोके विनष्टशास्त्रज्योतिषि सति खलाः परदुःखदा दिशिदिशि सर्व्वदिक्षु विवेक लक्षण मुख्य रत्नहरणे प्रोद्युक्ताः प्रकृष्टोद्योग युक्ताः सन्तः प्रवृत्ता वर्त्तन्त इति शेषः ॥

रणे युद्धे तेषां वधाय विदुषःप्रोज्झ्य तत्त्वज्ञानं विहाय अन्ये के सुभटाः शक्ता न केऽपीत्यर्थः । इवकारस्तत्तत् सदृशानामपि दौर्लभ्य द्योतनार्थः । विना तमोनाशं तद्वधा-सम्भवादिति भावः ॥ ४५ ॥

( अथेदानीं प्रायः परमहंसमेव प्रचरतीति तदेव प्रस्तूयते) बह्वृचपरिशिष्टे ॥ यथोक्तचारिणं भिक्षुं गुरुमेकं परिग्रहेत् । यतिवृन्दैरनुज्ञातो मोक्षाश्रममुपाश्रयेदिति ॥ ( संन्यासारम्भकालीनं प्रथमं प्रायश्चित्तं कर्तव्यमित्याह । ) ॥ कात्यायनः ॥ कुर्य्यात् कृच्छ्राणि चत्वारि सन्न्यसेत् यस्त्व नाश्रमी ।आश्रमी। कृच्छ्रमेकन्तु कृत्वा सन्न्यास मर्हतीति॥१

एतल्लक्षणमाह ॥ याज्ञवल्क्यः ॥
एक भुक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः ॥ २ ॥
यथा कथंचित् त्रिगुणः प्राजापत्योऽयमुच्यते ॥

अथ ग्रासनियममाह । पाराशरसंहितायां ॥
सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ॥
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम् ॥ ३ ॥
( प्राजापत्याशक्तौ धेनुं दातव्यं तत् प्रमाणमाह मनुः ।)
प्राजापत्य क्रिया शक्तौ धेनुं दद्याद्द्विजोत्तम ॥
धेनोरभावेद्दातव्वं मूल्यं तुल्यं नसंशयः ॥ ४ ॥

मूल्येऽप्यनुकल्पमाह । गवाभावे तु निष्कं स्यात्त-दर्द्धं पादमेव च ॥ इति ॥ निष्कमिति चत्वारिंशन्माष-परिमितसुवर्णादेः संज्ञा तत्र प्रथमं सुवर्णनिष्कं तद-भावेरजतनिष्कं । अशक्तौ निष्कार्धं तत् पादमात्रं वा ॥ अत्यन्तमशक्तौ पादस्यार्द्धमपि मूल्यमित्यपि केचित् ॥ ॥ पुनरपि कात्यायनः ॥ कृच्छ्रां स्तु चतुरः कृत्वा पावनार्थ मनाश्रमी आश्रमीचेत्तप्तकृच्छ्रं तेनासौ योग्यतां व्रजेत् ॥ इति ॥ विश्वेश्वरपद्धतौ स्मृत्यन्तरेऽपि ॥
( संन्यासविधौ प्रायश्चित्तं प्रथमं कर्त्तव्यं वौधायनमतमाह )
अनाश्रमी चतुरः कृच्छ्रानात्मशुद्ध्यर्थं विदध्यादाश्रमी तप्तकृच्छ्रमेकमिति । कृच्छ्रानिति प्राजापत्य कृच्छ्रान् ॥ तथा च वह्वृचपारिशिष्टे ॥ मुमुक्षुरात्मशुद्धये एकं तप्त-कृच्छ्रं कृत्वा अनाश्रमी च प्राजापत्यानिति ॥ अनेन कृच्छ्राचरणेनात्मशुद्धिद्वारा सन्न्यास योग्यता भवति। तथा च स्मृत्यर्थसारे ॥ कृच्छ्रां स्तु चतुरः कृत्वा इति पूर्व्वोक्तं ॥ तथा च सूत सहितायां ॥ क्रोधपैशून्यनिद्रादि दूरतः परि वर्ज्जयेत् ॥ कृच्छ्रं चान्द्रायणं कुर्य्यान्मासि मासिवने स्थितः

कृच्छ्रू चान्द्रायणमितिकृच्छ्रू लक्षणानि प्राजापत्यलक्षणानि मनुनोक्तानि ॥ त्र्यहं प्रात स्त्र्यहंसायं त्र्यहमद्यादयाचितम् ॥ त्र्यहंपरन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥ यथाकथञ्चित् त्रिगुणः प्राजापत्योऽयमुच्यते ॥ वसिष्ठः ॥ अहः प्रातरहर्नक्तमहरेकमयाचितम् । अहः पराकं तत्रैव मेवं चतुरहौपरौ ॥ इति ॥ पराक उपवासः । एकभक्त नक्तमयाचित उपवास इति त्रिरावृत्त्याद्वादश दिनसाध्य इति तत्प्रमाणमपि एक भुक्तादिषु ग्राससंख्या ॥ आपस्तम्बः सायं द्वाविं शति र्ग्रासाःप्रातः षडविंशतिः स्मृताः॥ चतुर्विंशति रयाच्याः परंनिरशनं स्मृतमिति ! एवमपि पाराशरेनोक्तं ॥ ग्रास प्रमाणमाह ॥ कुक्कुटाण्ड प्रमाणञ्चयावांश्चप्रविशेन्मुखं॥ विशेत् सुखमिति वापाठः॥ प्रायश्चित्त्वानन्तरं पञ्चगव्यभक्षणं तत् शोधनप्रमाणमाह ॥

गायत्र्या गृह्य गौमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति क्षीरंच दधिक्राव्णेति वै दधि ॥ १ ॥
तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥
पञ्चगव्यमृचा पूतं स्थापयेदग्निसान्निधौ ॥ २ ॥
आपोहिष्ठेति चालोड्य मानस्तोकेति मन्त्रयेत् ॥
सप्तावरा स्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥ ३ ॥
एभिरुद्धृत्य होतव्यं पञ्चगव्यं यथा विधि ॥
इरावती इदं विष्णुर्मानस्तोके च शंवती ॥ ४ ॥
एतै रुद्धृत्य होतव्यं हुतशेषं स्वयं पिवेत् ॥
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेनतु ॥ ५ ॥

उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेनतु ॥
सर्व्वेषामेव पापानां सङ्करेसमुपस्थिते ॥
शतसाहस्रमभ्यस्ता गायत्री शोधनं परम् ॥ ६ ॥
॥ मनुः ॥ सावित्री ऋच जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्व्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थ मादृतः ॥ ७ ॥
। याज्ञवल्क्यः । कुर्य्यात् त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा । पवित्राणि जपेत् पिण्डान् गायत्र्याचाभिमन्त्रयेत् ॥८॥
अस्यार्थः ॥ मिताक्षरायां स्मर्य्यते ॥

अथ कृच्छ्रचान्द्रायणव्रत साधारणीय मिति कर्तव्यतामाह ॥ कृच्छ्रं प्राजापत्यादिकं चान्द्रायणं वा त्रिषवणस्नानयुक्तः कुर्य्यात् एतच्च तप्तकृच्छ्रव्यतिरेकेण तत्र सकृत्स्नायी-समाहित इति मनुना विशेषाभिधानात् । यत् पुनस्तप्त-कृच्छ्रेषु त्रिषवणस्नानमभिहितं त्रिरन्हि त्रिनिशायान्तु सवासाजलमाविशेदिति तदशक्तविषयं । यत्पुनर्वैशंपायनेन द्वैकालिकं स्नानमुक्तं । स्नानं द्विकालमेव स्यात् त्रिकालं वा द्विजन्मन इति तत्त्रिषवणस्नानाशक्तस्य वेदितव्यं । यत्पुनर्गार्ग्येण एकवासाश्चरेद्भैक्ष्यं स्नात्वा वासो न पीड़येत् तदपि शक्तस्यैव एकवासा आर्द्रवासा लघ्वाशी स्थण्डिलेशय इत्येकवस्त्रतया अपि शंखेन पाक्षिकत्वा-भिधानात् । स्नाने च हारीतेनविशेष उक्तः त्र्यवरं शुद्ध-वतीभिः स्नात्वाऽघमर्षणमन्तर्जलेजपित्वाधौतमहतं वासः परिधाय साम्ना सौम्येनादित्यमुपतिष्ठेदिति । स्नानान्तर-ञ्च पवित्राणि जपेत् पवित्राणि च अघमर्षणं देवकृतः

शुद्धवत्यस्तरत्समा इत्यादि वशिष्ठादिप्रतिपादितानामन्यतमान्यर्था विरुद्धेषु कालेषु जपेत् सावित्रीं वा ॥

सावित्रीं वा जपेन्नित्यं पवित्राणि च शक्तित इति ॥

ऋषिभं विरुजञ्चैव तथा चैवाघमर्षणं ॥

गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरम् ॥ १ ॥

शतमष्टशतं वापि सहस्रमथवा परम् ।

उपांशुमनसा वापि तर्पयेत् पितृदेवताः ॥

मनुष्यांश्चैवभूतानि प्रणम्य शिरसा तत इति ॥

तथा पिण्डांश्च प्रत्येकं गायत्र्याचाभिमन्त्रयेत् । यमेनापि विशेष उक्तः ॥ अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्याचाभिमन्त्रितम् प्राश्याचम्य पुनःकुर्य्याद न्यस्याप्यभि मन्त्रण मिति ३ ॥ कृच्छ्रातिकृच्छ्रमाह ॥ एक विंशतिरात्रं पयसा वर्त्तनं कृच्छ्राति कृच्छ्राख्यं व्रतं विज्ञेयं गौतमेन तु द्वाशरात्रमुदकेन वर्त्तनं कृच्छ्राति कृच्छ्र इत्यक्तं ॥ अब्भक्ष स्तृतीयः स कृच्छ्राति कृच्छ्र इति अतश्च शक्त्य पेक्षया तयोर्व्यवस्था ॥ सम्पूर्णादानाशक्ता वपि अनुकल्पमाह ॥ गवामभावे निष्कं स्यात् तदर्द्धं पाद मेवच इति स्मरणात् मूल्यदानस्याप्य शक्तौ तावन्तो वो पवासाः कार्य्याः तत्राप्य शक्तौ गायत्रीजपः षट् त्रिंशल्लक्षसंख्यकः कार्य्यः ॥ कृच्छ्रो युतन्तु गायत्र्या उपवासास्तथैवच । धेनुप्रदानं विप्राय सममेतच्चतुष्टयमिति । यत्तु चतुर्व्विंशति मतेऽभिहितं ॥

गायत्र्या स्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ॥

लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ १ ॥

पुनाति हेमहर्त्तारं गायत्र्या लक्षसप्ततिः ॥
गायत्र्याः षष्ठिभिर्लक्षै र्मुच्यते गुरुतल्पग इति ॥ ॥
द्वादशवार्षिकतुल्यविधानतयोक्तं न पुनरशक्तविषयमिति न दोषः ॥ एवमन्येऽपि ॥
कृच्छ्रोदेव्यायुतञ्चैव प्राणायामशतद्वयम् ॥
तिलहोम सहस्रन्तुवेदपारायणं तथेत्यादयः
प्रत्याम्नाया श्चतुर्व्विंशति मतादिशास्त्राभिहिताः ॥
षष्ट्यधिक त्रिशत गुणित महापातकेषु वोद्धव्याः ॥

अति पातकेषु सप्तत्यधिक शतद्वयं प्राजापत्यानां कर्त्तव्यं तावन्तो वा धेन्वादयः प्रत्याम्नायाः पातकेषु साशीतिशतं प्राजापत्याः प्रत्याम्नायाः धेन्वादय स्तावन्त एव वा तथा चतुर्व्विंशति मतेऽभिहितं जन्मप्रभृति पापानिवहूनिविविधानि च । कृत्वा वागूब्रह्महत्यायाः षडब्दं व्रत माचरेत् ॥ प्रत्याम्नाये गवां देयं साशीतिधनिनाशतं तथाष्टादशलक्षाणि गायत्र्या वा जपेद्बुधः ॥ इति ॥

इदमेव च द्वादशवार्षिके व्रते द्वादशदिनै रेकैकप्राजापत्यं कल्पनायां लिङ्गं । एवमुपपातकेषु त्रैवार्षिकप्रायश्चित्तविषयभूतेषु नवति प्राजापत्या स्तावन्तो धेन्वादयः प्रत्याम्नायाः त्रैमासिकविषयेषु पुनः सार्द्धसप्त प्राजापत्याः प्रत्याम्नायाश्च धेनूदवासादय स्तावन्त एव ॥

मासिकव्रत विषयेषु सार्द्धप्राजापत्यद्वयं तावानेव प्रत्याम्नाय श्चान्द्रायणविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयं ॥ तदशक्तस्य प्रत्याम्नाय स्तावानेव यत्तु पुनश्चतु-

र्विंशतिमतेऽभिहितं॥ अष्टौचान्द्रायणे देया प्रत्याम्नायविधौ सदेति तदपि धनिनः पिपीलिकामध्यादि चान्द्रायणप्रत्याम्नाय विषयं। मासातिकृच्छ्रविषय भूतेषु पुनरुपपातकेषु सार्द्ध-सप्तप्राजापत्याम्नायाश्च धेन्वादयस्तावन्त एव॥ प्राजापत्ये तु गामेकां दद्यात् सान्तपने द्वयं। पराकतप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गास्तथेति चतुर्विंशतिमतेऽभिधानात्॥ एतच्चैकैकं ग्रासमश्नीयादित्यामलकपरिमितैकैकग्रासपक्षे वेदितव्यं पाणि पूरान्न भोजन पक्षे पुनर्धेनुद्वयमेव प्राजापत्यस्य षडुप-वास तुल्यत्वात् द्विगुणत्वाच्चातिकृच्छ्रस्य यद्यपि नवसुदिवसे-षु पाणि पूरान्नं भोजनं तथापिनैरन्तर्येण द्वादशदिवसानुष्ठा-नेक्लेशातिशयः षडहोपवाससमानप्राजापत्यद्वयतुल्यमेव प्राजापत्यस्य षडुपवासतुल्यत्वंयुक्तमेव॥ तथाहि प्रथमेत्र्यहे सायन्तनभोजनत्रयनिवृत्तावेकोपवाससंपत्तिः द्वितीये त्र्यहे प्रातःकाल भोजनत्रयवर्ज्जने परस्य तथा अयाचितत्र्यहेऽपि सायन्तनभोजनत्रयवर्ज्जनेऽन्यस्येत्येवं नवभिर्दिनैरुपवास-त्रयं। ततश्चान्त्यत्र्यहोपवास त्रयमिति युक्तं षडुपवास तुल्यत्वं॥ ऋषभैकादशगोदानसहित त्रिरात्रोपवासात्मकगोवधव्रते तु सार्द्धैकादशप्राजापत्यास्तावत् संख्यकाश्चोपवासादयः प्रत्याम्नायाः। मासपयोव्रते तु सार्द्धप्राजापत्यद्वयम्॥ पराकात्मके तूपपातक व्रते प्राजापत्यत्रयं पराकतप्तातिकृ-च्छ्रस्थाने कृच्छ्रत्रयं चरेत्॥ सान्तपनस्य चाप्यर्द्धमशक्तौ व्रतमाचरेदिति। षट्त्रिंशन्मतेऽभिधानात्। चान्द्रायणपराक-कृच्छ्रातिकृच्छ्रास्तु प्राजापत्यत्रयात्मकंद्वादशवार्षिक व्रत

स्थाने विंशत्युतरशतसंख्या अनुष्ठेयाः तत् प्रत्याम्नायास्तु धेन्वादयस्त्रिगुणाः चतुर्विंशतिमतेऽभिहितमिति ॥

विप्राद्वादश वा भोज्याः पावकेष्टि स्तथैवच ॥
अन्या वा पावनी काचित् समान्याहुर्मनीषिणः ॥ इति ॥
प्राजापत्यस्थाने द्वादशानां विप्राणां भोजनमुक्तं तन्निर्द्धन-विषयं ॥ इति मिताक्षरा धृतवचनमुक्तं ॥

अथ विश्वेश्वर पद्धतौ मतमाह ।
कृच्छ्रा युतन्तु गायत्र्या द्वादशविप्रभोजनम् ॥
तिलहोमसहस्रं च वेदाध्ययनमेवच ॥
विप्राद्वादश वा भोज्याः पावकेष्टिस्तथैव च ॥ इति
तप्तकृच्छ्रन्तु प्राजापत्य द्वयं प्रात्याम्नायकल्पं ॥

ततोऽनन्तरं द्वितीय नित्यपञ्चयज्ञाद्यभावजन्य प्रायश्चित्तं कर्त्तव्यमाह । पुनः स्नात्वा आर्द्रवासाः सन् आचम्य जलमादाय मासाद्युल्लिख्य ममोपनयनदिवसादारभ्य अद्यदिनपर्य्यन्तं नित्यपञ्चमहायज्ञाद्यभावजन्यपापनिराशार्थं प्रति संवत्सरे एकैकप्राजापत्यं कृत्वा इयत् संख्यक प्राजापत्यव्रतानु कल्पधेनुं तत्मूल्य दानरूपं वा प्रायश्चित्तं कर्त्तव्यमेव ॥ इति संकल्प्यम् ॥ तृतीय प्रायश्चित्तन्तु । सन्न्यास निमित्त्यर्थं गृहाश्रमिणां एकतप्त कृच्छ्रव्रतं प्रायाश्चित्तं कर्तव्यं अनाश्रमि स्तु चतुः कृच्छ्रव्रतं कर्तव्यमेवेति ॥ तत् प्रमाणमाह कात्यायनः ॥

कृच्छ्रां स्तु चतुरः कृत्वा पावनार्थमनाश्रमी ॥
आश्रमी चेत्तप्त कृच्छ्रं तेनासौ योग्यतां व्रजेत् ॥ इति ॥

मुख्यकल्पे समर्थेन चानुकल्पो न स्वी कर्त्तव्यः। तथाचमनुः। प्रभुःप्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न सांपरयिकतस्य दुर्म्मतेर्विद्यतेफलमिति।।ब्रह्मानन्दीयपद्धत्यनुसृत्य प्रयोगमात्र मुच्यते । संन्यासयोग्यतासिद्ध्यर्थं चतुः कृच्छ्रात्मकं प्रायश्चित्तं प्रति कृच्छ्रमेकैकं धेनु निष्क्रयद्रव्यद्वारा प्रायश्चित्तं कर्त्तव्यमिति ॥ उक्तंपुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्व्वपेदिति

सन्न्यासे योग्यता सिध्यर्थं आश्रमिणां एकतप्त कृच्छ्र व्रतानु कल्प एकधेनुः किम्वा तत् मूल्य दानरूपं प्रायश्चित्तं करणीयमिति ॥ अनाश्रमिणान्तु विशेषमाह ॥

सन्न्यासे योग्यता सिध्यर्थं चतुः कृच्छ्रात्मक प्रति कृच्छ्र मेकैकधेनु तत् मूल्यं वा निष्कं द्वादश कार्षापणलभ्य रजत खण्डदानरूपप्रायश्चित्तमहं करिष्ये इति संकल्प्य ॥
ततो गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात् तस्मात् शिवं मे स्यात् इहलोके परत्रचेति ॥
इमं मन्त्रं पठेत् ॥ ततो दक्षिणात् सर्गं कुर्य्यात् ॥

ततः पुनः स्नात्वा धौतवस्त्रादिकं परिधायाचम्य पूर्व्वोक्त मग्नौ पुनः प्रायश्चित्तहोमं कृत्वा अग्निं विसृज्य दक्षिणात्- सर्गमच्छिद्रावधारणं नामोच्चारणादिकञ्च विधाय पञ्चगव्यं पिवेदिति एतत् प्रायश्चित्तत्रयं कर्म्मसन्न्यासयोग्यतां करोतीति। ततो गुर्व्वाज्ञया प्रायश्चित्तधनं ब्राह्मणेभ्यो दद्यात् ॥ इति प्रायश्चित्तकर्म्म समाप्तम् ॥

अथेदानीं सन्न्यास विधि निरूपणमाह नारदपरि-

व्राजकोपनिषदि । अथनारदः पितामहं सन्न्यासविधिं नो ब्रूहीति पप्रच्छ । पितामह स्तथेत्यङ्गीकृत्या तुरे वा क्रमेवापि तुरीयाश्रमस्वीकारार्थं कृच्छ्र प्रायश्चित्तपूर्व्वकमष्ट श्राद्धं कुर्य्यात् । श्राद्धदेवता विशेषेणाह । नारद परिव्राजके ॥ देवर्षि दिव्य मनुष्य भूत पितृ मात्रात्मात्मेत्यष्टश्राद्धानि कुर्य्यात् । प्रथमं सत्यवसु संज्ञकान् विश्वान् देवान् देवश्राद्धे ब्रह्मविष्णुमहेश्वरान् ॥ १ ॥ ऋषिश्राद्धे देवर्षि क्षत्रियर्षि मनुष्यर्षीन् ॥ २ ॥ दिव्यश्राद्धे वसु रुद्रादित्यरूपान् ॥ ३ ॥ मनुष्यश्राद्धे सनकसनन्दनसनत् कुमार सनत्सुजातान् ॥ ४ ॥ भूतश्राद्धे पृथिव्यादि पञ्चमहा भूतानि चक्षुरादि करणानि चतुर्व्विधभूतग्रामान् ॥ ५ ॥ पितृश्राद्धे पितृपितामहप्रपितामहान् ॥ ६ ॥ मातृश्राद्धे मातृपितामहीप्रपितामहीः ॥ ७ ॥ आत्मश्राद्धे आत्म पितृ पितामहान् ॥ ८ ॥ जीवत्पितृकश्चेत् पितरं त्यक्त्वा आत्मपितामहप्रपितामहानिति ॥ सर्व्वत्र युग्म कृत्या ब्राह्मणानर्च्चयेदेकाध्वरपक्षे अष्टाध्वरपक्षे वा स्वशाखानुगतमन्त्रैरष्टश्राद्धान्यष्टदिवसे वा एकदिने वा पितृयागोक्तविधानेन ब्राह्मणानभ्यर्च्च्यंभुक्त्यन्तं यथाविधि निर्व्वर्त्त्य पिण्ड प्रदानानि निर्व्वर्त्त्य दक्षिणा ताम्बूलै स्तोषयित्वा ब्राह्मणान् प्रेषयित्वा शेष कर्म्म सिद्ध्यर्थं सप्तकेशान् विसृज्य शेषकर्म्मसिद्ध्यर्थं केशान् सप्ताष्ट वा द्विजः संक्षिप्य वापयेत् ॥ इति ॥

॥ श्री शिवमहापुराणे कैलाश संहितायामुत्तरभागे ॥

अष्टमाऽध्याये सन्न्यासकर्त्तव्यविधये अष्टश्राद्धं कर्त्तव्यं दर्शयति ॥

गुरुमाहूय विधिना नान्दीश्राद्धं समारभेत् ॥
विश्वेदेवाः सत्यवसु संज्ञावन्तः प्रकीर्त्तिताः ॥ १ ॥
देवश्राद्धे ब्रह्मविष्णुमहेश्वराः कथिता स्त्रयः ॥
ऋषिश्राद्धेतु संप्रोक्ता देवक्षत्रमनुष्यजाः ॥ २ ॥
दिव्यश्राद्धे तु वसुरुद्रादित्याः संप्रकीर्त्तिताः ॥
चत्वारोमानुष श्राद्धे सनकाद्यामुनीश्वराः ॥ ३ ॥
भूतश्राद्धे पञ्चमहाभूतानि च ततः परम् ॥
चक्षुरादीन्द्रियग्रामो भूतग्राम श्चतुर्व्विधः ॥ ४ ॥
पितृश्राद्धे पिता तस्यपिता तस्यपिता त्रयः ॥
मातृश्राद्धे मातृपितामह्यौ च प्रपितामही ॥ ५ ॥
आत्मश्राद्धे तु चत्वार आत्मा पितृपितामहौ ॥
प्रपितामहनामा च सपत्नीकाः प्रकीर्त्तिताः ॥ ६ ॥
मातामहात्मकश्राद्धे त्रयो मातामहादयः ॥
प्रतिश्राद्धे ब्राह्मणानां युग्मं कृत्वोपकल्पितान् ॥ ७ ॥
आहूयपादौ प्रक्षाल्य स्वयमाचम्य यत्नतः ॥ ८ ॥
समस्त संपत् समवाप्ति हेतवः समुत्थितापत् कुल धूमकेतवः ॥
अपार संसार समुद्र सेतवः पुनन्तुमांब्राह्मणपादपांशवः ९ ॥
आपद्घनध्वान्त सहस्रभानवःसमहितार्था र्पणकामधेनवः
समस्ततीर्थाम्बुपवित्र मूर्त्तयो रक्षन्तुमां ब्रह्मणपादपांशवः १० ॥
इति जप्त्वानमस्कृत्य साष्टाङ्गं भुविदण्डवत् ॥

स्थित्वाथ प्रांमुखः शम्भोः पादाब्जयुगलं स्मरन् ॥ ११ ॥
सपवित्रकरः शुद्ध उपवीती दृढासनः ॥
प्राणायामत्रयं कृत्वा श्रुत्वा तीर्थादिकं पुनः ॥ १२ ॥
मंतुसन्न्यासाङ्ग भूतं यद्वैश्वदेवादिकं क्रमात् ॥
श्राद्धमष्टविधं मातामहान्तं पार्व्वणेन वै ॥ १३ ॥
विधानेन करिष्यामि युष्मदाज्ञा पुरः सरम् ॥
एवं विधाय संकल्पं दर्भानुत्तरतस्त्यजेत् ॥ १४ ॥
उपस्पृश्याथ उत्थाय वरणक्रममारभेत् ॥
पवित्रपाणिः संस्पृश्य पाणी ब्राह्मणयो र्वदेत् ॥ १५ ॥
विश्वेदेवार्थ इत्यादि भवद्भ्यांक्षण इत्यपि ॥
प्रसादनीय इत्यन्तं सर्व्वत्रैवं विधिक्रमः ॥ १६ ॥
एवं समाप्य वरणं मण्डलानि प्रकल्पयेत् ॥
उदगारभ्य दश च कृत्वाभ्यर्च्चनमक्षतः ॥ १७ ॥
तेषु क्रमेण संस्थाप्य ब्राह्मणान् पादयोः पुनः ॥
विश्वेदेवस्वरूपस्य ब्राह्मणस्येदमासनम् ॥ १८ ॥
इति दर्भासनं दत्वा दर्भपाणिः स्वयं स्थितः ॥
अस्मिन्नान्दीमुखश्राद्धे विश्वदेवार्थ इत्यपि ॥ १६ ॥
भवद्भ्यां क्षण इत्युक्त्वा क्रियतामिति संवदेत् ॥
प्राप्नुतामिति सं प्रोच्य भवन्ताविति संवदेत् ॥ २० ॥
देवतां प्राप्नवावेति तौ च ब्राह्मणपुङ्गवौ ॥
संपूर्णमस्तु संकल्प सिद्धिरस्त्विति तान् प्रति ॥ २१ ॥
भवन्तोऽनुगृह्णन् त्विति प्रार्थयेद्‌द्विजपुङ्गवान् ॥
ततःशुद्ध कदल्यादि पात्रेषुक्षालितेषु च ॥ २२ ॥

अन्नादि भोज्य द्रव्याणि दत्त्वा दर्भैः पृथक् पृथक् ॥
परिस्तीर्य्य स्वयं तत्र परिषिच्योदकेन च ॥ २३ ॥
हस्ताभ्यामवलंब्यार्घ्यं पात्रं प्रत्येकमादरात् ॥
पृथिवितं पात्रमित्यादि कृत्वा तत्र व्यवस्थितान् ॥ २४ ॥
देवादींश्च चतुर्थ्यन्तान नूद्याच्चत संयुतम् ॥
उदं गृहीत्वा स्वाहेति देवायान्नं त्यजेत् पुनः ॥ २५ ॥
नममेति वदेदन्ते सर्व्वत्रायं विधिक्रमः ॥
यत् पादपद्म स्मरणाद्‌यच्छ्रीनाम जपादपि ॥ २६ ॥
न्यूनं कर्म्म भवेत् पूर्णं तं वन्दे साम्बमीश्वरम् ॥
इति जप्त्वा ततो ब्रूयान्मया कृतमिदं पुनः ॥ २७ ॥
नान्दीमुख श्राद्धमिति यथोक्तञ्च वदेत्ततः ॥
अस्त्विति ब्रूतेति च तान् प्रसाद्य द्विजपुङ्गवान् ॥ २८ ॥
विसृज्य स्वकरस्थोदं प्रणम्य भुविदण्डवत् ॥
उत्थाय च ततो ब्रूयाद मृतंभवतु द्विजान् ॥ २९ ॥
श्रीरुद्रं चमकं सूक्तं पौरुषञ्च यथा विधि ॥
चित्ते सदाशिवं ध्यात्वा जपेद् ब्रह्माणि पञ्च च ॥ ३० ॥
भोजनान्ते रुद्रसूक्तं समापय्य द्विजान् पुनः ॥
तन्मन्त्रेण ततो दद्यादुत्तरापोशनं पुनः ॥ ३१ ॥
प्रक्षालिताङ्घ्रिराचम्य पिण्ड स्थानंव्रजेत् स्वयम् ॥
आसीनो वाङ्मुखोमौनी प्राणायामत्रयं चरेत् ॥ ३२ ॥
नान्दी मुखोक्त श्राद्धाङ्गं करिष्ये पिण्डदानकम् ॥
नवरेखाः समालिख्य प्रागग्राद्वन्द्वशः क्रमात् ॥ ३३ ॥
इति संकल्प्य दक्षादि समारंभ्योदगन्तकम् ॥

सुस्तीर्य्य दर्भान् दत्त्वादि देवादिस्थानपञ्चके ॥ ३४ ॥
तुष्णीं दद्यात् साक्षतोदं त्रिषु स्थानेषु च क्रमात् ॥
स्थानेष्वन्येषु मातृषु मार्जीर्य्यन्तां ततः परम् ॥ ३५ ॥
अत्रेति पितरः पश्चात् साक्षतोदं समर्प्य च ॥
दद्यात्ततः क्रमेणैव देवादिस्थान पञ्चके ॥ ३६ ॥
तत्तद्देवादि नामानि चतुर्थ्यन्तान्युदीर्य्य च ॥
पिण्डवर्य्यं ततो दद्यात् प्रत्येकं स्थानपञ्चके ॥
तूष्णीं दद्याद् साक्षतोदं पित्रादि स्थानपञ्चके ॥
स्वगृह्योक्तेन मार्गेण दद्यात् पिण्डान् पृथक् पृथक् ॥३८॥
दद्यादुदं साक्षतञ्च ततः साद्गुण्यहेतवे ॥
ध्यात्वा सदाशिवं देवं हृदयाम्भोजमध्यतः ॥ ३९ ॥
यत् पादपद्मस्मरणादिति श्लोकं पठेत् पुनः ॥
नमस्कृत्य ब्राह्मणेभ्योदक्षिणाञ्च स्वशक्तितः ॥ ४० ॥
दत्वा क्षमापयेय च तान् विसृज्य च ततः क्रमात् ॥
पिण्डानुत्सृज्य गोग्रासं दद्यान्नो चेज्जलेक्षिपेत् ॥ ४१ ॥
पुण्याहवाचनं कृत्वा भुञ्जीयादुचितैः सह ॥
अन्येद्युः प्रातरुत्थाय कृतनित्यक्रियः सुधीः ॥ ४२ ॥

इति श्री शिव पुराणे श्राद्धविध्युक्तं ।

आत्मपुराणे एकादशाध्याये सन्न्यासग्रहणात् पूर्व्व दिवसे मङ्गलैर्युतैः नान्दीमुख विधानेन श्राद्धंकर्त्तव्यमाह ॥

विधानं तत्र वक्ष्यामि परहंसाश्रमग्रहे ॥
सन्न्यास ग्रहणात् पूर्व्वे दिवसे मङ्गलैर्युतः ॥ १ ॥
नित्राहादौ यथा श्राद्धं कुर्य्या न्नान्दीमुखं तथा ॥

सत्याश्च वसव स्तद्वद्विश्वेदेवा इहेरिताः ॥ २ ॥
श्राद्धाष्टकं भवेदत्र नवमं वैश्वदेवकम् ॥
मातुर्मातामहानाञ्च विभेदाद्दशमं पुनः ॥ ३ ॥
केचिदाहुः परेत्वैक्यं मुनयः प्रवदन्त्यपि ॥
अनयोस्तु कुलाचाराद्भेदाभेदौ व्यवस्थितौ ॥ ४ ॥
भेदेक्रमोऽयंविज्ञेयो ह्यनयोः श्राद्धयोः सदा ॥
माता पितामही तद्वत्तृतीया प्रपितामही ॥ ५ ॥
मातुः श्राद्धे वदन्त्येके केचिन्मात्रा समन्विते ॥
मातामही तृतीया च प्रकृष्टा साचते उभे ॥ ६ ॥
श्राद्धे मातामहे प्याहुः पुरुषां स्त्रीन् महाधियः ॥
मातामहो द्वितीयः स्यात् प्रमातामहक स्तथा ॥ ७ ॥
तृतीयश्च तथा वृद्धप्रमातामहकः स्मृतः ॥
इति भेदे समुद्दिष्टं त्रिकं श्राद्धद्वयेऽपि हि ॥ ८ ॥
मातृ मातामहश्राद्धे यदा द्वैधं न विद्यते ॥
तदापि त्रिकभेदः स्यात् कुलाचारस्य भेदतः ॥ ६ ॥
मातापितामही तद्वत्तृतीया प्रपितामही ॥
एवमेके त्रिकं प्राहुरन्य एवं वदन्ति च ॥ १० ॥
माता मातामह स्तद्वत् प्रमातामहकोऽपरः ॥
कुलाचारोऽत्र सर्व्वत्र प्रमाणं कीर्त्तितो द्विजैः ॥ ११ ॥
मातापितामहीत्यादि मातृश्राद्धे त्रिकं भवेत् ॥
कुलाचारानभिज्ञात्वाबहुलं तद्ध्रुयतो जने ॥ १२ ॥
ब्रह्माविष्णु र्महेशश्च देवश्राद्धे त्रयं स्मृतम् ॥
देवक्षत्रमनुष्याश्च ऋषिश्राद्धे मुनीश्वराः ॥ १३ ॥

वसुरुद्रादित्यसंज्ञा दिव्यश्राद्धे प्रकीर्तिताः ॥
सनकसनन्दनसनत्कुमाराः मानुषेऽपि च ॥ १४ ॥
पृथिव्यादिमहाभूत पञ्चकं नयनादिकः ॥
तथैव करणग्रामः स्वेदजादि चतुष्टयम् ॥ १५ ॥
भूतश्राद्धे त्रिकं प्रोक्त मेतद्देवतया सदा ॥
पितापितामह स्तद्वत्तृतीयः प्रपितामहः ॥ १६ ॥
पितृश्राद्धे पि संप्रोक्तमत्रेदं देवतात्रयम् ॥
मातापितामहीत्यादि मातृश्राद्धे पुरेरितम् ॥ १७ ॥
दशमन्तु यदाश्राद्धं पृथङ्मातामहोदितम् ॥
मातृश्राद्धात् परस्तात् स्यान्नतु पूर्व्वं कदाचन ॥ १८ ॥
सर्व्वान्ते त्वात्मनः श्राद्धं कुर्य्यात् श्रद्धासमवन्वितः ॥
आत्मनो यस्य यन्नाम तन्नाम परिगृह्य हि ॥ १९ ॥
अनन्तरं पितुः स्वस्य पश्चात् पैतामहन्तथा ॥
वैश्वदेवं पुरः कृत्वा श्राद्धं देवादिकं क्रमात् ॥ २० ॥
अष्टकं नवकं वापि कुर्य्याच्छ्रद्धा समन्वितः ॥
श्राद्धाष्टकेत्र पिण्डाः स्यु श्चतुर्विंशति संख्यकाः ॥ २१
सप्तविंशतिसंख्याः स्युर्नवकं तु यदा भवेत् ॥
यावन्त्योदेवताः श्राद्धे विश्वेदेवविवर्ज्जिताः ॥ २२ ॥
तावन्तोऽत्र प्रदातव्याः पिण्डाब्राह्मणसन्निधौ ॥
दधिलाजाक्षता स्तद्वत् कुवलानि मधूनिच ॥ २३ ॥
दुर्व्वादिमङ्गलद्रव्यं पिण्डान्ते संक्षिपेत् पुमान् ॥
पिण्डान्ते मधुरंभूरि कुर्य्यान्नान्दीमुखे सदा ॥ २४ ॥
युग्मांश्च भोजयेद्विप्रान् सर्व्वदैवाप्रमादवान् ॥

अष्टादशैव विप्राः स्यु र्विंशतिर्वात्र सर्व्वदा ॥ २५ ॥
ततोन्यूनाधिकान स्युःश्राद्धे नान्दीमुखेत्र हि ॥
विभवे सति विप्रेभ्यो दुकूलवलयादिकम् ॥ २६ ॥
छत्रोपानत् प्रभृत्य न्यत् स्वशक्त्यापरिवेदयेत् ॥
अतिश्रीमान् यदा कर्त्ता तदाभूमि गृहादिकम् ॥ २७ ॥
सर्व्वोपकरणैर्युक्तं दद्याद्दारिद्र्य नाशनम् ॥
ब्राह्मणेषु तु भुक्तेषु पिण्डदानादनन्तरम् ॥ २८ ॥
दक्षिणासु च दत्तासु त्यक्तोच्छिष्टं ततोधनी ॥
यथा शक्ति प्रकुर्व्वीतह्यन्नदानमनेकधा ॥ २९ ॥
अन्यान्यपिच दानानि कुर्य्यात् स विभवे सति ॥
स्वगृह्योक्तप्रकारेण श्राद्धं कुर्य्याद्विचक्षणः ३० ॥
नान्दीमुखं हि देवादेः पितृवच्चाविचारयन् ॥
एतस्मिन् दिवसे ह्येतत् कृत्वा निर्वृतिमागतः ॥ ३१ ॥
स्वजनैः सहसंभाष्य दारादिसहितैरपि ॥
दायं दत्त्वाच पुत्राणां होमार्थं किञ्चिदेवहि ॥
संस्थाप्य द्रव्यमात्मीयं कौपीनाच्छादनानि च ॥ ३२ ॥
(इति आत्मपूराणे सन्यासनिमित्यर्थं श्राद्धं समाप्तम्)

विश्वेश्वरोद्धृत वचनं स्मर्य्यते । श्राद्धविषयम् ॥ उक्तं पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्व्वपेदिति ॥ अत्रिः ॥

दैवमार्षं ततो दिव्यं मानुष्यं भौतिकं तथा ॥
पितृणां मातृणाञ्चैव मात्मनो वृद्धिमत् पराम् ॥ १
॥शौनकः॥ दैवञ्चैवार्षकञ्चैव दिव्यं मानुष्यमेव वा ॥

भूतश्राद्धं पितृश्राद्धं मातॄणामात्मन स्तथा ॥ २ ॥
एकैकस्मिन् दिने कुर्य्यादेकैकं श्राद्धमर्थवित् ॥
नान्दीमुखविधानेन विधिरेषां प्रकीर्त्तितः ॥ ३ ॥

( स एव देवादि श्राद्धेषु देवतामाह )

वसवोऽष्टौस्मृता स्तत्र रुद्र एकादशापि वा ॥
तथैव द्वादशादित्यो देवश्राद्धेषु देवताः ॥ ४ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्तः पुलहः क्रतुः ॥
प्रचेताश्च वसिष्ठ श्चार्षेषु भृगुनारदौ ॥ ५ ॥
दिव्ये हिरण्यगर्भश्च वैराजपतिरेव च ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ ६ ॥
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
एतेमानुष्यके श्राद्धे मनुष्यासप्तदेवताः ॥ ७ ॥
पृथिव्याप स्तथा तेजो वायुराकाशमेव च ॥
एतानि पञ्चभूतानि भूतश्राद्धे तु देवताः ॥ ८ ॥
पितृ श्राद्धे कव्यवाडानलसोमोऽर्य्यमा तथा ॥
अग्निष्वत्ता वर्हिषदः सोमपाश्चैव देवताः ॥ ९ ॥
गौरीपद्माशचीमेधा सावित्री विजयाजया ।
देवसेना स्वधास्वाहा मातृश्राद्धेषु देवताः ॥
आत्मश्राद्धे देवता तु परमात्माप्रकीर्त्तितः । इति ॥ १० ॥

॥ विश्वेश्वरमते श्राद्धदेवता उक्ताः ॥

( अत्रिः ) कर्त्तानिरग्निश्चेत् लौकिकाग्नौ तदा कुर्य्यात् श्राद्धार्थी पचनादिकं पूर्व्वेद्युस्तदहर्व्वापि श्राद्धे विप्रान्निमन्त्र-येत् ॥ कृत्वा तु संस्कृतंपाकं हविष्यस्वादुभोजनम् ।

हृदियज्ञेश्वरं ध्यायेद्देवं नारायणंप्रभुम् ॥ ११ ॥
आरभेत् सर्व्वकर्म्माणि स्नानादीनि विधानतः ॥
तर्पयेदम्भसास्नात्वा मन्त्रपूर्व्वंद्विजोत्तमः ॥ १२ ॥
देवानृषीन्मनुष्यांश्च भूतानि च यथा क्रमम् ॥
तर्पयित्वाम्भसासर्व्वान् पुनः श्राद्धेन तर्पयेत् ॥ १३ ॥
पार्व्वणाश्च तथा वृद्धयाश्राद्धं कुर्य्याद्यथाविधि ॥
दत्वा नान्दीमुखेभ्यश्च पिण्डानचतसंयुतान् ॥ १४ ॥
श्राद्धदेवान्नमस्कृत्य यथोक्त श्रुतिसाधनात् ।
तत्राष्टसु क्रमाद्देवा वसवोऽथ प्रजापतिः ॥ १५ ॥
हिरण्यगर्भोऽथविराडात्मा देवेसमुख्यतः ॥
आर्षेमरीचि प्रमुखा दिव्ये च विनतात्मजाः ॥ १६ ॥
स्कन्दः प्रजेशस्तत्रात्मा मानुषे सनकादयः ॥
कव्यवाहमुखाः पित्रे मात्रिके दिव्यमातरः ॥ १७ ॥
युग्माः स्युर्देव पूर्व्वेषु ब्राह्मणै र्दैववद्विधिः ।
एकैकोमन्त्रवत्पिण्डोदेयस्तुष्णीमथापरः ॥ १८ ॥
सर्व्वमन्त्रेषु कर्त्तव्यं नान्दीमुखविशेषणम् ॥
उत्थाय च ततो विद्वान् हृष्टपुष्टेनचेतसा ॥ १९ ॥
प्रदाक्षिणं ततः कृत्वा नमस्कृत्य द्विजोत्तमान् ॥
क्षन्तव्यामितितान् ब्रूयात् प्रणम्य शिरसा ततः ॥ २० ॥
सन्न्यासार्थंमया श्राद्धं कृतमेतद्द्विजोत्तमाः ॥
अनुज्ञां प्राप्ययुष्माकं सिद्धिं यास्यामि शाश्वतीम् ॥ २१ ॥
( दत्तात्रेयोऽपि ) देवर्षिमानुष्यं भूतं पितृमातृस्वयंभुवम् ॥
श्राद्धं परात्मनः कृत्वा वृद्धौ चापि चतुष्टयम् ॥ २२ ॥

ततः परेद्युःपुण्याहवाचनपूर्वकं वपनं कुर्य्यत् ॥
(तथापि शौनकप्रभृतीनां विश्वेश्वरपद्धतौमतमुक्तं )
निर्णयसिन्धौधर्म्मसिन्धौ च मतं श्राद्धविधिंदर्शयति ॥

॥ बौधायनः ॥

कृत्वा श्राद्धानि सर्व्वाणि पित्रादिभ्योऽष्टकं पृथक् ॥
वापयित्वाच केशादीन् मार्ज्जयेन्मातृकाइमाः ॥ इति ॥२३॥
सर्व्वाणीति स्वस्य नवश्राद्ध षोडशश्राद्धादि कृत्वेत्यर्थः ॥
स्मृत्यर्थसारेपि एकोद्दिष्टविधानेन कुर्य्याच्छ्राद्धानि षोड़श
अग्निमान् पार्व्वणेनैव विधिना निर्व्वपेत् स्वयमिति॥२४॥
बौधायनमतं स्मर्यतेसदैवमार्षकं दिव्यं पित्र्यं मातृकमानुषे॥
भौतिकश्चात्मनश्चान्ते अष्टौश्राद्धानि निर्व्वपेत् ॥ २५ ॥

अत्रक्रममाह हेमाद्रौ शौनकश्च ॥

देवश्राद्धे ब्रह्मविष्णुमहेश्वरा देवताः आर्षेदेवर्षि ब्रह्मर्षिक्षत्रर्षयः । देवर्षिक्षत्रर्षि मनुष्यर्षयो वा ॥ मरीच्यादि ऋषय इति संन्यास पद्धतौ तच्चिन्त्यं। दिव्ये वसुरुद्रादित्याः मानुषे सनक सनन्दनसनातनाः । भूत श्राद्धे पृथिव्यादि पञ्च भूतानि चक्षुरादिकरणानि चतुर्व्विधो भूतग्रामश्चेति त्रयः पित्र्ये पित्रादित्रयो मातामहाश्च । मातृके मात्रादय स्तिस्रः । आत्मश्राद्धे आत्मपितृ पितामहा देवताः ॥

आत्मश्राद्धे आत्मान्तरात्मपरमात्मदैवत्यमिति सन्न्यास पद्धतौ तच्चिन्त्यं ॥ सर्व्वत्रनान्दीमुखत्वं विशेषणं ज्ञेयं ॥ सर्व्वत्र पिण्डदानं युग्मा विप्राः ॥ दक्षक्रतू सत्यवसु विश्वेदेवौ । अन्यन्नान्दी श्राद्ध वदिति हेमाद्रिः ॥

स्मृत्यर्थसारे पीत्युक्तम् । अत्र यतिधर्म्म प्रकाश समुच्चये यन्निर्दिष्टं तत् निर्णाय सिन्धावपि मतं द्रष्टव्यमिति श्राद्ध-विषयं पृथक्न आलोचनीयमिति ॥ अत्रि शैनक हेमाद्रि-वौधायनप्रभृतीनां मते नान्दीमुखविधानेन श्राद्धं कुर्य्यात् इत्युक्तं तत् विश्वेश्वरपद्धता वुक्तं एकैको मन्त्रवत् पिण्डो-देय स्तुष्णीं तथा परः । सर्व्वमन्त्रेषु कर्त्तव्यं नान्दीमुख-विशेषणमिति ॥ अत्र वृद्धि श्राद्धं पृथक् नास्त्येव ॥ अने नैव पदार्थ सिद्धेरिति जैमिनीयन्यायकुशलाः । अत्र कर्त्ता यदि साग्निक स्तदा स्वाग्नावेव यद्यनग्नि स्तदा लौकिकाग्नावेव पाकं कुर्य्यात् ॥ तथा च कात्यायनः ॥

औपासनं ह्यावसथ्यंपिष्टादि वीजमेववा । लौकिका ग्निमितरं वा श्रद्धावान् स यदाभवेदित्यु पक्रम्य तस्मिन् होमं महायज्ञान् कुर्य्यात् मोक्षादिकर्म्मच । सन्न्यासार्थं तथा कुर्य्यात् पाकयज्ञादिकानपीत्याह ॥ पृष्टोदिवि विधा नापि कात्यायनेनैवोक्तं परिशिष्टे । अनग्निरिति ग्रामा-द्दग्निमाहृत्य पृष्टोदिवित्य अधिष्ठाश्यामिति द्वाभ्यामु पस्थाय त्रिभिश्च सावित्रैः प्रज्वलितां सवितुस्तत् सवितु र्व्विशानि देव सवितरिति सावित्री दैवतैर्हुत्वा पाकं पचेदिति लौकिकाग्निमितरं वा इत्यस्यपरिसमूहान्नादि संस्कारेणो-त्यादित्यामित्यर्थः ॥

( वौधायनोऽपि ) अनग्निराग्निमुत्पाद्य नित्येन विधिनाततः स्वाग्नावेवाग्निमान् कुर्य्यादपवर्गोक्त मादित इति ॥ २ ॥ अपवर्गोक्तं संन्यासार्थमुक्तपाकहोमादि ॥ आदितः

आरम्भ समये अत्रिरप्याह ॥

लौकिकाग्नौ तदा कुर्य्यात् श्राद्धार्थं पचनादिकम् ॥
पूर्व्वेद्युस्तदहर्व्वापि श्राद्धे विप्रान् निमन्त्रयेत् ॥ ३ ॥
कृत्वातु संस्कृतंपाकं हविषः स्वादुभोजनम् ॥
हृदि यज्ञेश्वरं ध्यायेद्देवं नारायणं प्रभुम् ॥ ४ ॥
आरभेत् सर्व्वकर्म्माणि स्नानादीनि विधानतः ॥
तर्पयेदम्भसा स्नात्वा मन्त्रपूर्व्वं द्विजोत्तमः ॥ ५ ॥
देवान् ऋषीन् मनुष्यांश्च भूतानि च यथाक्रमम् ॥
तर्पयित्वाम्भसा सर्व्वान् पुनः श्राद्धेन तर्पयेत ॥ ६ ॥
पार्व्वणञ्च तथावृद्ध्याश्राद्धं कुर्य्याद्यथा विधि ॥
दत्वा नान्दीमुखेभ्यश्च पिण्डानक्षतसंयुतान् ॥ ७ ॥
श्राद्धदेवान् नमस्कुर्य्याद्यथोक्तश्रुतिशासनात् ॥

इति श्राद्धानन्तरं कर्त्तव्यतां दर्शयति ॥ यतिधर्म्मप्रकाशोक्तं ॥ अथ विदुषां प्रति संन्यासं कर्त्तुं ब्रह्मानन्दीय पद्धत्यनुसृत्य प्रयोगमात्रमुच्यते ॥

तत्रादौ औपासनाग्निमन्तं यजमानं प्रति तादृशविधुरं प्रति च प्रयोगः । तत्रादौ निस्पृहः सर्व्वतः शान्त इत्यादिलक्षणैर्युक्तं भिक्षुं गुरुं संशोध्य तन्निकटे वर्षमेकं षण्मासं त्रिमासं मासमेकं वा वसन् यतिधर्म्मान् संवीक्षमाणः सर्व्वैषणास्त्यजन्निषिद्धप्रतिग्रहनिवृत्तो गायत्रीजपरुद्राध्यायजप कुष्माण्डहोमरूपपुरश्चरणमादौ कृत्वा गुरोराज्ञाञ्च लब्ध्वा उदगयनादौ प्रशस्तेकाले सन्न्यासमारभेत ॥ कस्याञ्चिद्रिक्तायां तिथौ न कर्त्तव्यं न रिक्ता सर्व्वकर्म्मसु

इति वचनात् ॥ ततः संन्यासे योग्यता सिद्ध्यर्थं चतुः-कृच्छ्रात्मकप्रायश्चित्तं प्रति कृच्छ्रमेकैकगोनिष्क्रय-द्रव्यदानं वा कर्त्तव्यमेवेति ॥ एकादश्यां द्वादश्यां वा ब्रह्मरात्रिर्यदा भवति तथा श्राद्धानि आरभेत॥ तत्र संन्यासे अधिकारार्थं स्वस्य नवश्राद्धषोडशश्राद्धानि च साग्निकः पार्व्वण विधिना निरग्निक स्त्वेकोद्दिष्टविधिना कुर्य्यात् । सपिण्डीकरणमपि केचिन्मतेउक्तं । तत् चिकी-र्षायां तदपि कार्य्यं एषां नवश्राद्धादीनां प्रयोग स्तु ब्रह्मा नन्दीय पद्धतौ ज्ञेयः । केचित्तु नवश्राद्धादेः सपिण्डीकरणस्य च नावश्यकत्वं॥अच्युताश्रमीय पद्धतावनुक्तात्वादाचाराभावा च्च । अथाष्टश्राद्धप्रयोगः । तत्रापस्तम्बः ॥ यजमान कर्तृके अग्नौ करण होममन्त्रे ऊहस्यासंभवात् पिण्डदाने विक-ल्पदर्शनात् ॥

संकल्प विधिरेवावतिष्ठते । तत्राश्वलायनानांतु स्वा-हाकारेण वा ग्निपूर्व्वकं यज्ञोपवीतीत्यग्नौकरणे विधिरास्ना-नात् पिण्डदाने विकल्पदर्शनात् पार्व्वणविधिरेव ॥ इति ॥ तत्रापस्तम्बानां प्रयोगमाह ॥ श्राद्धपाकादन्येनान्नेन वैश्वदेवं कृत्वा ततो नद्यादौ गत्वा प्राङ्मुखोयज्ञोपवीती यवसहितजलेन श्राद्धदेवतानां तर्पणादि कुर्य्यात् । तर्पण-प्रकार न्त्वाह । ब्रह्माणं तर्पयामि । एवं विष्णुं । महेश्वरं ॥ देवर्षीन् । ब्रह्मर्षीन् क्षत्रर्षीन् ॥ वसून् रुद्रान् आदित्यान् ॥ सनकं सनन्दनं । सनातनं । ॥ पृथिव्यादीनि पञ्चमहा-भूतानि एकादश चक्षुरादीनि करणानि । चतुर्विध भूतग्रामं

पितरं । पितामहं । प्रपितामहं ॥ मातामहं । प्रमातामहं । वृद्धप्रमातामहं ॥ मातरं । पितामहीं ॥ प्रपितामहीं ॥ आत्मानं । पितरं पितामह मिति ॥ केचित्तु आत्मानं अन्तरात्मानं परमात्मान मिति विधानात् ॥ एवं तर्पणं विधाय ॥ ततोऽशेषदुःखनिवृत्ति निरतिशयानन्दप्राप्ति परमपुरुषार्थप्राप्तये करिष्यमाण परमहंससंन्यासस्वीकारार्थं तदङ्गत्वेनाष्टौ श्राद्धानि सदैवानि संकल्पविधिनान्नेनामद्रव्येण वा तन्त्रेण करिष्ये इति संकल्पः । अष्टौश्राद्धदेवता पूर्व्वोक्ता द्रष्टव्याः इति ॥ हारीतसंहितायां संन्यासविधिमाह ॥

दत्त्वापितृभ्यो देवेभ्यो मानुषेभ्यश्च यत्नतः ।
दत्त्वा श्राद्धं पितृभ्यश्च मानुषेभ्य स्तथात्मनः ॥

अस्य विचार सापेक्षताऽस्ति ॥ अष्टश्राद्धप्रयोगे । नारद परिव्राजकोपनिषदि एवं संन्यासोपनिषदि । एवं अत्रि शौनक वह्वृचपरिशिष्ट बौधायनेषु ब्रह्मानन्दीयपद्धतौ । विश्वेश्वर पद्धतौ च एतेषां मते श्राद्धदेवतादयः पूर्व्वोक्ताः । एतेषांमते मातामहादिपक्षो नोक्तः ॥ किन्तु नान्दीमुखश्राद्धे मातामहादि पक्ष कर्त्तव्यतास्ति ॥ निर्णयसिन्धौ । एवं शिवमहापुराणेऽपि मातामहपक्षाद्युक्तं । तत्प्रमाणं समर्प्यते ॥ मातामहात्मकश्राद्धे त्रयो मातामहादयः ।

प्रति श्राद्धं ब्राह्मणानां युग्मकृत्वोपकल्पितान् ॥इति॥ किन्तु यद्यपि अन्यत्र प्रमाणं नास्त्येव तथापि यत्र पितृ श्राद्धादिकं कार्य्यं स्यात् तत्रैव मातामहादि श्राद्धं कर्त्तव्य मेव तत्प्रमाणान्तु । यतिधर्म्म प्रकाशेऽप्युक्तमेव ॥

पितरो यत्र पूज्यन्ते तत्र मातामहाध्रुवं ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

इति विशेषव चनान्मातामहादिपक्षोऽवश्यमेव कर्त्तव्यः प्रतीयते इति ॥ आत्मश्राद्धपक्षे देवतामतभेदं यदुक्तं तद्दर्शयति । नारदपरिव्राजके । शिवमहापुराणे निर्णयसिन्धौ । ब्रह्मानन्दीयपद्धतावपि आत्मश्राद्धे देवता आत्म पितृ पितामहा इत्युक्ताःकिन्तु अन्येषां मते यतिधर्म्मप्रकाशकपद्धतौ एवं कामरूपमठस्थ-संन्यासपद्धतौ च । आत्मश्राद्धं आत्म अन्तरात्म परमात्म दैवत्यमित्युक्तं ॥ इति ॥ परस्परविरुद्धं प्रतियते किन्तु प्रामाणिक्य आत्मश्राद्धे देवता आत्म पितृ पितामहाः ॥ यन्मते प्रमाणमस्ति तन्मतं ग्राह्यमिति सिद्धान्तः ॥

सर्व्वत्र नान्दीमुखत्वंविशेषणं ज्ञेयं॥दक्षक्रतू॥सत्यवसू वा विश्वेदेवा इति विशेषः ॥ अन्यन्नान्दीश्राद्धवदिति हेमाद्रिः ॥ अत्र संन्यास कर्म्मणिअष्टौश्राद्धे प्रयोगाः नान्दी मुख विधानेन श्राद्धं कुर्य्यादित्युक्तं ॥ परन्तु संन्यस्त-कर्म्माङ्गभूते वृद्धिश्राद्धविषये ऋक् यजुः साम-भेदेन पृथक् पृथक् रूपेण निर्द्देशो नास्ति ॥ अतएव सर्व्वेषां वेदानां संन्यास कर्म्मणि नान्दीमुखविधानेन श्राद्धं कर्त्तव्यं ॥ किन्तु सामवेदोक्त नान्दीमुखश्राद्धे मातृपक्षो नास्ति परन्तु यजुर्वेदमते क्रियाङ्ग आभ्युदयिक-श्राद्धे निमित्यर्थं मातृपक्षो गृह्यत इति सर्व्वशास्त्रसम्मतं ॥

विश्वेश्वरपद्धतौ पितृदेवताःसंन्यास कर्म्माङ्गी भूते नान्दी श्राद्धे पितृपक्षे । पृथकरूपेण या उक्ताः ता आह पितृपक्षे कव्यवाडोवानल सोमोऽर्य्यमा तथा अग्निष्वात्ता वर्हिषदः सोमपा श्चैवदेवताः इत्युक्तं ॥ एवंमातृपक्षेदेवतास्तु गौरी पद्माद्दिषोडशमातृका देवता उक्ता एव ॥ अन्यान्य ग्रन्थे विरूद्धं प्रतीयते तन्मतमाह यथा नारदपरिव्राजके अत्रिसंहितायामपि एवं शौनकवह्वृचपरिशिष्ट वौधायनादीनां मतानि॥एवं निर्णयसिन्धौ वृह्मानंदीय पद्धतौ कामरूप मठस्थ-पद्धतावपि एतेषां ग्रन्थानां परस्परस्य एकवाक्यत्वमस्ति ॥ तदेकवाक्यत्वमाह ॥ यथा पितृश्राद्धे पितृ पितामह प्रपितामहादि देवताः एवं मातृ पक्षे तु मातृ पितामही प्रपितामह्यो देवता उक्ताः ॥ नारद परिव्राजकादीनां सर्व्वेषां ग्रन्थानां परस्परैकवाक्यता प्रतीयते ॥ अतएव एतेषां मतं ग्राह्यं॥किन्तु विश्वेश्वरेण यदुक्तं तन्मतं न लिख्यते ॥ इति सिद्धान्तः ॥ अष्टविधाभ्युदयिक श्राद्धे प्रथमं यत् कर्त्तव्यं तदाह ॥ करिष्यमाणपरमहंससंन्यास कर्म्माङ्गीभूत सगणाधिप गौर्य्यादि षोडशमातृकापूजा-पूर्व्वक वसोर्धारा सम्पातनायुष्य सूक्त जपादिपूर्व्वकमष्ट विधमाभ्युदायिकश्राद्धं तन्त्रेणनान्दीमुख विधिना हं करिष्ये इति संकल्प्य विधानेन श्राद्धं कर्त्तव्यमेव इति श्राद्धं समाप्तम् ॥

( श्राद्धानन्तरंवपनं कर्त्तव्यं तत्प्रमाणमाह ॥ )

नारद परिव्राजकोपनिषदि ॥

यथा विधि निर्वर्त्य पिण्डप्रदानानि निर्वृत्य दक्षिणा ताम्बूलैस्तोषयित्वा ब्राह्मणान् प्रेषयित्वा शेषकर्म्मसिद्ध्यर्थं सप्तकेशान् विसृज्य शेषकर्म्म सिद्ध्यर्थं केशान् सप्ताष्ट वा द्विजः संक्षिप्य वापयेत् केशश्मश्रुनखानि चेति सप्तकेशान् संरक्ष्य कक्षोपस्थवर्जं क्षौरपूर्व्वकंस्नात्वा सायं सन्ध्यावन्दनं निर्वृत्य सहस्रगायत्रीं जप्त्वा ब्रह्मयज्ञं निर्वृत्य स्वाधीनाग्निमुपस्थाप्य स्वशाखोपसंहरणं कृत्वा तदुक्तप्रकारेणाज्याहुतिमाज्य भागान्तं हुत्वा हुतिविधिं समाप्यात्मादिभिस्त्रिवारं सक्तुप्राशनं कृत्वा च मनपूर्व्वकमग्निं संरक्ष्य स्वयमग्नेरुत्तरतः कृष्णाजिनोपरि स्थित्वा पुराणश्रवणपूर्व्वकं जागरणं कृत्वा चतुर्थयामान्तेस्नात्वा तदग्नौचरुं श्रापयित्वा पुरुष सूक्तेनान्नं षोडशाहुतीर्हुत्वा विरजाहोमं कृत्वा अथाचम्य सदक्षिणां वस्त्रं सुवर्णं पात्रं धेनुं दत्वा समाप्य ब्रह्मोद्वासनं कृत्वा ॥ इति ॥

( शिवमहापुराणे श्राद्धान्ते वपनविधिः स्मर्य्यते ॥ )

उपोष्य क्षौरकर्म्मादि कक्षोपस्थ विवर्ज्जितम् ॥
केशश्मश्रु नखान्येव कर्म्मावधि विसृज्यच ॥ १ ॥
सप्ताष्टकेशान् विधिवत् कारयित्वा विधानतः ॥
स्नात्वा धौतपटः शुद्धो द्विराचम्याथ वाग्यतः ॥ २ ॥
भस्म संधार्य्य विधिना कृत्वा पुण्याह वाचनम् ॥
तेन संप्रोक्षणं प्राप्य शुद्धदेहः स्वभावतः इति ॥ ३ ॥

"यति धर्म्म प्रकाशकेऽपि श्राद्धानन्तरं वपनं कर्तव्यमाह । माधवीये बौधायनश्च ।"

कृत्वा श्राद्धानि सर्व्वाणि देवादिभ्योऽष्टकंपृथक् ॥
वापयित्वाच केशादीन् मार्ज्जयेन्मातृकाइमा इति ॥ ४ ॥

विश्वेश्वरी धृत वचने श्राद्धान्ते केशवपनं प्रमाणमाह ॥ पूर्व्वेद्युर्नान्दीसुखं कृत्वा ब्राह्मणान् भोजयित्वा पुण्याहं वाचयित्वा केशश्मश्रुलोमनखानि वापयित्वा । यथाविधि स्नात्वा होमादिद्रव्य व्यतिरिक्तं द्रव्यजातं पुत्रादिभ्यो दत्वा दण्डादीन् सन्निधाय देवायतने ग्रामे वा पुलिने वा अरण्ये वा स्थित्वा । ब्रह्मणेनमः । इन्द्राय ।एवंसूर्य्याय ।सोमाय । आत्मने । अन्तरात्मने । परमात्मने ब्रह्माञ्जलिं कृत्वा । मानसं जपित्वा । उपस्पृश्य दर्भाञ्जलिं कृत्वा वेदादीन् जपित्वा सक्तुंमुष्टित्रयंप्राश्य आचम्येति । अत्र विशेषमाह ॥ बौधायनः ॥ ब्राह्मणानन्ते आवेश्य पुण्याहं स्वस्ति रिद्धिरितिवाचयित्वेति । अन्तरे समीपे आवेश्य ततो वपनं कुर्य्यात् । कात्यायनः ॥

आपोहिष्ठेति द्वाभ्यां श्मश्रुरोम नखानिच ॥
गौदानिक विधानेन सर्व्वमन्त्रान्नियोजयेत् ॥ ५ ॥
सप्ताष्टकेशान् शिखार्थं स्थापयेत् ॥ तथा चसप्रदायविदः ॥
शेषस्य कर्म्मणः सिद्ध्यौ केशान् सप्ताष्ट वा द्विजः ॥
संरक्ष्य वापयेत् सर्व्वं केशश्मश्रुनखानि चेति ॥ ६ ॥
गोभिलोक्तमाह ।ततःसमाचरेत् स्नानं हेमरौप्य कुशाम्भसा ॥
कृत्वातुवपनं विद्वान् भवेन्मुण्डोऽथवा शिखीति ॥ ७ ॥

ब्रह्मानन्दीय पद्धतावप्याह ॥ एवमष्ट श्राद्धोत्तरं ब्रह्म रात्र्यनुरोधेन तस्मिन् दिने द्वितीये वा शिखार्थं मूर्ध्नि

पञ्चषट् वा केशान् स्थापयित्वा कक्षोपस्थ वर्ज्जं केशश्मश्रु लोमादिवपनं विधाय नखानि निकृन्त्य यथा विधि स्नात्वा कौपीनाच्छादनाद्युपयुक्तं स्वात्मन आचार्य्याय दक्षिणार्थं होमार्थञ्च द्रव्यं पृथक् कृत्य सति विभवे पुत्रदाराश्रितादिभ्यो धनादि विभज्य संतर्प्य स्वीयं धनं सन्न्यास दातृभ्यो विप्रेभ्यो यतिभ्यश्च विभज्य तदाज्ञया शेषं सर्व्वमर्थिभ्योदद्यात्। असति विभवे स्वात्मान मेव तेभ्यो निवेदयेदिति ॥

आत्मपुराणे एकादशाऽध्यायेऽपि ॥

तस्मिन्नेव दिने नोचेद्द्वितीये दिवसे सुधीः ॥
पिण्डदानं दिने तस्मिन्नु पवासः परेहनि ॥ ८ ॥
मुख्य मे तज्जघन्यं स्यादेकस्मिन् दिवसे द्वयम् ॥
उपवास दिने प्राप्ते कक्षोपस्थ शिखात्रयम् ॥ ६ ॥
वर्ज्जयित्वा तु वपनं कुर्व्वीत मतिमान्नरः ॥
स्नातः शुचिस्ततो भूत्वा परिधायान्यदम्बरम् ॥ १० ॥
यावत् संन्यास योग्यं स्याद्धोम द्रव्य विवर्ज्जितम् ॥
शालग्रामादिकं तद्वद्वसनं कम्बलादि च ॥ ११ ॥
संवत्सरादिकं कालं गुरुं सर्व्वगुणैर्युतम् ॥
ब्रह्मनिष्ठाय गुरवे बहुशोऽपि परीक्ष्य च ॥ १२ ॥
अङ्गीकृतेऽथ तेनायमर्पयेद प्य पेक्षितम् ॥
आत्मनश्च विधायैव पृथक् शीतादिवारणम् ॥
प्रक्षालितं ततो दण्डमव्रणं सौम्यदर्शनमिति ॥ १३ ॥

( निर्णय सिन्धावपि स्मृत्यर्थ सारे ॥ )

केशश्मश्रु लोमनखं वापयित्वोपकल्पयेत् ॥
दण्डंजलं पवित्रंच शिक्यं पात्रं कमण्डलुमिति॥ १४ ॥

अथ वपनान्तरं सक्तुमुष्ट्यादि ग्रहणमाह । शिवपुराणे कैलास संहितायां ॥

होमद्रव्यार्थमाचार्य्यं दक्षिणार्थं विहाय च ॥
द्रव्यजातंमहेशाय द्विजेभ्यश्च विशेषतः ॥ १५ ॥
भक्तेभ्यश्च प्रदत्वाथ शिवाय गुरुरूपिणे ॥
वस्त्रादि दक्षिणां दत्त्वा प्रणम्य भुविदण्डवत् ॥ १६ ॥
दोरकौपीनवसनं दण्डाद्यं क्षालितं शुचि ॥
आदाय होमद्रव्यादि समिदादीनि च क्रमात् ॥ १७ ॥
समुद्रतीरे नद्यां वा पर्व्वते वा शिवालये ॥
अरण्ये वाथ गोष्ठेवा विचार्य्य स्थानमुत्तमम् ॥ १८ ॥
स्थित्वाचम्य ततःपूर्व्वं कृत्वा मानसमञ्जरीम् ॥
ब्राह्ममोङ्कारसहितं नमोब्रह्मण इत्यपि ॥ १९ ॥
जपित्वात्रि स्ततो ब्रूयाद ग्निमीळे पुरोहितम् ॥
अथमहाव्रतमित्यग्नि र्व्वै देवानामवमः ॥ २० ॥
अथैतस्य समाम्नाय मिषेत्वोर्जेत्वा चेतितत् ॥
अग्न आयाहि वीतये शन्नोदेवीरभीष्टये ॥ २१ ॥
पश्चात् प्रोच्यमयरसतजभनगलैः सह ॥
संमितञ्च ततः पञ्च संवत्सरमयं ततः ॥ २२ ॥
समाम्नायः समाम्नातः अथशिक्षां वदेत् पुनः ॥
प्रवक्ष्यामीत्युदीर्य्याथ वृद्धिरादैच्च संवदेत् ॥ २३ ॥
अथातो धर्म्म जिज्ञासेत्यु च्चार्य्य पुनश्ञ्जगुः ॥

अथातो ब्रह्म जिज्ञासा सामादीन पि संजपेत् ॥ २४ ॥
ब्रह्माणमिन्द्रं सूर्य्यञ्च सोमञ्चैव प्रजापतिम् ॥
आत्मानमन्तरात्मानं ज्ञानात्मानमतः परम् ॥ २५ ॥
परमात्मानमपि च प्रणवाद्यं नमोऽन्तकम् ॥
चतुर्थ्यन्तं नमित्वाथ सक्तुमुष्टिं प्रगृह्य च ॥ २६ ॥
प्राश्याथ प्रणवेनैव द्विराचम्याथ संस्पृशन् ॥
नाभिं मन्त्रान् वक्ष्यमाणान् प्रणवाद्यान्नमोऽन्तकान् ॥२७॥
आत्मानं अन्तरात्मानं ज्ञानात्मानं परं पुनः ॥
आत्मानञ्च समुच्चार्य्य प्रजापति मतः परम् ॥ २८ ॥
स्वाहान्तान् प्रजपेत् पश्चात् पयोदधिघृतंपृथक् ॥
त्रिवारं प्रणवेनैव प्राश्याचम्य द्विधापुनः ॥ २९ ॥
प्रागास्य उपविश्याथ प्राणायामत्रयं चरेत् ॥ ३० ॥

इतिश्री शिवमहापुराणे कैलास संहितायामुत्तर भागेऽष्टमोऽध्यायः ॥

( विश्वेश्वरपद्धतौ वपनान्तेयत् कर्त्तव्यं सक्तु भक्षणं तदाह । ) वपनान्तरं स्नानं कृत्वा तर्पयेत् । देवताः पितॄन् ऋषीन् छन्दांसि वेदांश्च यथाविधीति ॥ ततो आगत्य देवतायतनादौ उपविश्य दक्षिण जानुन्युत्तानं वामहस्तं कृत्वा तत्रद्वे पवित्रे निधाय तदुपरि उत्तानेन दक्षिण हस्तेनापि दद्यादिति ब्राह्माञ्जलिः । तं ब्रह्माञ्जलिं कुर्य्यात् ॥ जपेच्च ब्रह्मणेनमः । इत्यादि मन्त्राः । तत आचम्य वेदादीन् जपेत् । अपस्पृश्य दर्भाञ्जलिं कृत्वा वेदादीन् जपित्वेति । शौनकवचनात् । ततः सक्तुमुष्टिं प्रणवेन प्राश्याचम्य मन्त्रै-

नाभिमभिमन्त्रयेत् । आत्मने स्वाहा अन्तरात्मने स्वाहा प्रजापतये स्वाहा । ततः पयोदधिघृतानि त्रिवृत् कृतानि त्रिवृद सीति मन्त्रेण प्रथमं प्राश्नीयात् । प्रवृदसीति द्वितीयं विवृदसीति तृतीयं । तत आपः पुनन्तु पृथिवी मित्युदकं प्राश्नीयात् । तदुक्तं वह्वृचपरिशिष्टे ॥ अथ पयोदधि सर्पिः त्रिवृत् प्राश्याचामेदप स्तद लाभ इति ॥

निर्णयसिन्धौयदुक्तं तदाह ॥ पयोदधि सर्पिरेकी कृत्वात्रिवृदसीति प्रथमामिति पूर्व्वेणोक्तं ॥ यतिधर्म्म प्रकाशके । माधवीये । दण्डप्रमाणमाह ॥

त्रिदण्डानंगुलिस्थूलान् वैणवान् मूर्द्धसंमितान् ॥
एकादश नवद्वित्रिचतुः सप्तानपर्व्वकान् ॥ १ ॥
सत्वचानव्रणान् सौम्यान् समसन्नतपर्व्वकान् ॥
वेष्टितान् कृष्णगोवालै रज्वातु चतुरंगुलान् ॥ २ ॥
एको वा तादृशोदण्डो गोवालरहितोभवेत् ॥
कुशैः कार्पास सूत्रैर्वा क्षौमसूत्रै रथापिवा ॥ ३ ॥
कुशलै ग्रंथितं शिक्यं रम्याकरसमन्वितम् ॥
षट् पदं पञ्चपादं वा मुष्टिद्वयविदारितम् ॥ ४ ॥
त्रिकेशं सितस्पृष्टन्तु उभयं द्वादशांगुलम् ॥
द्विगुणं त्रिगुणं वापि सर्व्वतोऽष्टांगुलन्तु वा ॥ ५ ॥
प्रादेशमात्रं सूत्रन्तु कार्पासैः कृतमव्रणम् ॥
चाण्डालाद्य कृतश्चैतं स्मृतं जलपवित्रकम् ॥ ६ ॥
गृहीत मन्त्रवत् सम्यक् सच्छिकश्च कमण्डलुम् ॥
दारवं वैणवं वापि मृदलावूमयन्तु वा ॥ ७ ॥

पात्रं शिलामयंताम्रं पर्णादि भवमेव वा ॥
चतुरस्रं वर्त्तुलं वाप्यायसंदारवं शुभम् ॥ ८ ॥
कौपीनाच्छादनं वासः कन्था शीतनिवारिणी ॥
पादुके चापि शौचार्थे दशमात्रा उदाहृताः ॥ ६ ॥
छत्रं पवित्रं सूची वा त्रिविष्टध्वं तथा जिनम् ॥
पञ्चाणि वासो सूत्रञ्च मृत् खनित्री च पाणिका ॥ १० ॥
योगपट्टवहिर्वास इत्येता एकविंशतिः ॥
तासां पञ्चादिका नित्या दशवा सर्व्वशोऽपिवा ॥ ११ ॥
गृहीत्वेमा अथागत्य देवगो वह्निवेश्मनि ॥
ग्रामान्ते ग्रामसीमान्ते यद्वा शुचिमनोहरे ॥ १२ ॥
आज्यदधि पयोत्स्येतत् त्रिवृद्वा जलमेववा ॥
ॐ भूरित्यादिना प्राश्य रात्रिञ्चोपविशेत्ततः ॥ १३ ॥
एतावतैव विधिना भिक्षुः स्यादापदि द्विजः ॥
अथादित्यस्यास्तमयात् पूर्व्वमग्नीन् विहृत्यसः ॥ १४ ॥
आज्यञ्च गार्हपत्ये तु संस्कृत्य तेन सर्पिषा ॥
पूर्णमाहवनीयेतु जुहुयात् प्रणवेन तु ॥ १५ ॥
ब्रह्मान्वाधान मेतत्स्यादग्निहोत्रेहुते ततः ॥
आस्तीर्य्य गार्हपत्यस्य दर्भानुत्तरतो यदि ॥ १६ ॥
पात्राणिं सादयित्वा तु ब्रह्मायतन एव तु ॥
संस्तीर्णेषु च दर्भेषु त्वजिनान्तरितेषु वा ॥ १७ ॥
जागृयात् रात्रि मेता न्तु यावब्राह्म मुहूर्त्तकम् ॥
एतामवस्थां संप्राप्य मृदुत्वफलमश्नुते ॥ १८ ॥
अग्निहोत्रं स्वकालेतु हुत्वा प्रातस्ततनन्ततः ॥

इष्टिं वैश्वानरीं कुर्य्यात् प्राजापत्या मथापि वेति ॥ १६ ॥
अत्र वौधायन वाक्य संदर्भे एतामवस्थां संप्रा—
प्येत्यनेन एतावतैव विधिना इति प्रागुक्तस्यार्थः स्पष्टीकृतः ॥ ब्राह्मानन्दीयपद्धतौ आह ॥ अथ वपनं कृत्वा यथाविधि स्नात्वा देवायतनादौ समागत्य ब्रह्म यज्ञवद्ब्रह्माञ्जलिं कृत्वा यथाशक्ति वेदादिकं जपित्वा ततः सक्तुमुष्टित्रयं प्रणवेन प्राश्याचम्य॥ आत्मने नमः परमात्मने नमः प्रजापतये नम इति मन्त्रैर्नाभिमभिस्पृश्य ततः पयोदधिघृतं त्रिवृत् कृतमथवाजलमेव त्रिवृदसीति मन्त्रेण प्रथमं प्राश्नीयात् प्रवृदसीति द्वितीयम् विवृदसीति तृतीयम् ततआपः पुनन्तु इति ॥ मन्त्रेण जलं प्राश्य ॥ ततः प्रागुक्त विधिना सावित्री प्रवेशं कृत्वोपवासं सकल्पयेदित्युक्तं । तस्माद्यथारुच्यनुष्ठेयम् ॥

## नारदपरिव्राजकोपनिषदि सावित्री प्रवेशं दर्शयति

ब्रह्मोद्वासनं कृत्वा ॥ समासिञ्चन्तु मरुतः समिन्द्रः संवृहस्पति संमायमग्निः सिञ्चत्वायुषा च धनेन च वलेन चायुष्मन्तः करोतु मेति ॥ यते अग्ने यज्ञिया तनूस्तये ह्यारोहात्मानम् ॥ अच्छावसूनि कृणवन्नस्मेनर्य्या पुरूणि यज्ञो भूत्वा यज्ञमासीद स्वांयोनिं जातवेदो भुव आजायमानः सः क्षय एहीत्यनेनाग्निमात्मन्यारोप्य ध्यात्वाग्निं प्रदक्षिण नमस्कार पूर्व्वकमुद्वास्य प्रातः सन्ध्यामुपास्य सहस्रगायत्री पूर्व्वकं सूर्य्योपस्थानं कृत्वा नाभिदघ्नोदकमुपाविश्याष्टदिक्

पालकार्घ्यपूर्व्वकं गायत्र्युद्वासनं कृत्वा सावित्रीं व्याहृतिषु प्रवेशयित्वा अहं वृक्षस्यरेरिवा कीर्त्तिः पृष्ठंगिरेरिव । ऊर्ध्वं पवित्रो वाजिनीव स्वमृतमस्मि ॥ द्रविणं सुवर्च्चसं सुमेधा अमृतोक्षितः ॥ इति त्रिशंकोर्व्वेदानुवचनं ॥ यश्छन्दसा मृषभो विश्वरूपः छन्दोभ्योऽध्यमृतात् संवभूव ॥ समेन्द्रो मेधया स्पृणोतु अमृतस्य देवधारणो भूयासं शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरिविश्रवं ब्रह्मणः कोशोऽसि भेधया पिहितःश्रुतंमे गोपाय ॥ दारेषणायाश्च धनेषणायाश्च लोकेषणायाश्च व्युत्थितोऽहं ॐ भूः संन्यस्तं मया ॐभुवः संन्यस्तं मयाॐ सुवः सन्यस्तं मयाॐ भूर्भुवः सुवः संन्यस्तं मयेति मन्द मध्यम तालजध्वनिभिर्मनसा वाचोच्चार्य्याभयं सर्व्वभूतेभ्यो मत्तः सर्व्वं प्रवर्त्तते स्वाहेत्यनेन जलं प्राश्य प्राच्यांदिशि पूर्णाञ्जलिं प्रक्षिप्य ॐ स्वाहेति शिखामुत्पाट्ययज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं वलम स्तु तेजः ॥ यज्ञोपवीतं वहिर्न निवसेत्त्वमन्तः प्रविश्य मध्येह्यजस्रं परमं पवित्रं यशोवलं ज्ञान वैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्वा उदकाञ्जलिना सहॐ भूः समुद्रं गच्छ स्वाहेत्यप्सु जुहुयात् ॐ भूः संन्यस्तं मयेति पूर्व्वमुक्तं ॥ ॐ भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रमपि विसृज्य सर्व्वकर्म्मनिर्वर्त्तकोऽहमिति स्मृत्वा जातरूपधरो भूत्वा स्वरूपानुसन्धानपूर्व्वकं मूर्ध्ववाहुरुदीचीं गच्छेत् पूर्व्ववद्विद्वत् संन्यासी चेद् गुरोः सकाशात्

प्रणवमहावाक्योपदेशं प्राप्य यथा सुखं विहरन् मत्तःकिञ्चिन्नान्योऽव्यतिरिक्त इति फलपत्रोदकाहारः पर्व्वतवन देवतालयेषु सञ्चरेत् संन्यस्याथ दिगम्बरः सकल-संचारकं सर्व्वदानन्दस्वानुभवैकपूर्णहृदयः कर्म्मातिदूरलाभः प्राणधारणपरायणः फलरसत्वकूपत्रमूलोदकैर्मोक्षार्थी गिरिकन्दरेषु विसृजेद्देहं स्मरं स्तारकं । विविदिषासंन्यासी चेच्छतपथं गत्वा चार्य्यादिभि र्विप्रै स्तिष्ठ तिष्ठ महाभाग दण्डं वस्त्रं कमण्डलुं गृहाण प्रणवमहावाक्यग्रहणार्थं गुरुनिकटमागच्छेत्याचार्य्यै र्दण्ड कटि-सूत्र कौपीनं शाटीमेकां कमण्डलुं पादादिमस्तकप्रमाणमव्रणं समं सौम्यमकाकपृष्ठं सलक्षणं वैणवं दण्डमेकमाचमनपूर्व्वकं सखामागोपायोजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म्म मेभव यत् पापं तन्निवारयेति दण्डंपरि-ग्रहेज्जगज्जीवनं जीवना धारभूतंमातेमामन्त्रय स्यसर्व्वदा सर्व्व सौम्येति । प्रणवपूर्व्वकं कमण्डलुं परिगृह्यकौपीनाधारं कटि सूत्रमोमिति गृह्याच्छादकं कौपीनमोमिति शीतवातोष्ण त्राणकरं देहैकरक्षणमोमिति कटिसूत्रकौपीनवस्त्र माचनपूर्व्वकं योगपट्टाभिषिक्तो भूत्वा कृतार्थोऽहमिति मत्वा स्वाश्रमाचारपरो भवेदित्यु पनिषत् ॥ चतुर्थोपदेशः॥

आत्मपुराणे ११ अध्याये ॥ दण्डादि लक्षणं एवं सकृन्मुष्टि ग्रहणञ्चतत् प्रमाणमाह ॥

आत्मन श्च विधायैव पृथक् शीतादि वारणम् ॥
मक्षालितं ततो दण्डमव्रणं सौम्य दर्शनम् ॥ १ ॥

वैणवं संस्कृतं तद्वत् स्वात्मना संमितं तथा ॥
कौपीनादि युतं धीमान् स्थापयेदग्निसन्निधौ ॥ २ ॥
रात्रौजागरणे होमे देशाः शस्ता इमेसदा ॥
महानद्या स्तटं तद्वद्देवतायतनं पुनः ॥ ३ ॥
अरण्यं वापि गोष्ठं वा गृहंवा जनवर्ज्जितम् ॥
ब्रह्मेन्द्र सोमसूर्य्यात्म चतुर्व्युहस्वरूपिणम् ॥ ४ ॥
अन्तरं परमं तद्वद्विज्ञानं च विशेषणम् ॥
आत्मनो निर्व्विशेषञ्च चतुर्व्यूहः प्रकीर्त्तितः ॥ ५ ॥
ब्रह्मादि नामकान् मन्त्रानष्टौतान् प्रणवादिकान् ॥
नमोऽन्तांश्च चतुर्थ्याच संयुतान् मनसाजपेत् ॥ ६ ॥
वद्धाञ्जलिञ्च संविश्य स्वासने विजितेन्द्रियः ॥
सक्तुमुष्टिं ततः प्राश्य त्रिराचम्य च मन्त्रयेत् ॥ ७ ॥
आत्मने च तथैवायं प्रवदेदं तदात्मने ॥
प्राजापतय इत्येतं तृतीयं मन्त्रमीरयेत् ॥ ८ ॥
स्वाहान्तं प्रणवादिस्या त्त्रयं नाभेस्तु मन्त्रणे ॥
पयोदधि तथासर्पि स्त्रिवारं प्राशयेत् क्रमात् ॥ ९ ॥
सक्तूनाञ्च त्रयस्यास्य प्राशने प्रणवेरणम् ॥
आचम्य च जपेत् पश्चात् संविश्य प्राङ्मुखः शुचिः ॥१०॥
प्रणवं सह गायत्र्या यथा शक्ति द्विजोत्तमः ॥
ॐ कारं सर्व्वं वेदादिं वेदादीन थवा खिलान् ॥ ११ ॥
उच्चार्य्य प्रविशेद्धीमान् सावित्रीं विधिनामुना ॥
भूर्भुवः स्वरिति प्रोच्य व्याहृती स्तिस्र आत्मवान् ॥ १२ ॥
सावित्रीं प्रविशामीति द्विमन्त्राः पद् समीरिताः ॥

त्रिपदामात्रं गायत्रीमृच्छो मन्त्रद्वये पठेत् ॥ १३ ॥
अर्धतः पादतस्तद्वत् समग्रां चक्रमात् सुधीः ॥
आदित्यास्तमयात् पूर्व्वं स्वगृह्योक्तप्रकारतः ॥ १४ ॥
श्रौतं स्मार्त्तं तथैवाग्निं लौकिकं वापि निर्व्वपेत् ॥
कुण्डे वा स्थण्डिले वापि सावधानमनाः पुमान् ॥ १५ ॥
यथा शास्त्रं ततः सायं होमं सम्यग् विधाय हि ॥
आज्यभागान्तकं कर्म्म स्वगृह्योक्तप्रकारतः ॥ १६ ॥
कृत्वा तस्मिं स्ततः कुर्य्यादग्नावाज्याहुतिं पुमान् ॥
भूः स्वाहेति च संपूर्णां पूर्णाहुतिरितीरितम् ॥ १७ ॥
सायं सन्ध्यामुपास्याथ वह्नेरुत्तरतस्ततः
आस्तीर्य्य दर्भानासीनः कुर्य्याज्जागरणं ततः ॥
तस्यां रात्रौ जपन् ब्रह्म गायत्र्याख्यं सनातनम् ॥ १८ ॥

( इति आत्मपुराणे सक्तुभक्षणादि रात्रि )

## जागरान्तमुक्तम्

ततो गोभिलमतं स्मर्य्यते ॥ वह्वृचपरिशिष्टबौधायनौ ॥ ॐ भूः सावित्रीं प्रविशामि । इति पूर्व्वोक्तं । किन्तु वह्वृच परिशिष्टे बौधायनमते निर्णयसिन्धौ ब्रह्मानन्दीयपद्धतौ एवं विश्वेश्वरीधृतवचने एवं नारदपरिव्राजकोपनिषद्यपि एतेषां ग्रन्थानां मते सक्तुभक्षणपयोदधिसर्पिषां त्रिवृत् प्राश्यानन्तरं गायत्रीप्रवेशनमुक्तं । परन्तु शिवमहा पुराणे कामरूपमठस्थपद्धतौ च अग्न्याधानादिसर्व्वं कर्म्मान्ते सावित्रीप्रवेशनमुक्तम् ॥ तत् प्रमाणमाह परमहं

सोपनिषदि च ॥ आत्मश्राद्धं विरजाहोमं कृत्वा अग्नि मात्मन्यारोप्य लौकिकवैदिकस्मार्त्तकर्म्माणि समाप्य गायत्रीप्रवेशनमुक्तं ॥ शिवमहापुराणेऽपिप्रमाणमाह ॥

श्रौते वैश्वानरे सम्यक् सर्व्ववेद सदक्षिणाम् ॥
तथाग्निमात्मन्यारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥ १ ॥
सावित्रीप्रथमं पादं सावित्रीमित्युदीर्य्य च ॥
प्रवेशयामि शब्दान्तं भूरोमिति च संवदेत् ॥ २ ॥

इति मतद्वयं तयोर्म्मध्ये अग्न्याधानादिकर्म्मान्ते सावित्रीप्रवेशनं युक्तं। कुतः सावित्री प्रवेशानन्तरं अग्निहोत्रादिकर्म्म तस्मिन् दिवसे सायं समयेऽग्निस्थापनादिकार्य्यविशेषोऽस्ति तदन्ते गायत्रीजपादिकं कर्म्म प्रतीयते । एवं पूर्वेद्यु र्ब्राह्ममुहूर्त्ते प्रातः कृत्यादिसन्ध्योपासनादिकं च विरजाहोमादिकार्य्याणां तदन्ते अनर्हत्वात् ॥ अतएव सक्तुभक्षणानन्तरं सावित्रीप्रवेशनमयुक्तं॥ किन्तु सर्व्वकर्म्मान्ते सावित्रीप्रवेशनं युक्तमेव ॥ परन्तु दक्षिणस्थपद्धतौ आद्यन्ते गायत्रीप्रवेशनं यदुक्तं तद प्युक्तयुक्त्या अग्राह्यमिति॥ ततःप्रागुक्त विधिना सावित्री प्रवेशं कृत्वोपवासं सङ्कल्पयेदित्युक्तं । तस्माद्यथारुच्यनुष्ठे यमिति । अथोपवाससंकल्पानन्तरं ब्रह्मान्वाधानविधिः । तत्र बौधायनोक्तप्रकारमाह ॥ यतिधर्मप्रकाशके ॥ पुरा दित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचन माहृत्य ज्वलंतमाहवनीयमुद्धृत्य गार्हपत्ये आज्यं विलाप्योत्पूय शुचिचतुर्गृहीतं गृहीत्वा समिद्धत्याहवनीये

पूर्णाहुतिं जुहोति । ॐ स्वाहेति एतद्ब्रह्मान्वाधानं ॥

एकाग्निस्त्वावसथ्याग्नौ निरग्निकस्तु पृष्टोदिविविधानेनोत्पादितेऽग्नौ लौकिकाग्नावेवोक्तप्रकारेण पूर्णाहुतिं जुहुयादिति ॥ अथ याज्ञवल्क्योपनिषदि प्रमाणमाह ॥ तदेके प्राजापत्यमेवेष्टिं कुर्व्वन्ति अथवा न कुर्य्यादाग्नेय्यामेव कुर्य्यात् ॥ अग्निर्हिप्राणः प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्य्यात् एतयैव त्रयोधातवो यदुत सत्त्वंरजस्तम इति अयन्ते योनि ऋत्विजो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाऽथानोवर्धया रयिमित्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्य्योनिजः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेव तदा ग्रामादग्निमाहृत्य पूर्ववदग्निमाजिघ्रेत् । यदग्निं न विन्देदप्सुजुहुयादापो वै सर्व्वादेवताः सर्व्वाभ्यो देवताभ्यो जुहोमि स्वाहेति स्वाज्यं हविरनामयं । मोक्षमन्त्रस्त्रय्येवं वेद तद्ब्रह्म तदुपासितव्यं ॥ शिखां यज्ञोपवीतं च छित्वा सन्न्यस्तं मयेति त्रिवारमुच्चरेत् ॥ एवमेवैतद्भगवन्निति वै याज्ञवल्क्येनेत्युक्तम् ॥

## ( विश्वेश्वरपद्धतौ यदग्न्याधानोक्तंतदाह )

अतः सावित्रीप्रवेशानन्तरं सूर्य्यास्तमयात् पूर्व्वं आहिताग्निश्चेदाहवनीये एकाग्निश्चेदौपासनाग्नौ । ब्रह्मचारी चेत् लौकिकेऽग्नौ विधुरश्चेत् पूर्व्वोक्तेन पृष्टोदिविविधानेनो त्पादितेऽग्नौ स्रुवेण स्रुचि आज्यं चतुर्गृहीत्वा स्रुचा ॐ स्वाहेति जुहुयात् । एतद्ब्रह्मान्वाधानं ॥ तत्रबौधायनः ॥

पुरादित्यस्यास्तमयाद् गार्हपत्य मुपसमायान्वाहार्य्य पचन-माहृत्य ज्वलन्तमाहवनीयमुद्धृत्यगार्हपत्यमाज्य विलाप्यो-त्पूय स्रुचि चतुर्गृहीत्वा समिद्धेह्याहवनीये पूर्णाहुतिं जुहोति ॐ स्वाहेत्येतद्‌ब्रह्मान्वाधानमिति विज्ञापयत इति ॥ (तथा कात्यायनः) औपासनमावसथ्यं पृष्टोदिवि जपेन वा लौकिकाग्निमितरं चापि श्रद्धावान् स यदा भवेत् । इत्युपक्रम्य तस्मिन् होमंमहायज्ञान् कुर्य्यात् पक्षादि कर्म्म च संन्यासार्थी तथा कुर्य्यात् । पाकयज्ञादिकान् अपीत्युक्तत्वात् ॥ ततः सन्ध्यावन्दनपूर्व्वकमस्तमित आदित्ये स्वाहाग्नौ होमं कुर्य्यात् (तत्र बौधायनः) अथ सायंहुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य्य-द्वन्द्वं पात्राण्यासादयित्वा यष्ट्यादीनि कन्थावासोदक्षिणेनाह वनीयं ब्रह्मायतने दर्भानास्तीर्य्य कृष्णाजिनञ्चान्तर्धाय तां रात्रिं जागर्त्तीति ॥ तथा दत्तात्रेयः ॥

होमं दत्त्वा तथासायं कुशान् कृष्णाजिनं ततः ॥
ब्रह्मस्थाने समास्तीर्य्य ब्रह्मभावेन संस्थितः ॥ १ ॥
ब्रह्मरात्रिं ततो दत्त्वा विष्णौ सन्न्यस्य मानसः ॥
समभ्यर्च्यहृषीकेशं जपन्नेकाक्षरं परमिति ॥ २ ॥

य एवं विद्वान् ब्रह्मरात्रिमुपोष्य ब्रह्मणोऽग्नीन् समारोप्य प्रमीयते । सर्व्वं पाप्मानं तरति तरति ब्रह्मह त्यामिति ॥ अग्न्याधानमुक्तं ॥

दक्षिणस्थपद्धत्यां यदुक्तं तदाह ॥

अथ वनानन्तरं स्नानादि कृत्वा देवागारे अग्न्यागारे

नद्यीतीरे गोष्ठे अरण्ये वा शुचौदेशे स्वकौपीनादि विवर्णं कृत्वा वैणावमकल्मषं ग्रन्थियुक्तं योनिरहितं अदग्धं सत्वचं शिरः प्रमाणं ललाटान्तं भ्रूप्रमाणं वा दण्डं अकृशमस्थूलं समूलोत्पाटितं विप्रानीतं सपर्व्वग्रन्थि युक्तं समुद्रादिकं संपाद्य शंखोदकेन १०८ अष्टोत्तरशत प्रणवेन पुरुषसूक्तेन च केशवादिनाममन्त्रैरभिषिच्य संस्थाप्य ॥ स्मृत्यर्थसारे ॥

दण्डं जलपवित्रञ्च शिक्यं पात्रं कमण्डलुम् ॥
कौपीनमासनं कन्थाच्छादनं पादुकादश ॥ १ ॥

यष्टिं जलं पवित्रञ्च शिक्यं पात्रं कमण्डलुमिति वा ॥ पञ्च संस्थाप्योपविश्य उदगयनादौ एकादश्यां द्वादश्यां वा आतुरश्चेत् कस्मिंश्चित्काले वा देशकालौ स्मृत्वा परमहंसादिसंन्यास ग्रहणं करिष्ये इति संकल्प्य तदङ्गत्वेन विहितमादौ गणेशपूजननान्दीश्राद्धानि करिष्ये इति संकल्प्य ॥ तानि कृत्वा आचम्य प्राणानायम्य ब्रह्माञ्जलिं विधाय मनसाजपेत् । ॐ ब्रह्मणेनमः इत्यादि पूर्व्वोक्तं ॥

ततोऽस्तमयात् प्राग् औपासनाग्निं सान्निध्यं विच्छिन्न श्चेत्पुनः सन्धानमग्नीत्याङ्गप्रायश्चित्तहोमद्रव्यदानपूर्व्वकं कुर्य्यात् । अनाहिताग्निर्विधुरेण पृष्ठो दिवि विधानेनाग्नि मुत्पादनीयः । स यथा आचम्य प्राणानायम्य देशकालौ स्मृत्वा ब्रह्मान्वाधानाद्यर्थं विधुरकल्पोक्तविधिनाऽग्निमुत्पादयिष्ये इति संकल्प्य ॥ स्थण्डिले रेखामुल्लिख्य व्याहृ

तिभिः प्रणवेन च श्रोत्रियागारादग्निमादाय ॥ अन्वग्नि रुषसामग्रमख्यदन्वहानिंप्रथमोजातवेदाः ॥ अनु-सूर्य्यस्य पुरुत्रा च रश्मीननुद्यावापृथिवी आततानं । इति मन्त्रेण स्थण्डिलादाग्नेय्यां दिशिनिधाय । पृष्ठो दिवि पृष्ठो अग्निः पृथिव्यां पृष्ठो विश्वा ओषधीराविवेश वैश्वानरः संहसा पृष्ठो स नो दिवा रिषस्पातु नक्तं । इति मन्त्रे स्थण्डिले लेखासु प्रतिष्ठाप्य तेनैव काष्ठैः समिध्य परि समुह्य । ॐ तत् सवितुर्व्वरेण्यं । यात् स्वाहा । स पवित्र इदं ॥ तां सवितुर्व्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वेजन्यां । यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसां महीं गां स्वाहा । सवित्र इदं ॥ विश्वानि देव सवितुर्दुरितानि परासुव । यद्भद्रं तन्न आसुव स्वाहा । स वित्र इदं ॥ इति तिस्रः समिधोऽभ्याधाय पुनः परिसमुह्य यस्य स्मृत्येत्यादि ॥

एवमग्निसिद्धिं कृत्वा विधुरोऽग्निसमिन्धनं कुर्य्यात् ततो ब्रह्मान्वाधानं । अस्तमनात् पूर्व्वं प्राणानायम्य देशकालौ स्मृत्वा परमहंस संन्यासं कर्त्तुं तत्र विहित ब्रह्मान्वाधानं करिष्ये । इति संकल्प्य ॥ अध्यग्नीन्धनाद्याज्य संस्कारान्ते स्रुक् स्रुवौ समृज्याग्निंपरिषिच्य स्रुचि चतुर्गृहीतं गृहीत्वा । ॐस्वाहेति हुत्वा परमात्मन इदं उत्तर परिषेचनं कृत्वा यस्य स्मृत्येति ॥ एतद्ब्रह्मान्वाधानं ॥ ततः सन्ध्यावन्दनपूर्व्वकमस्तमित आदित्ये स्वः स्वाहाग्नौ नित्यहोमं वैश्वदेवञ्च कुर्य्यात् । अथ सायं होमानन्तर

मुत्तरेऽग्निं तृणानि संस्तीर्य्य तेषु दण्डादीनि दश यष्ट्या-
दीनि पञ्च वा द्वादश आसाद्य दक्षिणेनाग्निं कुशेषु कृष्णा
जिनमास्तीर्य्य तस्मिनुपविश्य गायत्रीं जपन् जागरणं
कुर्य्यात् ॥ इति ॥

( अथ शिवमहा पुराणे यद्ब्रह्मान्वाधानमुक्तं तदाह
नवमाध्याये ॥ श्रीसुब्रह्मण्य उवाच ॥ )

अथमध्याह्न समये स्नात्वा नियत मानसः ॥
गन्धपुष्पाक्षतादीनि पूजा द्रव्याण्युपाहरेत् ॥ १ ॥
नैर्ऋते पूजये द्देवं विघ्नेशं विधिपूजितम् ॥
गणानान्त्वेति मन्त्रेण समावाह्य विधानतः ॥ २ ॥
रक्तवर्णं महाकायं सर्व्वाभरण भूषितम् ॥
पाशांकुशाक्षाभीष्टश्च दधानं करपङ्कजैः ॥ ३ ॥
गजाननं प्रभुं ध्यात्वा गन्धादिभिरनुक्रमात् ॥
अभ्यर्च्य पायसापूपनारिकेलगुडादिभिः ॥ ४ ॥
परितोष्य नमस्कृत्य निर्विघ्नं प्रार्थयेत्ततः ॥
औपासनाग्नौ कर्त्तव्यं स्वगृह्योक्तविधानतः ॥ ५ ॥
आज्यभागान्तमग्नेर्य्यन्मुखतं क्रमतः परम् ॥
भूःस्वाहेति स्रुचा पूर्णाहुतिं हुत्वा समाप्यच ॥ ६ ॥
गायत्रीं प्रजपेद्यावद पराह्नमतन्द्रितः ॥
अथ सायंतनीं सन्ध्यामुपास्य स्नानपूर्व्वकम् ॥ ७ ॥
सायमौपासनं हुत्वा गुरुं विज्ञाप्य वाग्यतः ॥
श्रपयित्वा चरुं तस्मिन् समिदन्नाज्यभेदतः ॥ ८ ॥
हुत्वा रौद्रेण सूक्तेन सद्योजातादि पञ्चभिः ॥

ब्रह्मभिश्च महादेवं साम्बं वह्नौ विभावयेत् ॥ ९ ॥
गौरीमिमाय मन्त्रेण हुत्वा गौरीमनुस्मरन् ॥
ततोऽग्नये स्विष्टकृते स्वाहेति जुहुयात् सकृत् ॥ १०
हुत्वोपरिष्टात्तन्त्रन्तुततो ऽग्नेरुत्तरे बुधः ।
स्थित्वासने जपेन्मौनी चैलाजिन कुशोत्तरे ॥ ११ ॥
यावद्ब्रह्ममुहूर्त्तन्तु गायत्रीं दृढ़मानसः ॥
ततः स्नात्वात्वशक्तश्चेद्भस्मना वा विधानतः ॥ १२ ॥
श्रपयित्वा चरुं तस्मिन्नग्नावे वाभिघारितम् ॥
उदगुद्वास्य वर्हिष्या सादूयाज्येन ततश्चरुम् ॥ १३ ॥
अभिघार्य्य व्याहृतीश्च रौद्रसूक्तञ्च पञ्चच ॥
जपेद्ब्रह्माणि सन्धार्य्य चित्तं शिवपदाम्बुजे ॥ १४ ॥
प्रजापति मथेन्द्रञ्च विश्वान् देवां स्ततः परः ॥
ब्रह्माणञ्च चतुर्थ्यंतं स्वाहान्तान् प्रणवादिकान् ॥ १५ ॥
संजप्य वाचयित्वाथ पुण्याहं च ततः परम् ॥
परस्तात्तन्त्रमग्नये स्वोहेत्यग्नि मुखावधि ॥ १६ ॥
निर्व्वर्त्त्य पश्चात् प्राणाय स्वाहेत्यारभ्य पञ्चभिः ॥
हुत्वा ततश्च रौद्रेण सूक्तेन ब्रह्मभिः क्रमात् ॥ १७ ॥
स्व शाखा क्रमतो हुत्वा समिदन्नाज्य भेदतः ॥
महेशादि चतुर्व्यूहं स्व स्वव्यूहन मन्त्रतः ॥
सशक्तिकमयो हुत्वा समिदन्नाज्य भेदतः ॥
साज्येन चरुणा पश्चादग्निस्विष्टकृतं हुनेत् ॥ १९ ॥
पुनश्च प्रजपेत् सूक्तं रौद्रं ब्रह्माणि पञ्च च ।
महेशादि चतुर्व्यूह मन्त्रांश्च प्रजपन् पुनः ॥ २० ॥

हुत्वोपरिष्टात्तन्त्रन्तु स्वशाखोक्तेन वर्त्मना ॥
तत्तद्देवान् समुद्दिश्य त्यागं कुर्य्याद्विचक्षणः ॥ २१ ॥
एवमग्निमुखाद्यन्तत् कर्म्म तन्त्रं प्रवर्त्तितम् ॥
अतः परं प्रजुहुयाद्विरजाहोममात्मनः ॥ २२ ॥
षड्विंशतत्त्वरूपेऽस्मिन् देहे लीनस्य शुद्धये ॥
तत्त्वान्येतानि मेद्देहे शुध्यन्तामित्यनुस्मरन् ॥ २३ ॥
तत्रात्मतत्त्वशुद्ध्यर्थं मन्त्रैरारुणकेतुके ॥
पठ्यमानैः पृथिव्यादि पुरुषान्त क्रमान्मुने ॥ २४ ॥
साज्येन चरुणा मौनी शिवपादाम्बुजं स्मरन् ॥
पृथिव्यादि च शब्दादि वागाद्यं पंचकं पुनः ॥ २५ ॥
श्रोत्राद्यञ्च शिरः पार्श्वं पृष्ठोदर चतुष्टयम् ॥
जङ्घा श्च योजयेत् पश्चात्त्वगाद्यं धातुसप्तकम् ॥ २६ ॥
प्राणाद्यं पञ्चकं पश्चादन्नाद्यं कोशपञ्चकम् ॥
मनो रेतश्च बुद्धिश्चाहंकृतिः ख्यातिरेवच ॥ २७ ॥
संकल्प श्च गुणाः पश्चात् प्रकृतिः पुरुषस्य तु ॥
भोक्तृत्वं प्रतिपन्नस्य भोजने च प्रयत्नतः ॥ २८ ॥
अन्तरङ्गतया तत्त्वपञ्चकं परिकीर्त्तितम् ॥
नियतिः कालरागश्च विद्या च तदनन्तरम् ॥ २९ ॥
कला च पञ्चकमिदं मायोत्पन्नं मुनीश्वर ॥
मायान्तु प्रकृतिं विद्यान्माया श्रुतिरितीरिता ॥ ३० ॥
तज्जान्येतानि तत्त्वानि श्रुत्युक्तानि न संशयः ॥
कालः स्वभावो नियतिरिति च श्रुतिरब्रवीत् ॥ ३१ ॥
एतत् पञ्चकमेवास्य पञ्चकञ्चुकमुच्यते ॥

अजानन् पञ्चतत्त्वानि विद्वानपि विमूढधीः ॥ ३२ ॥
नियत्यधस्तात् प्रकृतेरुपरिस्थः पुमानयम् ॥
काकाक्षिन्यायमाश्रित्य वर्तते पार्श्वतोऽन्वहम् ॥ ३३ ॥
विद्यातत्त्वमिदं प्रोक्तं शुद्धविद्या महेश्वरौ ॥
सदाशिवश्च शक्तिश्च शिवश्चेदन्तु पञ्चकम् ॥ ३४ ॥
शिवतत्त्वमिदं ब्रह्मन् प्रज्ञानब्रह्मवाक्यतः ॥
पृथिव्यादिशिवान्तं यत्तत्त्वजातं मुनीश्वर ॥ ३५ ॥
स्वकारणलयद्वारा शुद्धिरस्य विधीयताम् ॥
एकादशानां मन्त्राणां परस्मैपदपूर्व्वकम् ॥ ३६ ॥
शिवज्योतिश्चतुर्थ्यन्तामिदं पदमथोच्चरेत् ॥
नममेति वदेत् पश्चादुद्देशत्याग ईरितः ॥ ३७ ॥
अतः परं विविटीति कषोत् कायेति मन्त्रयोः ॥
व्यापकाय पदस्यान्ते परमात्मन इत्यपि ॥ ३८ ॥
शिवज्योतिश्चतुर्थ्यन्तं विश्वभूतपदं पुनः ॥
घोसनोत् सुकशब्दञ्च चतुर्थ्यन्तमथो वदेत् ॥ ३९ ॥
लोकत्रयपदस्यान्ते व्यापिने परमात्मने ॥
परस्मै पदमुच्चार्य्य देवाय पदमुच्चरेत् ॥ ४० ॥
उतिष्ठस्वेति मन्त्रस्य विश्वरूपायशब्दतः ॥
पुरुषायपदं ब्रूयादों स्वाहेत्यस्य संवदेत् ॥ ४१ ॥
लोकत्रय पदस्यान्ते व्यापिने परमात्मने ॥
शिवायेदं न मम च पदं ब्रूयादतः परम् ॥ ४२ ॥
स्वशाखोक्तप्रकारेण पुरस्तात्तन्त्रकर्म्मच ॥
निर्व्वर्त्य सर्पिषा मिश्रं चरुं प्राश्य पुरोधसे ॥ ४३ ॥

प्रदद्याद्दक्षिणान्तस्मै हेमादिपरिबृंहिताम् ॥
ब्रह्माणमुद्वास्य ततः प्रातरौपासनं हुनेत् ॥ ४४ ॥
सं मा सिञ्चन्तुमरुत इति मन्त्रं जपन् मुनिः ॥
या ते अग्न इत्यनेन मन्त्रेणाग्नौ प्रताप्य च ॥ ४५ ॥
हस्तमग्नौ समारोप्य स्वात्मन्यद्वैतधामनि ॥
प्राभातिकीं ततः सन्ध्यामुपास्यादित्यमप्यथ ॥ ४६ ॥
उपस्थाय प्रविश्याशु नाभिदघ्नं प्रवेशयेत् ॥
आहिताग्नि स्तु यः कुर्य्यात् प्राजापत्येष्टिमाहुते ॥ ४७ ॥
श्रौते वैश्वानरे सम्यक् सर्व्ववेदस दक्षिणाम् ॥
अथाग्निमात्मन्यारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ ४८ ॥
सावित्री प्रथमं पादं सावित्रीमित्युदीर्य्य च ॥
प्रवेशयामिशब्दान्तं भूरोमिति च संवदेत् ॥ ४९ ॥
द्वितीयं पादमुच्चर्य्य सावित्रीमितिपूर्व्वकम् ॥
प्रवेशयामिशब्दान्ते भूवरोमिति संवदेत् ॥ ५० ॥
तृतीयं पादमुच्चार्य्य सावित्रीमिति पूर्व्ववत् ॥
प्रवेशयामि शब्दान्ते सुवरोमिति संवदेत् ॥ ५१ ॥
पादद्वयमथोच्चार्य्य सावित्रीमित्यतः परम् ॥
प्रवेशयामिशब्दान्ते भूरोमिति वदेदथ ॥ ५२ ॥
तृतीयं पादमुच्चार्य्य सावित्रीमित्यतः परम् ॥
प्रवेशयामीति वदन् भुवरोमितिसंवदेत् ॥ ५३ ॥
त्रिपदमुच्चरेत् पूर्व्वं सावित्रीमित्यतः परम् ॥
प्रवेशयामिशब्दान्ते सुवरोमित्युदीरयेत् ॥ ५४ ॥
इयं भगवती साक्षाच्छङ्करार्द्धशरीरिणी ॥

पंचवक्त्रा दशभुजा त्रिपंचनयनोज्ज्वला ॥ ५५ ॥
नवरत्न किरीटोद्यच्चन्द्रलेखावतंसिनी ॥
शुद्धस्फटिकसंकाशा दशायुधधरा शुभा ॥ ५६ ॥
हारकेयूर कटक रशना नूपुरादिभिः ॥
भूषितावयवा देवऋषि गन्धर्व्वदानवैः ॥ ५७ ॥
मानवैश्च सदा सेव्या सर्व्वात्मव्यापिका शिवा ॥
सदाशिवस्य देवस्य धर्म्मपत्नी मनोहरा ॥ ५८ ॥
यो ह्यन्यथा नयेत् पापी गायत्रीं शिवरूपिणीम् ॥
स पच्यते महाघोरे नरके कल्पसंख्यया ॥ ५९ ॥
सा व्याहृतिभ्यः संजाता तास्वेव विलयं गता. ॥
ताश्च प्रणवसम्भूताः प्रणवे विलयं गताः ॥ ६० ॥
प्रणवः सर्व्ववेदादिः प्रणवः शिववाचकः ॥
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ॥ ६१ ॥
वाच्य वाचकयोर्भेदो नात्यन्तं विद्यते यतः ॥
तस्मादेकाक्षरं देवं शिवं परमकारणम् ॥ ६२ ॥
उपासते यतिश्रेष्ठा हृदयाम्भोजमध्यगम् ॥
एवं विलाप्य गायत्रीं प्रणवे शिववाचके ॥ ६३ ॥
अहंवृक्षस्य रेरिवेत्यनुवाकं जपेत् पुनः ॥
यश्छन्दसामृषभ इत्यनुवाकमुपक्रमात् ॥ ६४ ॥
गोपायान्तं जपन् पश्चादेषणानां त्रयं त्यजेत् ॥
पुत्रैषणायाश्च ततो व्युत्थितोऽहमिति क्रमात् ॥ ६५ ॥
वित्तैषणायाश्च तथा व्युत्थितोऽहमिति ब्रुवन् ॥
लोकैषणायाश्च तथा व्युत्थितोऽहमितीरयेत् ॥ ६६ ॥

वदेज्जपेत् त्रिधा मन्दमध्योच्चाय क्रमान्मुने ॥
प्रणवं पूर्व्वमुद्धृत्य सृष्टिस्थिति लयक्रमात् ॥ ६७ ॥
तेषामथ क्रमाद्ब्रूयाद्भूः संन्यस्तं भुवस्तथा ॥
संन्यस्तं सुवरित्युक्त्वा संन्यस्तं पदमुच्चरन् ॥ ६८ ॥
सर्व्वमन्त्राधः प्रदेशे मयेति च पदं वदेत् ॥
प्रणवं पूर्व्वमुद्धृत्य समष्टि व्याहृतीर्वदेत् ॥ ६९ ॥
संन्यस्तमित्यतो ब्रूयान्मयेति च समब्रवीत् ॥
सदाशिवं हृदि ध्यात्वा मन्दादीति ततो मुने ॥ ७० ॥
प्रैषमन्त्रांश्च जप्त्वैवं सावधानेन चेतसा ॥
अभयं सर्व्वभूतेभ्यो मत्तः स्वाहेति संजपन् ॥ ७१ ॥
प्राच्यां दिश्यप उद्धृत्य प्रक्षिपेदञ्जलिं ततः ॥
शिखांयज्ञोपवीतंच गायत्र्योत्पाट्य पाणिना ॥ ७२ ॥
गृहीत्वा प्रणवं भूश्च समुद्रं गच्छ संवदेत् ॥
वह्निजायां समुच्चार्य्य सोदकाञ्जलिना ततः ॥ ७३ ॥
अप्सु हुयादथ प्रेषैरभिमन्त्र्य त्रिधात्वपः ॥
प्राश्याचम्य समागम्य भूमौ वस्त्रादिकं त्यजेत् ॥ ७४ ॥
उदङ्मुखः प्राङ्मुखोवा गच्छेत् सप्तपदाधिकम् ॥
किंचिद्दूरमथाचार्य्य स्तिष्ठ तिष्ठेति संवदेत् ॥ ७५ ॥
लोकस्य व्यवहारार्थं कौपीनं दण्डमेवच ॥
भगवन् स्वीकुरुष्वेति दद्यात् स्वेनैव पाणिना ॥ ७६ ॥
धृत्वा सडोरं कौपीनं काषायवसनं ततः ॥
आच्छाद्याचम्य च द्वेधा तं शिष्यमिति संवदेत् ॥ ७७ ॥
इन्द्रस्य वज्रोसि तत इति मन्त्रमुदाहरन् ॥

संपार्श्र्यदण्डं गृह्णीयात् सखा मा इति संजपन् ॥ ७८ ॥
अथ गत्वा गुरोः पार्श्वं शिवपादाम्बुजं स्मरन् ॥
प्रणम्य दण्डवद्भूमौ त्रिवारं पुनरुत्थितः ॥ ७६ ॥
कृतांजलिपुटस्तिष्ठेद्गुरुपादसमीपतः ॥
कर्म्मारम्भात् पूर्व्वमेव गृहीत्वा गोमयं शुभम् ॥ ८० ॥
स्थूलामलकमात्रेण कृत्वा पिण्डान् विशोष्यच ॥
सौरैस्तु किरणैरेव होमारम्भाग्निमध्यगान् ॥ ८१ ॥
निलिप्य होमसंपूर्णौ भस्म संगृह्य गोपयेत् ॥
ततो गुरुः समादाय विरजानलजं सितम् ॥ ८२ ॥
भस्म तेनैव तं शिष्यमग्निरित्या दिभिः क्रमात् ॥
मन्त्रैरङ्गानि संस्पृश्य मूर्द्धादिचरणांततः ॥ ८३ ॥
ईशानाद्यैः पंचमन्त्रैः शिर आरभ्य सर्व्वतः ॥
समुद्धूल्य विधानेन त्रिपुण्ड्रंधारये त्ततः ॥ ८४ ॥
त्र्ययायुषैस्त्र्यंबकैश्च मुर्द्ध्यारभ्य यथा क्रमम् ॥
हृत्पङ्कजे समासीनं ध्यात्वा शिवमुमासखम् ॥ ८५ ॥
हस्तं निधाय शिरसि शिष्यस्य प्रीतमानसः ॥
ऋष्यादिसहितं तस्य दक्षकर्णे समुच्चरेत् ॥ ८६ ॥
प्रणवं त्रिप्रकारन्तु ततस्तस्यार्थमादिशेत् ॥
षड्विधार्थपरिज्ञानसहितं गुरुसत्तमः ॥ ८७ ॥
द्विषट्प्रकारं स गुरुं प्रणम्य भुवि दण्डवत् ॥
तदधीनो भवेन्नित्यं वेदान्तार्थानुसारतः ॥ ८८ ॥
शिवज्ञानपरो भूयाच्छ्रवणाद्यङ्गपूर्व्वकम् ॥
प्राभातिकाद्यनुष्ठानं जपान्तं कारयेद्गुरुः ॥ ८९ ॥

पूजाश्च मण्डले तस्मिन् कैलासप्रस्तराह्वये ॥
शिवोदितेन मार्गेण शिष्यस्तत्रैव पूजयेत् ॥ ९० ।
देवं नित्यमशक्तश्चेत् पूजितुं गुरुणा शुभम् ॥
स्फाटिकं पीठिकोपेतं गृह्णीयाल्लिङ्गमैश्वरम् ॥ ९१ ॥
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि मे ॥
न त्वनभ्यर्च्य भुंजीयां भगवन्तं त्रिलोचनम् ॥ ९२ ॥
एवं त्रिवारमुच्चार्य्य शपथं गुरुसन्निधौ ॥
तस्मिन्नेव महादेवं नित्यमुद्युक्तमानसः ॥
पूजयेत्परया भक्त्या पंचावरणमार्गतः ॥ ९३ ॥

इतिश्री शिव महापुराणे कैलाससंहितायामुत्तरभागे नवमाऽध्याये संन्यासविधिः समाप्तः ॥ इति ॥

( आत्मपुराणे एकादशाध्याये अग्न्याधान विधिमाह ॥ )

अग्निहोत्री निजैरेव वह्निभिः श्रुतिचोदितैः ॥
आग्नेयीं प्रविधायैव कुर्य्यात् त्रैधातवीं ततः ॥ १ ॥
इष्टिमौपासनीं तद्वत् प्राजापत्यां समाचरेत् ॥
निजाग्निनापि विधुर स्तामेव विधुराग्निना ॥ २ ॥
ब्रह्मचर्य्यादयः सर्व्वेलौकिके जातवेदसि ॥
स्थानात् पवित्रादानीते कर्म्म कुर्य्युरिदं सदा ॥ ३ ॥
आहितानाहिताग्नीनामनग्नीनांच केचन ॥
प्राजापत्याभिधामिष्टि मिच्छन्ति न परे तथा ॥ ४ ॥
इष्टिं कृत्वाथवाऽ कृत्वा साग्निर्व्वापि निरग्निकः ॥
वक्ष्यमाणमिदं कर्म्म कुर्य्यात् सर्व्वं द्विजोत्तमः ॥ ५ ॥
ब्राह्मेमुहूर्त्त उत्थाय स्नात्वा विप्रो यथा विधि ॥

जलतो मन्त्रतो वापि भस्मना वा स्वशक्तितः ॥ ६ ॥
अग्नौ ततश्चरुं विद्वान् श्रपयेत् स्वात्मनः सदा ॥
प्रागुदग्वाथ तं पक्वं चरुमुद्वासयेत्ततः ॥ ७ ॥
अभिघार्य्यजपेत् पश्चाद्व्याहृति त्रयमात्मवान् ॥
तथा पुरुषसूक्तंच मन्त्रानेतांश्च धर्म्मवित् ॥ ८ ॥
इन्द्राय प्रवदेत् स्वाहाथ प्रजापतयेपिच ॥
स्वाहा विश्वेभ्य एतेभ्यो देवेभ्यो ब्रह्मणेऽपिच ॥ ९ ॥
स्वाहान्तद्वयमप्येतदुच्चरेत् पूर्व्ववद्द्विजः
चत्वारःकथितामन्त्रा एत इन्द्रादिदेवताः ॥ १० ॥
इदं सर्व्वंजपित्वाथ पुण्याहं वाचयेत् पुनः
स्रूचाज्यं परिगृह्याथ जुहुयाद्धि मुखाहुतिम् ॥ ११ ॥
स्वाहान्तमग्नये मन्त्रमुच्चार्य्येदं समाहितः ॥
प्राणाहुतिसमुद्दिष्टैर्जुहुयान्मन्त्र पंचकैः ॥ १२ ॥
पौरुषेणापि सूक्तेन स्वशाखापठितेन हि ॥
समिदाज्य चरुं स्तद्वज्जुहुयात् क्रमतो द्विजः ॥ १३ ॥
अग्नये जुहुयादाज्याहुत्यास्विष्टकृते ततः ॥
जपेच्च पौरुषं सूक्तं स्वशाखोक्तप्रकारतः ॥ १४ ॥
उपरिष्टात्तत स्तन्त्रं विरजाहोमसंयुतम् ॥
पूर्णाहुत्या च संयुक्तं प्रविधाय चरुं ततः ॥ १५ ॥
प्राशयेत् क्रमएषोत्र ज्ञातव्यः शास्त्रवेदितः ॥
आज्येन चरुणासार्द्धं विरजाहोम ईरितः ॥ १६ ॥
विरजाहोमतः पश्चाच्चरुं संप्राश्यसर्पिषा ॥
आचम्यजुहुयात् पश्चात् पूर्णाहुति मतंत्रितः ॥ १७ ॥

ॐ स्वाहेति च मन्त्रेण ब्राह्मणो नियतःशुचिः ॥
इष्टिः सर्व्वापि साग्नेःस्यान्निरग्नेर्नैवकाचन ॥ १८ ॥
इति केचिद्वदन्त्यन्ये प्राजापत्या विवर्ज्जितम् ॥
औपासनाग्निसंयोगात् प्राजापत्येष्टिरिष्यते ॥ १९ ॥
वचनादेव सर्व्वेषां चतुर्थाश्रमसंग्रहे ॥
प्राजापत्येष्टिरुदितानिषादस्थपतीष्टिवत् ॥ २० ॥
ततः साग्नेर्निरग्नेः स्यादिष्टिरेषेति केचन ॥
एवमेते त्रयः पक्षाःश्रौतेस्मार्त्ते च लौकिके ॥ २१ ॥
वह्नाविष्टौ मयोक्ता स्ते विप्राणां मतभेदतः ॥
त्रैधातवीतथाग्नेयी इष्टिरुक्ताग्निहोत्रिणः ॥ २२ ॥
भवेत् सा परहंसानां नान्यत्रेति च केचन ॥
परहंसाश्रमादन्यं न्यासं चेदग्निहोत्रिणः ॥ २ ॥
कुर्य्युस्तत्रप्रकुर्व्वीरन् प्राजापत्येष्टिमादरात् ॥
एवं विषयतः प्राहु र्व्यवस्थांहि द्विजोत्तमाः ॥ २४ ॥
पौराणिका आहिताग्नेरन्यत्रेष्टिनिवारकाः ॥
त्रैधातवीतथाग्नेयी सर्व्वथैवाग्निहोत्रिणः ॥ २५ ॥
प्राजापत्या कृतेवादो वर्त्ततेत्र द्विजन्मनाम् ॥
मुखाहुति मुखं चैतत् पुर्णाहुत्यंतमीरितम् ॥ २६ ॥
अविवादं परेहंसे सर्व्वेषाञ्च द्विजन्मनाम् ॥
अग्नौश्रौते तथास्मार्त्ते लौकिके वा विधायतत् ॥ २७ ॥
कर्म्मसर्व्वं ततः कुर्य्यादौत्तरं परिषेचनम् ॥
ऋत्विग्भ्यो दक्षिणां दद्याद्बलीवर्द्दं सकाञ्चनम् ॥ २८ ॥
सर्व्वाज्ययै स्तथाशेषमन्यच्चापि स्वशक्तितः ॥

क्षमाप्यतां स्तथा वन्धूनन्यानपि विसर्ज्यच ॥ २६ ॥
पुत्रदारादिकान् सर्व्वान्निःसङ्गो यतिवद्भवेत् ॥
स्वजनाश्च ततः सर्व्वे स्नेहमात्रविवर्ज्जिताः ॥ ३० ॥
स्वस्व स्थानानि गच्छेयुः प्रहृष्टमनसोऽपिवा ॥
स्थितिं तत्रैव ते कुर्य्युः प्रेक्षका इव कौतुकम् ॥ ३१ ॥
प्रातर्होमादिकं तत्र कुर्य्यात् स स्नेहवर्ज्जितः ॥
समासिञ्चन्तु मेत्यादि मन्त्रादग्नेरुपस्थितः ॥ ३२ ॥
कृत्वा यातेह्ययन्ते वा तयोरन्यतरेण वा ॥
त्रिवारं मन्त्रतः स्वीयमग्नि मारोपयेद्द्विजः ॥ ३३ ॥
यदा न विद्यते वह्निः श्रौतः स्मार्त्तोपि लौकिकः ॥
अप्स्वेवात्र तदाहोमं कृत्वा कुर्य्यात् स्वरोपणम् ॥ ३४ ॥
उदरे स्वेसमारोप्य वह्निं स्थित्वा ततो द्विजः ॥
पूर्व्वमारोपितां तत्र सावित्रीं संस्मरेत् पुनः ॥ ३५ ॥
ततो गत्वा जलाभ्यासं प्रातः सन्ध्यामुपास्य च ॥
नाभिदघ्ने जले स्थित्वा जपेन्मन्त्रानमूंस्ततः ॥ ३६ ॥
आहृतानूर्द्ध्ववाहुः सन्नहं वृक्षस्य रेरिवा ॥
इत्यादिवच इत्यन्तं तद्वदूयश्छन्दसामिति ॥ ३७ ॥
नववाक्यान्यथो पुत्रैषणाया इति वा जपेत् ॥
एतदन्ते प्रकुर्व्वीत व्याहृतित्रयतः पुमान् ॥
त्रिःसंन्यस्तं मयेत्येवं मन्दमध्योत्तर स्वरैः ॥ ३८ ॥

इत्यात्मपुराणे संन्यासविध्युक्तम् ॥

विश्वश्वेरमतं स्मर्य्यते ॥ अतोऽग्न्याधानानन्तरं ब्राह्मे मुहुर्त्तेयत् कर्तव्यं तदाह ॥ शौनकः । ब्राह्मे मुहूर्त्ते चो.त्थाय

यथाविधि स्नात्वा प्रातरग्निकार्य्यं कृत्वा व्याहृतीर्जपित्वा तरत् समन्दीधावतीति सूक्तमप्सु जपेत् ॥ इति ॥ दत्तात्रेयः ॥ ब्रह्मरात्रं ततो दद्यात् पौर्णमास्यां द्विजोत्तमः ॥ प्रातर्हुत्वा स्वकल्पेन कृत्वा स्नानादिकां क्रियां ॥ १ ॥ प्राजापत्यां प्रतिपाद कृत्वेष्टिन्तुयथाविधि ॥ ततो विप्राय दद्यात्तु सर्व्ववेदसदक्षिणामिति ॥ २ ॥

अथवा । आहिताग्नि वैश्वानरीष्टिं कुर्य्यात् । तथा च श्रुतिः । आग्नेयीमेव कुर्य्यात् । अग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्व्वपति प्राजापत्यं चरुं वैष्णवं नवकपालं चेति । तत्र विशेषो वौधायनेनोक्तः ॥ देवतायजनोल्लेखन प्रभृत्यग्निमुखान्तं कृत्वा पङक्त्यां जुहोति वैश्वानराय प्रतिवेदयां। इतिपुरोऽनुवाक्यामनूच्य वैश्वानरः पवमान पवित्रेणेति । अथाज्याहुती र्जुहोति वैश्वानरो न उहुतय इत्यष्टाभिरनुच्छन्दसमग्नये स्वाहेति । अथैनमुपतिष्ठते । सहस्रशीर्षा पुरुष इत्यनेनानुवाकेन स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रादानात् । अथाग्नेरग्रेदर्भस्तम्भेषु हुतशेषं निदधाति । सर्व्वो वै रुद्रं विश्वं भूतमिति द्वाभ्यामुन्मृज्येत्यग्निं आयुर्दा अग्नेर्हविषोजुषाण ॥ इति ॥ अथ पक्वादुपादाय प्रक्षाल्य प्राश्नाति । सहस्र शीर्षा पुरुष इत्यनुवाकेन प्राश्याचम्यात्मानं प्रत्यभिमृश्यति ॐमिति ब्रह्मोत्येतेनानुवाकेन । अथाग्निद्रव्यमग्नौ प्रक्षिप्यात्मन्यग्नीन् समारोपयेत् । याते अग्ने यज्ञिया तनूरिति । तत्रैव विशेषमाह शौनकः ॥ प्राजापत्यद्ब्रह्म

पुनराहवनीय मुद्धृत्य प्राणापनौ समौ कृत्वा सर्व्वं निदधाति यच्च पूर्वं यच्च प्रजापतौ तन्मनसि जुहोमि विमुक्तोऽहं देवकिल्विषात् स्वाहा । अयन्तेयोनिऋत्विय इत्यात्मन्यग्नीन् समारोपयति । प्राणेनगार्हपत्यं । अपानेन दक्षिणाग्निं व्यानेनाहवनीयमुदानेनावसथ्यं समानेन सभ्यं पुनराहवनीयं गत्वाद्भ्यःसंभूत इत्यादित्यमुपस्थायोत्तर नारायणेन गृहान्निःक्रमेदिति । पात्रविशेषाणां प्रतिपत्तिमाह । दत्तात्रेयः ॥ मृन्मयान्यश्ममयानिचाप्सु जुहुयात् । गुरवे तैजसानि पात्राणि दद्यादिति । यमसंहितायां ॥ ततश्चाहवनीयाख्ये हुत्वा पात्राणि मन्त्रतः ॥ असौ स्वर्गायलोकाय स्वाहेत्येवं निधापयेत्अयन्ते योनि रित्येवं समारोप्यात्मनो मुखे । ततो वैश्वानरं ध्यायेत् स्वर्गाख्यं विश्वतोमुखं ॥ अथवा गार्हपत्येऽग्नौ जुहुयादरणिं बुधः । अयमग्नि गृहपतिमन्त्रेणानेन भावितः अयंते योनि रित्येवं समारोप्यात्मनो हृदि ॥ ततो वैश्वानरं ध्यायेत् भूसंज्ञं विश्वतोमुखम् जुहुयाद्दाक्षिणेऽग्नौ च मुशलोलूखलेततः । अयमग्निः पुरीष्येति मन्त्रेणानेन यत्नतः । अयंतेयोनिरित्येवं मनस्यारोप्य वेदवित् । ध्यायेत्वैश्वानरं देवमन्त रिक्षाख्यमव्ययं । गत्वाथगार्हपत्यन्तु सूक्तं वै पौरुषं जपेत् ॥

वेद्यां मध्ये ततः स्थित्वा ओमिति तु जपेद्द्विज इति ॥ एकाग्निरनग्निर्वा शौनकोक्तेन विधिना चरुं श्रापयित्वा होमादिकं कुर्य्यात् । अत्र पुरुष सूक्तेन चर्वाज्य होमानन्तरं

विरजाहोममपि केचिदाहुः । तदुक्तं शिवगीतायां । जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्तथा । अनुवाकान्तमेकाग्रं समिदाज्यं चरुन्न् पृथक् ॥ इति ॥ तदुच्यते ॥ ब्राह्मे मुहूर्ते उत्थाय यथा विधिस्नात्वा प्रातरग्निकार्यं कृत्वा व्याहृतीर्जपित्वा तरत् समंदीधावतीति सूक्तमप्सुजपित्वा स्वगृह्योक्तेन विधिना चरुं श्रपयित्वाऽग्निमुपसमाधाय प्राणाय स्वाहा । अपानाय स्वाहा । समानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । इत्याज्य होमं कृत्वा । अथ पुरुष सूक्तेन प्रतिमन्त्रेण चरुमाज्य होमं च कृत्वा । पुरुष सूक्तं जपित्वा प्रणीता पात्रं संमृज्या ऽसौ स्विष्टान्तं हुत्वा आचार्य्यायाज्य पात्रं हिरण्यं धेनुं च दत्वा आचार्य्य पुरतोऽवस्थितः सन् समासि ञ्चन्तुमरुतः समिन्द्रः सं बृहस्पतिः समायमग्निः सिञ्चत्वायुषा च वलेन चायुष्मन्तं करोतु मामिति जपित्वा या ते अग्ने यज्ञिया तनूस्तये ह्यारो ह्यात्मनात्मानं अच्छावसूनि कृण्वन् स्मनर्य्या पुरूणि यज्ञो भूत्वा यज्ञमासीद स्त्वां योनि जातवेदो भुवः। अजायमानः संभूयएहीति त्रिरात्मन्यग्निं समारोप्येति । अनग्ने स्तु समारोप्य एवनास्ति तत्र वह्वृचपरिशिष्टे । अथात्मन्यग्नीन्न समारोपयेदेकाग्नि रेकाग्निं अनग्निर्न कञ्चनेति । अनग्नेः कपिलप्रोक्तेन विधिना सन्यासकर्त्तव्यत्वमपि संक्षेपतो दर्शयिष्यामः ॥ नान्दीमुख ब्राह्मणभोजन पुण्याहवाचन केशश्मश्रुलोमनखवपन स्नान सर्व्वदण्डदानादि सन्निधाय त्रिवृत प्राशन सावित्री प्रवेशन सन्ध्याराधनानि कृत्वोपास्य

स्नात्वा सन्ध्याराधनं कृत्वा देवर्षि पितृतर्पणं कृत्वाच अद्भ्यः स्वाहा ॥ पुत्रैषणायाश्च इति पूर्व्वोक्तं । व्युत्थितो ऽहं स्वाहेत्य प्सु एव अपः पाणिना हुत्वा यथाविधि प्रैषमुक्त्वा अभयं सर्व्वभूतेभ्यो मत्तः स्वाहेत्यभयदक्षिणां दत्त्वा यथाधिकारं यथा विधिनमस्कारं कृत्वा यथाविधि दण्डादि गृहीत्वा स्वधर्म्मनिष्ठोभवेदिति ॥ साग्नि स्तु उक्तेन प्रकारेण विधिना अग्नि समारोपं विधाय जलं गच्छेत् । ततः पुत्रंदृष्ट्वा त्वं ब्रह्म इत्यादि वाक्यत्रयं जपेत्।तथा च शौनकः। पुत्रं दृष्ट्वा जपति त्वं ब्रह्म त्वं यज्ञ स्त्वं लोक इति ॥ स पुत्रः प्रत्याह अहं ब्रह्म अहं यज्ञो ऽहंलोक इति । कण्ठ श्रुतिः प्रमाणमाह ॥ सशिखान् केशान् निष्कृत्य विसृज्य यज्ञोपवीतं निष्क्रम्य पुत्रं दृष्ट्वा त्वं ब्रह्मा त्वं यज्ञस्त्वं वषट् कारस्त्वं ॐकार स्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं विधाता त्वं त्वष्टा त्वं प्रतिष्ठामीति । अथ पुत्रो वदत्यहं ब्रह्मा हं यज्ञो इत्यादि पठेत् । तथा च वह्वृच परिशिष्टे । अथ पुत्रान् सुहृदो बन्धून् प्रत्याह । न मे कश्चिन्नाहं कस्य चिदिति । तत आश्रमात् सन्न्यासाश्रमं गच्छामीति संकल्पयेत् । ततो ऽप्स्वेवोदकाहुतिद्वयमाह ॥ ॥ कपिलः ॥ अद्भ्यःस्वाहा पुत्रैषणायाश्च इत्यादि पूर्व्वेणोक्तं ॥ ततो यज्ञोपवीतं द्विहस्ते गृहीत्वा ऽद्भिरार्द्रीकृत्य वेदान्त विज्ञानेति मन्त्रेण प्सु जुहुयात्॥तथा च बौधायनः॥ अथ यज्ञोपवीतं विसृज्याद्भिः संस्पृश्याप्सु जुहोतीति ॥ आरण्युपनिषदि च ॥ उपवीतं भूमौचाप्सु वा विसृजेत् इति ततः शिखार्थं रक्षितान् केशानुत्पाट्य भूः स्वाहेति

भूमावप्सु वा निक्षिपेत् ॥ तथा च कठश्रुतिःसशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतं भूःस्वाहेति तथाथर्व्वणश्रुतिरपि सशिखं वपनं कृत्वा वहिः सूत्रं त्यजेद्बुधः ॥ ततः प्रैषोक्तिप्रकारमाह ॥ आरुणिश्रुतिः ॥ ब्रह्मसूत्रमहमेवेति विद्वान् त्रिवृत् सूत्रंत्यजेद्विद्वान् य एवं वेद सन्यस्तं मया संन्यस्तं मयेति त्रिरुक्ता अभयं सर्व्वभूतेभ्यो मत्तः सर्व्वं पूवर्त्तते । सखामागोपायज इत्यादिं पूर्व्वोक्तम्। बह्वृचपरिशिष्टे ॥ प्राङ्मुखस्तिष्ठन् उर्द्ध्व वाहु र्व्रूयात् ॐ भूः सन्यस्तं मयाइति पूर्व्वोक्तं ॥ वौधायन स्त्वन्यप्रकारमाह ॥ ॐ भुर्भूवःस्वः संन्यस्तं मया सन्यस्तं मयेति त्रिरूपांशूक्तां त्रिरूच्चै स्त्रि वृत्याहि देवा इति विज्ञायते । अभयं सर्व्वभूतेभ्यो मत्तः इत्यपां पूर्णमञ्जलिं निनयतीति ॥ ततो विष्णु प्रार्थना प्रकारमाह ॥ यमः ॥

दत्वा तोयाञ्जलिं विप्रो भक्त्या संप्रार्थयेद्धरिम् ॥
सर्व्वदेवात्मके तोये तोयाह्रुति महं हरे ॥ १ ॥

दत्वा सर्व्वैषणां त्यक्त्वा युष्मच्छरण मागतः ॥
त्राहिमां सर्व्वलोकेश गतिरन्या न विद्यते ॥ २ ॥

संन्यस्तं मे जगन्नाथ मां त्राहि मधुसूदन ॥
त्राहिमां सर्व्व सर्व्वेश वासुदेव सनातन ॥ ३ ॥

संन्यस्तं मे जगद्योने पुण्डरीकाक्ष मोक्षद ॥
अहं सर्व्वाभयं दत्वा भूतानां परमेश्वर ॥
युष्मच्चरणमापन्न स्त्राहि मां पुरुषोत्तमेति ॥ ४ ॥

ततो दिगम्बरो भूत्वा किञ्चिदुदङ्मुखोगच्छेत् ततो

विविदिषु गुर्व्वनुज्ञया परावृत्य गुरुसमीपे तिष्ठेत् तदनुशास नात् तथा संप्रदायविदः ॥

ततो दोर कौपीन वहिर्वासः कन्था दण्डञ्च । क्रमेणै-कैकं प्रणवेनैव दद्यादिति ॥

॥ तथा वह्वृचपरिशिष्टे ॥ अन्यत् सर्व्वं प्रणवेनेति । तत इन्द्रस्यवज्रोऽसि इति पूर्व्वोक्तं ॥ मैत्रायणिश्रुतिः इन्द्रस्यवज्रोसीति । त्रीणि वैणवान् दक्षिणपाणौ धारयेदेकं वा यद्येकं तदा स्वशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं चतुर्षु वर्णेष्वेकागारे भैक्षं समाश्रयेत् । माधुकरींचेति कामं मे वैणवं दण्डं धारयेदित्यारुणीश्रुतेः ॥

## अथदण्डलक्षणमाह ॥

(अत्रिः) धारयेद्वैणवं दण्डं न स्थूलं न कृशं तथा ॥
तस्यचाग्रेच मूलेच ग्रन्थित्यक्ता च धारयेत् ॥ १ ॥
द्विचत्वारि षडष्टौ वा ह्यङ्गुलानि समाहितः ॥
न स्थूलं नातिरिक्तश्च द्विगुणांमूलतो ऽग्रके ॥ २ ॥
भविष्यत् पुराणे ॥ दण्डंसुवैणवं सौम्यं सत्वचं समपर्व्वकं ॥
पुण्यस्थानसमुत्पन्नं नानाकल्मषशोभितम् ॥ ३ ॥
अदग्धमहतं कीटैः पर्व्वग्रन्थि विराजितं ॥
स्वयं भूत न्तु मेदिन्यां शाखा वर्ज्यमृजुंशुभम् ॥ ४ ॥
नासाक्षघ्न शिरस्तुल्यं भ्रुवोर्वा विभृयाद्यतिः ॥ विष्णुपुराणे
एकदण्डी भवेद्वापि त्रिदण्डीचाथवा भवेदिति ॥ ५ ॥
एवं कात्यायनः ॥ एकदण्डधरामुण्डा ॥ इति ॥

॥ जामदग्नः ॥ दण्डात्मनोस्तु संयोगः सर्व्वदैव विधीयते ॥
न दण्डेन विनागच्छेदिषुत्क्षेपत्रयं बुधः ॥ ६ ॥
जलान्तरादिषु क्षिप्ते न कश्चिद्दोषभाग् भवेत् ॥
शिष्यादिभि र्विनीतोऽपि नीत एव स आत्मना ॥ ७ ॥
हस्तपादादिवत् शिष्य इति शिष्टा ब्रुवन्ति हि ॥ इति ॥

## अथ दण्डस्वरूपादि लक्षणमाह ॥

पालाशं ब्रह्मचर्य्यस्य वानप्रस्थस्य विल्वकम् ॥ ८ ॥
यतीनां वैणवं दण्ड मन्यन्तु नैव धारयेत् ॥
केशमितो ब्राह्मणानां ललाटं क्षत्रियस्य च ॥ ९ ॥
घ्राण संमितो वैश्यस्य यतीनां ब्रह्मरन्ध्रकः ॥
एकदण्डी भवेद्वापि त्रिदण्डी वाथ वा भवेत् ॥ १० ॥

क्षत्रियवैश्ययोर्यत् दण्डधारणमुक्तं तदुपनयनकालीन विधिर्नतु यतिधर्म्मेऽस्ति ॥ एकदण्डधरा मुण्डा इति जामदग्न्यवचनात् ॥ दण्डन्तुवैणवंरम्यमिति पूर्व्वोक्तम् ॥ दण्डस्य निर्य्योनित्वं प्रशस्तमाह ॥

नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा विभृयाद्यतिः ॥
ब्रह्मदण्डसमोदण्डो यतीनामेव शस्यते ॥ ११ ॥
धारयेद्वैणवं दण्डं न स्थूलं न कृशन्तथा ॥
तस्यचाग्रे च मूलेच ग्रन्थिं त्यक्त्वा तु धारयेत् ॥ १२ ॥
द्वि चत्वारि षडष्टौ वा ह्यङ्गुल्यश्च समाहिताः ॥
न न्यूनं नातिरिक्तं वा द्विगुणं मूलतोऽग्रके ॥ १३ ॥
अतो न्यूनो न कर्त्तव्यो नाधिको नप्रशस्यते ॥
कनिष्ठा ब्रह्मदण्डे च तर्जनीविष्णुदण्डके ॥ १४ ॥

मध्यमा रुद्रदण्डे च आसुरेऽङ्गुष्ठकं तथा ॥
उत्तमस्तु कनिष्ठेन तर्जन्या मध्यमः स्मृतः ॥ १५ ॥
मध्यमया कनिष्ठः स्यादङ्गुष्ठेनासुरोत्तमः ॥
दण्डलक्षणं । मूलस्थूलो भवेन्नारी मध्यस्थूलो नपुंसकं ॥१६॥
समपर्व्वसमाकारः पुरुषो वैणवो मतः ॥
॥ दण्डनामान्याहुः ॥ षड्भिः सुदर्शनं दण्डं नारायण-
मथाष्टभिः ॥ १७ ॥
गोपालं दशभिर्युक्तं द्वादशै र्वासुदेवकम् ॥
चतुर्द्दशैरनन्तञ्च अत ऊर्द्ध्वं न धारयेत् ॥ १८ ॥
पञ्चदण्डा यतीनाञ्च षष्ठञ्च नैवधारयेत् ।
अथ ब्रह्ममुद्रास्थापनमाह ॥
यतीनां वैणवो दण्डो नान्योग्राह्यो कथञ्चन ॥ १९ ॥
पादाङ्गुष्ठप्रमाणेन ब्रह्मरन्ध्रेण सम्मितम् ॥
पञ्चभागञ्च कुरुते ज्ञानवान्नतु मस्करी ॥ २० ॥
दण्डस्य तृतीये भागे ब्रह्ममुद्रा विधीयते ॥
केचिद्भागत्रयं कृत्वा अग्रभागं परित्यजेत् ॥ २१ ॥
बध्नीयान्मध्यभागान्ते ब्रह्ममुद्रा तु मस्करी ॥
भागद्वयं विहायोर्द्ध्वं चतुरङ्गुलमानतः ॥ २२ ॥
दण्डं कार्पाससूत्रेण वेष्टयेत् संप्रदायतः ॥
यज्ञोपवीतं सूत्रेण नवांकसमलाञ्छितः ॥ २३ ॥
पूर्व्वोत्तराभ्यां भागाभ्यां वेष्टयेत्तमखण्डितम् ॥
अकारोकारमकारांऽर्धमात्रा चतुरङ्गुलम् ॥ २४ ॥
दण्डस्य चोर्द्धलिङ्गस्य वेष्टयेत् संप्रदायतः ॥

ब्रह्म ग्रन्थिः विष्णु ग्रन्थिः रुद्रग्रन्थिस्तथैवच ॥ २५ ॥
तस्याग्रे चैकग्रन्थिश्च कल्पनीयो विधानतः ॥
( अथ ब्रह्ममुद्रा संप्रदाय कारिकाः ॥ यति धर्म्म समुच्चये )
आदौ तु यमपाशञ्च कालग्रन्थिः द्वितीयकम् ॥ २६ ॥
द्वे सूत्रे वेष्टयेन्मात्रा मात्राः सूत्रेण छादयेत् ॥
उभेरज्जु चलन्मध्ये नागग्रन्थि त्रयं ततः ॥ २७ ॥
ग्रन्थिद्वयं ततः पश्चादुभे सूत्रेच पीड़येत् ॥
सार्द्धत्रयं ब्रह्मग्रन्थिं मात्रा सन्धान पूर्व्वकम् ॥ २८ ॥
ब्रह्ममुद्रा समाख्याता चतुरङ्गुल विभागिका ॥
गोशृङ्ग सदृशं ग्रन्थिं कारये ल्लिङ्गसम्मुखम् ॥ २९ ॥
॥ अन्यच्च ॥ अष्टाङ्गुलं तदर्धञ्च षड़ङ्गुल मथापिवा ॥
कार्पास सूत्रयुग्मेन वेष्टये द्ब्रह्ममुद्रिकाम् ॥ ३० ॥
( अङ्गिराः ) द्वियज्ञोपवीतञ्च ग्रन्थिं मध्येतु कारयेत् ॥
षड़ङ्गुल प्रमाणं वै वद्धयित्वा तु यत्नतः ॥ ३१ ॥
श्वेतसूत्रं भवेद्यत्र ब्रह्ममुद्रा प्रकीर्त्तिता ॥
( मुद्रान्तराणि ) ब्रह्मधेनुस्तथा शङ्खः परशुर्नाग एव च ॥
पञ्चमुद्राः समाख्याताः स दण्डो धारयेद्यतिः ॥ ३२ ॥
नागमुद्रा शङ्खमुद्रा धेनुमुद्रा तथैवच ॥
ब्रह्मपरशुमुद्रेच पञ्चमुद्राः प्रकीर्त्तिताः ॥ ३३ ॥
नागमुद्रा त्वधोधार्य्या धेनुमुद्रा च मध्यतः ॥
तृतीये दण्डभागे च धार्य्या परशुमुद्रिका ॥ ३४ ॥

परशुमुद्रासंप्रदाय कारिकाः ॥

षोड़शाङ्गुल विस्तीर्णं दीर्घञ्च षोडश त्रयम् ॥

चतुरङ्गुल प्रमाणेन विस्तीर्णा दीर्घितं कृतम् ॥ ३५ ॥
मध्यपल्लवमाछाद्य ततस्तद्द्विगुणं कृतम् ॥
पुनस्तद्द्विगुणं कुर्य्यात् परशुमुद्राविधीयते ॥ ३६ ॥
संप्रदाय विधानेन क्रियते दण्डसूत्रकम् ॥
यज्ञोपवीत सूत्रश्च चतुर्व्विंशति सङ्ख्यकैः ॥ ३७ ॥
दण्ड प्रशंसा ॥ एतल्लक्षणसंयुक्तो दण्डः सुदर्शनो भवेत् ॥
धारयेद्दृश्यते भक्तैः कालदण्डात् प्रमुच्यते ॥ ३८ ॥
मनो वाक्काय दण्डाश्च वहूदके शुचिस्मृताः ॥
वाग्दण्डो हन्ति वै ज्ञानं मनोदण्डः परागतिम् ॥ ३९ ॥
कर्म्मदण्ड स्त्रील्लोकांश्च हन्यादपरिरक्षितः ॥
एकश्च ज्ञानदण्डश्च हंसेपि युज्यते वुधैः ॥ ४० ॥
ऊर्द्ध्वपुण्ड्रश्चोर्द्ध्वरेता ऊर्द्ध्वदण्डोर्द्ध्व योगवित् ॥
स ऊर्द्ध्व पदमाप्नोति यतिरूर्द्ध्वचतुष्कवान् ॥ ४१ ॥
दन्ताः श्वेता नखा श्वेताः श्वेताश्च व्रह्ममुद्रिकाः ॥
कटिपुष्पं दण्डवस्त्रं पञ्चश्वेताः प्रकीर्त्तिताः ॥ ४२ ॥
गन्धर्व्वा मानवा देवाः पितरो दण्ड संस्थिताः ॥
अतस्त्वास्थापयिष्यामि व्रह्ममुद्रे नमोस्तुते ॥ ४३ ॥
व्रह्ममुद्राङ्कितो दण्डः सर्व्वकाले शुचिःस्मृतः ॥
भिक्षायामटन श्चैव न दोषो मनुरव्रवीत् ॥ इति। ॥ ४४ ॥

## * अथ व्रह्ममुद्रा सहित दण्ड संस्कारः *

पुरुष सूक्तेन मन्त्रेण विप्रहस्ते शुभैर्जलैः ॥
प्रतिष्ठांकारयेद्विद्वान् शङ्खाभिषेचनैःसहः ॥ ४५ ॥
( अत्रप्रयोगः ॥ शङ्खोदकेनाष्टोत्तरशतप्रणवेन पुरुष-

सूक्तेन केशवादि चतुर्विंशति नामभिरभिविश्य ॥
ततो ब्राह्मण हस्तस्थंदण्डं प्रति सुरभि मुद्रां प्रदर्श्य ।
॥ प्रार्थनामन्त्रः ॥ सखामां गोपाय इति पूर्व्वोक्तः ॥ ४६ ॥

विष्णुहस्ते यथा चक्रं शूलं शिवकरे यथा ॥
इन्द्रहस्तेयथा वज्रं तथा दण्डो भवेद्यमे ॥ इति ॥ ४७ ॥
पूर्व्वाभिमुखः सन् प्रणवेन दण्डग्रहणं कुर्य्यात् ॥
अदण्डो नैव तिष्ठेत यतिः कुत्रचिदात्मवान् ॥ ४८ ॥
यदि तिष्ठेत् प्रतिदिनं प्राणायामशतं चरेत् ॥
दण्डत्यागं न कुर्वीत यावत् प्राण विधारणम् ॥ ४६ ॥
आचार्यै विंहितो मार्ग स्तत्त्यागी पतितो भवेत् ॥
दण्डत्यागं न कुर्व्वीत प्रमादेन यतिः क्वचित् ॥ ५० ॥
यदि त्यागश्चैव कुर्य्यात् पुन र्नैव च धारयेत् ॥
प्रमादेन च तं धृत्वा यतिर्भ्रष्टो न संशयः ॥ ५१ ॥
शतजन्म भवेच्छूद्रः संशयं नात्र कारयेत् ॥

॥ कदाचिद्भूमौ पतिते ग्रहणमन्त्रः ॥

प्रमादाद्यदि चीणात्वाद्दण्डः पतति भूतले ॥
उत्तिष्ठेति च मन्त्रेण गृह्णीयाद्विधि पूर्व्वकम् ॥ ५२ ॥
उपप्रयन्तु मरुतः सुदानव इन्द्रप्राशुर्भवा स च ।
उत्तिष्ठ देवदेवेश उत्तिष्ठ दण्ड देवते ।
ऋषिभिर्मुनिभिर्वाथ गन्धर्व्वाणां तथैवच ॥ ५३ ॥
उत्तिष्ठोत्तिष्ठ भगवन् नारायण जगत्पते ।
दण्डरूपिमहाविष्णो प्रसीद पुरुषोत्तम ॥ ५४ ॥
हरिमुद्रे ब्रह्ममुद्रे शंखमुद्रे नमोऽस्तुते ॥

अकारोकारमकारमुद्रे तुभ्यं नमो नमः ॥ ५५ ॥
दण्डात्मनो स्तु संयोगः सर्व्वदैव विधीयते ॥
न दण्डेन विना गच्छेदूगृहाद्वापि गृहान्तरम् ॥ ५६ ॥
इदं वचनं ग्राम्य विषयं । प्रवेश निर्गमे च विशेषः ।
माता पित्रा समो दण्डो भ्रात्रा च गुरुणा तथा ।
पथि साधनहेतुश्च हरिमुद्रे नमोऽस्तुते ॥ ५७ ॥
द्वाराद्वहि र्वामपादं दण्डमूलं पुरो दधत् ।
ततो निर्गत्य विप्रादीन् दृष्ट्वा दक्षिणतो ब्रजेत् ॥ ५८ ॥
वामपादश्च दण्डाग्रे प्रवेशे पुरतःस्थिते ।
सङ्गच्छन्विपरीतश्च इति शौनक आह च ॥ ५९ ॥
( तीर्थे दण्डलोड़नाद्याह ॥
तीर्थाभिवादको दण्डमूलाग्राभ्यामनुक्रमात् ।
अपः स्पृशेदभिगमे निर्गमे तद्विपर्य्ययात् ॥ ६० ॥
अग्रे सप्ताङ्कितं कृत्वा दण्ड मूलेन चाङ्कितम् ।
एवं त्रिभि स्त्रिभिः कृत्वा तीर्थे वन्द्यादनुक्रमात् ॥ ६१ ॥
मूले जलमधः प्रोच्य अग्रे शिरसि धारयेत् ।
दण्डञ्च करपात्रञ्च न भूम्यां स्थापयेदूयतिः ॥ ६२ ॥
आर्द्रमुद्रां ततो वध्वा दण्डमूलेतु तर्पयेत् ।
ततो दण्डस्य मध्ये तु प्रणवेनैव तर्पयेत् ॥ ६३ ॥
द्विषड्वारं तथाग्रेतु तर्पयित्वा समुत्थितः ।
॥ अन्यच्च ॥ सुरास्तिष्ठन्तिदण्डाग्रे दण्डमूलेतु पूर्व्वजाः६४
प्रतिग्रन्थिषु गन्धर्व्वा मध्ये तिष्ठान्ति मानवाः ॥
अस्माकन्तु कुले जाता नानागोत्र समुद्भवाः ॥ ६५ ॥

ते सर्व्वे तृप्ति मायान्तु दण्ड सम्बन्धि चारिणः ॥
आदौ मूले तथाग्रे तु मध्ये द्वादशवारतः ॥ ६६ ॥
त्रयंत्रयन्तु ग्रन्थिषु पूर्व्वमध्ये द्विवारतः ॥
दण्डस्याग्रे च तन्मूले द्वादश प्रणवैर्जलैः ॥ ६७ ॥
तर्पणञ्च ततः पश्चाल्लोड़नं मार्जनं तयोः ॥
कृत्वा गुर्व्वर्कतोयानां वन्दनं प्रणवेन च ॥ ६८ ॥
शिर आच्छाद्य कौपीनं मन्दं मन्दं मठं व्रजेत् ॥
( वहिर्गमने ) क्रतुः ॥ विनादण्डेन पात्रेतु न गच्छेदयति-सत्तमः ॥ भिक्षाकाले दण्डमेकं नोदपात्रं कदाचन ॥ ६९ ॥
॥ अत्रिः ॥ दण्डं विहाय गृह्णानो भिक्षां द्वादश धारयेत् ॥
वहिर्दण्डं प्रतिष्ठाप्य गृह्णानः षोड़शैवतु ॥ ७० ॥
अदण्डो न गृहं गच्छेदिषुक्षेपत्रयादृते ॥
यदि गच्छेत् प्रतिगृहं प्राणायामशतं चरेत् ॥ ७१ ॥
संन्यस्ताखिलकर्म्मापि पितुर्वन्द्योहि मस्करी ॥
सर्व्ववन्द्येन यतिना प्रसूर्वन्द्या प्रयत्नतः ॥ ७२ ॥
तामुद्दिश्य गयाक्षेत्रम चिरञ्चावलंव्यताम् ॥
( पुनस्तत्रैववायुपुराणे दण्डव्यवधाने प्रायश्चित्तमाह )
दण्डात्मनोस्तु चण्डाले र्व्यवधानेन भिक्षुकः ॥ ७३ ॥
प्राणायाम शतं कुर्य्यात् मुद्राभेद स्तथैवच ॥
शूद्रेण व्यवधानेतु प्राणायामा स्तु षोड़श ॥ ७४ ॥
द्वादशाष्टौच चत्वारो विट्क्षत्रिय द्विजोत्तमैः ।
भग्नदण्डादिकं चैव जलेऽगाधेक्षिपद्यतिः ॥ ७५ ॥
मद्यमूत्र पुरीषैश्च शुक्रकश्मल शोणितैः ॥

स्पृष्टं दण्डं त्यजेद्भिक्षुः शेषैः संस्कार मर्हतीति ॥ ७६

आत्महस्तेयदादण्ड स्तदादोषो न विद्यते ॥

चाण्डालादिभिः स्पृष्टोऽपि दोषभाक् न भवतीति ॥ ७७ ॥

व्यवधाने मतान्तरमाह ॥

शुद्रस्त्रीव्यवधानेन प्राणायामत्रयं चरेत् ॥

श्वखरोष्ट्रान्तर्गमने द्वादश प्राणसंयमाः ॥ ७८ ॥

जलान्तरे च क्षिप्तस्य व्यवधाने न दोषभाक् ॥

तथाकाशेऽपि क्षिप्तस्य व्यवधाने न दोषभाक् ॥ ७९ ॥

कुल्याप्रवाहान्तरितं प्राणायामांश्छन्नश्चरेत् ॥

महानद्यान्तरायेतु मुद्राभेदो विधीयते ॥ ८० ॥

विच्छिन्ने दूषिते वापि वध्नीयाद्ब्रह्ममुद्रिकाम् ॥

चातुर्म्मास्यान्तरे ये तु न वध्नीयाद्यतिः क्वचित् ॥ ८१ ॥

सिक्थवर्ज्जं तदाश्नायात् प्राणयात्रार्थमादृतः ॥

अनध्याये चापराह्णे न वध्नीयात् कदाचन ॥ ८२ ॥

यतीनाञ्च त्रयोदण्डा एकस्थाने न च क्षिपेत् ॥

कदाचित् स्थापिता स्तेषां पुन र्मुद्रा विधीयते ॥ ८३ ॥

तान् इतिशेषः । अत्रेयं व्यवस्था ॥ हस्तस्थितदण्डे चण्डालादिभिर्व्यवधानमेव न संभवति । जलाम्बरादिषु क्षिप्ते न कश्चिद्दोष भाग् भवेदित्युक्तत्वात् । जलाम्बरादि स्थापितं तु तद्दोषावहमेव नास्ति । तस्मात् केवल भूमि स्थापित दण्डस्यैवा त्मन श्चाण्डालादि कृतव्यवधानमेव दोषावहं । तत्रैव चोक्तं प्रायश्चित्त मिति मन्तव्य मिति ॥

पूर्व्व भागः समाप्तः ॥

# यतिधर्म्मनिर्णय संन्यासदर्पण पूर्व्वभागस्य
## शुद्धाशुद्ध पत्रं

| अशुद्धं | शुद्धम् | पृष्ठं | पंक्ति | अशुद्धं | शुद्धं | पृष्ठं | पंक्तिः |
|---|---|---|---|---|---|---|---|
| भिक्षु | भिक्षू | १ | ६ | अस्थु | अस्थू | २१ | १ |
| मुक्तिः | मुक्तिः | १ | १५ | तस्थूं | तस्थू | २१ | ४ |
| याश्चयाश्च | याश्च | २ | १२ | मनि | मुनि | २१ | १४ |
| इवि | इव | २ | १४ | ह्राहि | ह्रादि | २२ | २१ |
| शुन्यं | शून्यं | २ | १७ | अम | अस | २२ | २१ |
| इवरे | इवरे | ५ | १ | श्रेष्ट | श्रेष्ठ | २३ | १५ |
| भूवन् | भूमन् | ५ | ११ | ज्यात्या | जात्या | २३ | १५ |
| धम्मा | धर्म्मा | ६ | ११ | श्रुय | श्रूय | २५ | १६ |
| भक्ति | भुक्ति | ७ | २ | वाल्मी | वल्मी | २६ | ५ |
| नकु | नकू | ७ | १२ | क्षार | क्षर | २६ | ६ |
| सर्व्वानि | सर्व्वाणि | ८ | २१ | गारू | गारु | २७ | १० |
| कर्म्म | कर्म्मा | ११ | ४ | योगिं | योगं | २७ | १२ |
| सुत | सूत | ११ | १० | प्राप्त | प्राप्तु | २७ | १६ |
| संन्यासत्यगे | संन्यासो | २२ | १० | नीप्र | नीपि | ४१ | १९ |
| श्रुय | श्रूय | १२ | १७ | स्तेस्यू | स्तेस्यु | ४१ | २१ |
| भुत्वा | भूत्वा | १२ | १८ | कुल | कूल | ४१ | २३ |
| वहु | वहू | १३ | १२ | न्तग्र | न्तरप्र | ४८ | १९ |
| ह्रासु | ह्रासू | १३ | २३ | पद्य | पद्ये | ४९ | ५ |
| नुनां | सूनां | १५ | १ | धूर्द्ध | धूर्द्धंथ | ४९ | १० |
| थैका | थैक | १५ | ११ | राग्य | राग्या | ५१ | २२ |
| शंकारा | शंकर | १६ | १८ | त्युंनं | त्युनै | ५२ | २१ |
| सिद्धि | सिद्धिं | १७ | १५ | वेद | वेदमावृत | ५२ | २२ |
| ग्निमहो | ग्निहो | १७ | २० | त्यत्वं | त्यत्व | ५३ | ८ |
| क्षुनां | चूर्णां | १८ | ७ | नित्य | नित्यां | ५३ | १५ |
| श्रोत | श्रौत | १९ | २ | वज्ञ | वज्ञु | ५३ | १७ |
| दर्शिणो | दर्शिनो | १९ | १५ | प्राणा | प्राणि | ५३ | १९ |
| निष्कि | निष्कि | २० | २ | वेयं | वेयः | ५३ | २० |
| प्राप्तमि | प्राप्तुमि | २० | १० | लक | लका | ५३ | २३ |
| धत्त | वृत्त | २० | ११ | लापि | लाभपि | ५३ | २३ |
| सज्य | सज्ज | २० | १३ | रति | रति रिति | ५६ | १४ |
| सज्य | सज्ज | २० | १६ | तद | तत् | ५८ | ३ |

| अशुद्धं | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धं | शुद्धं | पृष्ठम् | पंक्तिः |
|---|---|---|---|---|---|---|---|
| वग्र | वगृ | ५९ | १२ | श्रोत | श्रौते | ७० | १६ |
| माप्तः | माप्ता | ५९ | १८ | ध्याय | ध्याप | ७० | १७ |
| पाश्रनु | पात्नु | ६० | १ | वैधू | वैधु | ७० | १७ |
| तीतो | तीता | ६० | १२ | णाज्यं | णाज्य | ७० | १८ |
| शेत | श्वेत | ६० | १५ | श्रोते | श्रौते | ७० | १९ |
| ग्रहे | गृहे | ६० | २० | नाधि | नधि | ७० | १९ |
| ग्रह | गृह | ६० | २३ | वहू | वहून् | ७२ | ७ |
| त्तिक | त्तिकः | ६० | २३ | चार्य्य | चर्य्यः | ७२ | ९ |
| णोप्च | णोंप्च | ६१ | २ | न्धरा | न्धर | ७२ | २१ |
| णाश्रात्म | णात्म | ६१ | २१ | मेता | मेत | ७३ | १ |
| प्रक्त | प्राक्त | ६१ | २२ | पष्टो | पष्टा | ७३ | २ |
| दीना | दीनां | ६३ | ८ | स्यति | स्यते | ७३ | ९ |
| कासं | कानांसं | ६४ | १२ | दत | दतः | ७३ | १३ |
| घानां | घानाः | ६४ | १९ | त्रयं | त्रय | ७३ | १८ |
| रेगु | रेगुं | ६५ | ४ | कर्म्म | कर्म्मा | ७४ | १४ |
| चका | चक | ६५ | १२ | चका | चक | ७५ | ३ |
| भूत्वा | कृत्वा | ६६ | ११ | वन्धू | वन्धु | ७५ | ४ |
| माप्तः | माप्ता | ६७ | २ | वहु | वहू | ७५ | १७ |
| भूत्वा | कृत्वां | ६७ | ५ | कश्च | कस्य | ७५ | १७ |
| भूत्वा | कृत्वां | ६७ | १३ | मुदा | मृदा | ७६ | ११ |
| चौरं | चौर | ६७ | १५ | श्रूते | श्रुते | ७६ | १८ |
| युक्त | युक्तः | ६७ | १६ | माधू | माधु | ७६ | २२ |
| भिक्षू | भिक्षु | ६७ | २१ | मुर्खो | मूर्खो | ७८ | २१ |
| भिक्षु | भिक्षू | ६७ | २१ | विद्या | विंद्या | ७९ | १८ |
| सेतू | संयुः | ६८ | ७ | दात्मा | दात्म्यां | ८० | ६ |
| पद्रु | पद्यु | ६८ | २१ | र्द्धत | द्धर्म्म | ८० | १२ |
| श्रामो | श्रमो | ६९ | ४ | पेच | पेचः | ८० | १८ |
| धर्म्म | धर्म्मं | ६९ | ७ | दिना | दीना | ८१ | ७ |
| श्रधि | अधी | ६९ | १० | राग्य | राग्यं | ८२ | ८ |
| इंम | इंमः | ७० | ५ | वहु | वहू | ८२ | १८ |
| ता | तायां | ७० | ७ | वहु | वहू | ८२ | २१ |
| पच | पचः | ७० | ८ | धर्म्म | धर्म्मान् | ८३ | २ |
| नैष्ठि | नैष्ठि | ७० | १५ | चाचा | चा | ८३ | ७ |

| अशुद्धं | शुद्धं | पृष्ठम् | पंक्ति |
|---|---|---|---|
| श्रेष्ठं | श्रष्ठ | ८३ | ९ |
| वहू | वह्नू | ८५ | १३ |
| विप्र | चिप्रां | ८५ | १७ |
| ह्रात्म | ह्रात्मा | ८८ | १८ |
| रहं | रमहं | ८९ | १४ |
| कुम्मं | कूर्म्मे | ९० | १६ |
| पृर्व्वं | पूर्व्वं | ९१ | १४ |
| नूत्ते | नूक्तेः | ९२ | ३ |
| पट | पट्ट् | ९४ | १० |
| यजु | यंजु | ९४ | १२ |
| यंना | यंनां | ९४ | १६ |
| मंच | मंव | ९५ | ३ |
| शुद्रः | शूद्रः | ९५ | १४ |
| तीया | तय | ९५ | १६ |
| भूंवि | भूंरि | ९६ | ९ |
| कन्या | कन्थां | ९६ | १९ |
| प्रद | प्राद | ९७ | ९ |
| च्चया | च्चाय | ९७ | १३ |
| म्यक्ते | म्यक्त्वे | ९७ | १४ |
| पढ्या | पाढ्यां | ९७ | १८ |
| पच्चा | रच्चा | ९८ | २१ |
| यति | याति | ९९ | १ |
| यांक्ति | योरो | ९९ | ४ |
| शृएय | शृएवा | ९९ | १८ |
| छत्या | छत्त्य | ९९ | २१ |
| ह्न्नै | ह्नन्नै | ९९ | २३ |
| न्द्रिय | न्द्रियः | १०१ | १९ |
| वर्हि | वर्हिः | १०२ | २ |
| हेतु | हेतुं | १०२ | ११ |
| वहु | वह्न | १०३ | २ |
| ह्नि | ह्नित्य | १०४ | २१ |
| ष्ठासेत् | ष्ठंत् | १०५ | ७ |
| दैक | तदैक | १०८ | २२ |
| किच्छ्रू | छ्रच्छ्रू | ११० | २२ |
| कामा | कामा। | १११ | १२ |
| ह्रता | ह्रता। | १११ | १९ |
| निष्ठा | निष्ठवा | १११ | १५ |
| भार्य्या | भार्य्यः | १११ | २० |
| परि | पारि | १११ | २१ |
| र्म्मुंक्तः | र्म्मुक्तः | ११२ | ३ |
| तृष्यां | तृष्णयं | ११३ | ९ |
| दंह | दंहं | ११४ | १५ |
| श्यात्मा | श्यात्म | ११४ | २० |
| ह्राप्रा | ह्राप्र | ११५ | १५ |
| हया | हयां | ११५ | २१ |
| कर्त्ता | कर्त्रा | १२० | १० |
| कारी | कारि | १२२ | ४ |
| सिद्धः | सिद्धम् | १२२ | ५ |
| न्यान्य | न्यान | १२२ | १० |
| पदा | पाद | १२२ | १२ |
| ष्टयः | ष्टय | १२२ | १३ |
| श्यप्रभृतयः | श्यांश्यः | १२२ | १४ |
| र्विरो | विरो | १२२ | २३ |
| वैश्यानां | वैश्य | १२४ | ७ |
| ङ्गिरः | ङ्गिराः | १२३ | १४ |
| वैरा | वैरा | १२५ | ३ |
| श्यामा | श्यमा | १२५ | १६ |
| कूत | कुत | १२६ | ९ |
| पती | प्रती | १२६ | ११ |
| लाय | लया | १२६ | १४ |
| चार | चर | १२८ | १७ |
| शां,श्च | शांच | १२९ | १७ |
| नंप | नेपं | १३० | ३ |
| त्याय | त्यान | १३० | १४ |
| र्म्मन तत्र | र्म्म तत | १३२ | ४ |
| चाद | चोद्र | १३२ | १५ |

| अशुद्धं | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धं | शुद्धं | पृष्ठम् | पंक्तिः |
|---|---|---|---|---|---|---|---|
| वग्र | वगृ | ५९ | १२ | श्रोत | श्रोते | ७० | १६ |
| माप्तः | माप्ता | ५९ | १८ | ध्याय | ध्याप | ७० | १७ |
| प्राग्नु | प्रानु | ६० | १ | वैधू | वैधु | ७० | १७ |
| तीतो | तीता | ६० | १२ | ग्राज्यं | ग्राज्य | ७० | १८ |
| शेत | श्वेत | ६० | १५ | श्रोते | श्रौते | ७० | १९ |
| ग्रेह | गृहे | ६० | २० | नाधि | नधि | ७० | १९ |
| ग्रह | गृह | ६० | २३ | वह्न | वह्नन् | ७२ | ७ |
| त्तिक | त्तिकः | ६० | २३ | चार्य्य | चर्य्यः | ७२ | ९ |
| ग्रोप्व | ग्रोप्व | ६१ | २ | न्धरा | न्धर | ७२ | २१ |
| ग्राम्रात्म | ग्रात्म | ६१ | २१ | मेता | मेत | ७३ | १ |
| प्रक्त | प्राक्त | ६१ | २२ | पष्टो | पष्टा | ७३ | २ |
| दीना | दीनां | ६३ | ८ | स्यति | स्यते | ७३ | ९ |
| कासं | कानांसं | ६४ | १२ | दत | दतः | ७३ | १३ |
| धानां | धानाः | ६४ | १९ | त्रयं | त्रय | ७३ | १८ |
| रंगु | रंगुं | ६५ | ४ | कर्म्मं | कर्म्मा | ७४ | १४ |
| चक्रा | चक्र | ६५ | १२ | चक्रा | चक्र | ७५ | ३ |
| भूत्वा | कृत्वा | ६६ | ११ | वन्धू | वन्धु | ७५ | ४ |
| माप्तः | माप्ता | ६७ | २ | वह्नु | वह्न | ७५ | १७ |
| भूत्वा | कृत्वां | ६७ | ५ | कश्च | कस्य | ७५ | १७ |
| भूत्वा | कृत्वां | ६७ | १३ | मुदा | मृदा | ७६ | ११ |
| चौरं | चौर | ६७ | १५ | श्रूते | श्रुते | ७६ | १८ |
| युक्त | युक्तः | ६७ | १६ | माधू | माधु | ७६ | २२ |
| भिक्षू | भिक्षु | ६७ | २१ | मुर्खो | मूर्खो | ७८ | २१ |
| भिक्षु | भिक्षू | ६७ | २१ | विद्या | र्विद्या | ७९ | १८ |
| सेतू | संयुः | ६८ | ७ | दात्मा | दात्म्यां | ८० | ६ |
| पद्रु | पद्मु | ६८ | २१ | र्द्धत | द्धर्म्म | ८० | १२ |
| श्रामो | श्रमो | ६९ | ४ | पेच | पेचः | ८० | १८ |
| धर्म्मं | धर्म्मं | ६९ | ७ | दिना | दीना | ८१ | ७ |
| अधि | अधी | ६९ | १० | राग्य | राग्यं | ८२ | ८ |
| हंम | हंमः | ७० | ५ | वह्नु | वह्न | ८२ | १८ |
| ता | तायां | ७० | ७ | वह्नु | वह्न | ८२ | २१ |
| पच | पचः | ७० | ८ | धर्म्मं | धर्म्मान् | ८३ | २ |
| नैष्ठि | श्रैष्ठि | ७० | १५ | चाचा | चा | ८३ | ० |

| अशुद्धं | शुद्धं | पृष्ठम् | पंक्ति | अशुद्धं | शुद्धं | पृष्ठम् | पंक्ति |
|---|---|---|---|---|---|---|---|
| श्रेष्ठं | श्रेष्ठ | ८३ | ९ | किच्छ्र | कृच्छ्र | ११० | २२ |
| वह्न | वह्न | ८५ | १३ | कामा | कामा। | १११ | ११ |
| चिप्र | चिप्रां | ८५ | १७ | हता | हता। | १११ | ११ |
| ह्यात्म | ह्यात्मा | ८८ | १८ | निष्ठा | निष्ठवा | १११ | १५ |
| रहं | रमहं | ८९ | १४ | भार्य्या | भार्य्या | १११ | २० |
| कुम्मं | कूर्म्मं | ९० | १६ | परि | पारि | १११ | २१ |
| पूर्व्वं | पूर्व्वं | ९१ | १४ | र्म्मुक्त | र्म्मुक्तः | ११२ | ३ |
| नूक्ते | नूक्तेः | ९२ | ३ | तृष्यां | तृष्यं | ११३ | ९ |
| पट | पट् | ९४ | १० | देंह | दंहं | ११४ | १५ |
| यजु | यंजु | ९४ | १२ | श्यात्मा | श्यात्म | ११४ | २० |
| यंना | यंनां | ९४ | १६ | ह्याप्रा | ह्याप्र | ११५ | १५ |
| मंच | मंत्र | ९५ | ३ | ह्या | ह्यां | ११५ | २१ |
| शुद्रः | शूद्रः | ९५ | १४ | कर्त्ता | कर्त्रा | १२० | १० |
| तीया | तय | ९५ | १६ | कारी | कारि | १२२ | ४ |
| भूंचि | भूंरि | ९६ | ९ | सिद्धः | सिद्धम् | १२२ | ५ |
| कन्या | कन्यां | ९६ | १९ | न्यान्य | न्यान | १२२ | १० |
| प्रद | प्राद | ९७ | ९ | पदा | पाद | १२२ | १२ |
| च्चया | च्चाय | ९७ | १३ | ष्टयः | ष्टय | १२२ | १३ |
| स्यक्ते | स्यक्त्वे | ९७ | १४ | स्यप्रभृतयः | स्यांख्यः | १२२ | १४ |
| पढ्या | पाढ्यां | ९७ | १८ | विरो | विरो | १२२ | २३ |
| पच्चा | रच्चा | ९८ | २१ | वैश्यानां | वैश्य | १२४ | ७ |
| यति | याति | ९९ | १ | ङ्गिरः | ङ्गिराः | १२४ | १४ |
| यांक्ति | यांते | ९९ | ४ | वेरा | वैरा | १२५ | ३ |
| शृयघ | शृयया | ९९ | १८ | च्यामा | च्यमा | १२५ | १६ |
| कृत्त्या | कृत्य | ९९ | २१ | कूत | कुत | १२६ | ९ |
| हन्ने | हेन्ने | ९९ | २३ | पती | प्रती | १२६ | ११ |
| न्द्रिय | न्द्रियः | १०१ | १९ | च्चाय | च्चया | १२६ | १४ |
| वह्नि | वह्निः | १०२ | २ | चार | चर | १२८ | १७ |
| हेतु | हेतुं | १०२ | ११ | ग्रां,श्च | ग्रांच | १२९ | १७ |
| वह्न | वह्न | १०३ | २ | नेप | नैपं | १३० | ३ |
| ह्नि | ह्नित्य | १०४ | २१ | त्याय | त्यान | १३० | १४ |
| ष्टासेत् | ष्ठेत् | १०५ | ७ | र्म्मेन तत्र | र्मं तत | १३२ | ४ |
| देक | तदेक | १०८ | २२ | चोद | चोद् | १३२ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठम | पंक्तिः | अशुद्धम् | सुद्धम् | पृष्ठम् | पंक्ति। |
|---|---|---|---|---|---|---|---|
| रोद्ध | रांद्धु | १३४ | १७ | इदं | इद | १७२ | २३ |
| रमन | रमता | १३६ | ६ | निव | निर्वं | १७५ | २३ |
| ब्रह्म | ब्रंह्म | १३६ | ८ | तृष्णाया | तृष्णाय | १७७ | ९ |
| धितो | धिते | १३६ | १५ | संन्या | संन्य | ,, | २० |
| विचाक्र | विचाचान्धिक्र | १३६ | १९ | वना | वाना | १७९ | २ |
| फेच | केन | १३७ | १६ | अन्त | अन्तः | ,, | ६ |
| नापि | ना अपि | १३७ | २० | सक्नो | शक्नो | ,, | ७ |
| तिन | तिर्न | १३८ | ६ | न्यर्था | न्यार्था | ,, | ११ |
| परि | पारि | १३८ | १४ | धर्म्मं | धर्म्मो | ,, | १२ |
| कत्त | कत्व | ,, | १५ | शितं | शितः | ,, | ,, |
| परि | पारि | ,, | १६ | प्रभृ | प्रभृ | १८१ | १ |
| ग्राज | ग्रज | ,, | १७ | न्यास | न्यासः | ,, | ,, |
| ग्राज | ग्रज | ,, | २० | मासः | मास | १८२ | १२ |
| चित्ता | चिता | १४० | ७ | क्रत | कृत्य | १८३ | १ |
| यन् | यन | १४१ | १० | साम् | समु | ,, | १३ |
| जप | जपो | १४२ | २ | निर्दे | निर्द | ,, | २० |
| होम | होमो | ,, | ,, | पोदं | पादं | १८४ | २० |
| सिना | सिताना | १४४ | ११ | वर्ज्जे | वज्ज | १८६ | ११ |
| धर्म्मं | धर्म्मं | १४५ | १६ | सुस | सुसं | १९१ | ८ |
| वह् | वहु | १४६ | ५ | गृस्थे | गृहस्थे | १९२ | ८ |
| परि | परी | ,, | १८ | राज्य | रज्या | १९६ | १३ |
| खोमा | खोम | १४८ | ८ | स्थिताः | स्थितः | ,, | १८ |
| शुश्रु | शुश्रू | १५० | ६ | भुक्ति | भुक्त | १९७ | १० |
| च्युताः | च्युताः | १५५ | ३ | वर्ज्जे | वज्ज | ,, | १० |
| यति | यतीति | ,, | १२ | नेष्य | निर्ष्य | १९८ | ९ |
| नाधि | नूचि | ,, | १५ | निर्दे | निर्द | ,, | २१ |
| सुम् | सुमु | १५६ | ११ | न्त्राजज | न्त्रानूज | २०० | ९ |
| गाह | गार्ह | १५९ | १० | ष्ठाना | ष्ठानां | ,, | १५ |
| मेयो | श्रेये | ,, | १२ | सन्मो | सम्मो | २०१ | ६ |
| वर्यो | वयर्थे | १६४ | ३ | भ्यस्ये | भ्यसे | ,, | १५ |
| वर्यो | वयये | १६९ | १४ | योगी | योगि | २०२ | १८ |
| शक | शूक्त | १७० | २३ | निपी | नीपि | २०३ | ४ |
| मीप | मीपे | १७१ | ९ | दृप्ट्या | दृष्ट्वा | २०६ | १ |